श्रीः

# समर्पणम्

आगमसंविदमिमां
श्रीकाशीविश्वेश्वराय
श्रद्धातिशयेन समर्पयन्
हर्षप्रकर्षमनुभवन् नमामि साम्बं
शिवमेतयोर्दासोऽहम्।।

वि.सं. २०६४

कमलेश झा

डॉ. कमलेश झा

# विषयानुक्रमणी

## ॥ द्वितीयो विमर्शः॥



## ॥ तृतीयो विमर्शः॥

## ॥ चतुर्थो विमर्शः॥



# शुभाशीः

**चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्।।**

निगमागममूला संस्कृतिः मानवान् मातेव राक्षति। एतत्प्रसूता अध्यात्मविद्या किल मानवेषु परमार्थं वितरति। श्रुतिमूला या अद्वयद्वयी सा सूक्ष्मतया तावद् अवगन्तुं न पार्यते याावद् युक्तितर्कमूला अद्वयद्वयी विज्ञप्तिशून्याऽभिधाना सम्यग् नाऽधिगता भवति। श्रौती सदद्वयद्वयी ब्रह्माद्वय-शिवाद्वयाऽभिधाना सम्यगधिगता सती आगमसंविदः पराऽहन्तया साक्षात्काराय कल्पते। तदेवं महार्थसम्पदवाप्तिफलम् आगमसंविदभिधानं ग्रन्थरत्नं सर्वशास्त्रविशारदेन मम प्रियेण विदुषा डॉ. कमलेशझाशर्मणा व्यधायि। गुरुशास्त्रवचनमनुसरता साधकेन संविदद्वयपरिशीलनेन आगमसंविन्महार्थः सुनिभृतम् अवाप्यते। तदहम् एतस्य ग्रन्थरत्नस्य प्रचारं महाविदुषोऽस्य कल्याणञ्च भगवन्तं श्रीविश्वेश्वरं याचे।

**न शिवेन विना देवी न देव्या च विना शिवः।**
**नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव ।।**

स्वामी चिन्मयानन्द सरस्वती

वि.सं. २०६४ **(स्वामी चिन्मयानन्द-सरस्वती)**

ऊर्ध्वाम्नाय-श्रीकाशीसुमेरुपीठाधीशो-जगद्गुरुशंकराचार्यः
वाराणसी-५

# आशीर्वचनम्

काशीहिन्दूविश्वविद्यालये संस्कृतविद्याधर्मविज्ञानसङ्काये धर्मागमविभागस्य अध्यक्षपदमलङ्कुर्वद्भि; पण्डितप्रवरैः डॉ. कमलेशझाशर्ममहाभागैर्विरचितं आगमसंविद्नामकं ग्रन्थरत्नमवलोक्य प्रमुदितान्तरङ्गा वयम्।

भगवतः शिवस्य निःश्वासभूता वेदाः यथा श्रुतिशब्देन संकीर्त्यमानाः सन्ति तथैव तदीया वाचः आगमाश्च श्रुतिशब्देनैव संबोध्यन्ते। वेदवाक्यानि व्याख्यातुं यथा विभिन्नानि वैदिकप्रस्थानानि प्रवृत्तानि तथैव आगमवचनानि व्याख्यातुं द्वैतम्, द्वैताद्वैतम्, विशिष्टाद्वैतम्, शक्तिविशिष्टाद्वैतम् अद्वैतञ्चेति विविधाः सिद्धान्ताः प्रवृत्ताः।

आगमिके प्रत्यभिज्ञादर्शनप्रस्थाने श्रीसोमानन्द-वसुगुप्त-उत्पलदेव-अभिनव-गुप्त-क्षेमराज-जयरथ-गोपीनाथकविराज-लक्ष्मणजूदेव-श्रीरामेश्वरझा-अमृतवाग्भव-श्रीकान्तिचन्द्र-बलजिन्नाथ-रामचन्द्र-व्रजवल्लभद्विवेदप्रभृतयःआचार्याः कृतभूरिप्ररिश्रमाः विश्रूयन्ते।

साम्प्रतम् ईश्वराद्वयवादे निरतिशयश्रद्धादरभाजो डॉ.कमलेशझामहोदयाः वादकथामाश्रित्य तदितरत्रिविधाद्वयसिद्धान्तानपि आञ्जस्येन **आगमसंविदि**ति ग्रन्थे तथा सन्निवेशयन्ति यथा चतुर्णामेषाम् अद्वैतप्रस्थानानां नितरां प्रथितानां सूक्ष्मं प्रस्थानभेदबीजं बुधसंविदुपारूढं स्फुटमवभासते। दर्शनानामन्योन्यं प्रवृद्धयोः प्रवाद-संवादयोर्महती संविदुपकारता कथमित्येतदपि ग्रन्थेऽस्मिन् साधु समाहितम्।

नितरां स्निग्धयोः शब्दाद्वैतशिवाद्वैतसिद्धान्तयोः पार्थक्यबिन्दूनपि श्रीझामहानुभावा रेखाङ्कितान् विधास्यन्तीति विश्वसिमः।

पण्डितप्रवराणां डॉ. कमलेशझाशर्मणां ग्रन्थरत्नस्य आगमसंविदः बुधजनसंसदि प्रचारं, ग्रन्थकर्तृणां दीर्घायुष्यं च भगवन्तं श्रीसाम्बविश्वेश्वरं प्रार्थयमाना वयं विरमामः।

इत्याशिषः।

चन्द्रशेखरशिवाचार्य

वि.सं. २०६४

**(डॉ. स्वामी चन्द्रशेखरशिवाचार्यः)**

श्रीमत्काशीज्ञानसिंहासनाधीशः

जङ्गमबाडीमठः, वाराणसी ।

# शुभाशंसा

ललितैः पदविन्यासैर्या नृत्यति विबुधवदनरङ्गेषु।
सच्छास्त्रवेदवाद्यैः सरस्वती तां नमस्यामः।।

भारतीय शास्त्रों में विद्या-विवेक की अधिष्ठात्री देवी सरस्वती का उद्दाम उल्लास दृष्टिगोचर होता है। वह हम मानवों को दैवीय गुणों से आपूरित करता है। विशेषकर अध्यात्म-शास्त्र खण्ड-दृष्टि से अखण्ड दृष्टि की ओर की जाने वाली हमारी यात्रा में मार्गदर्शन करता है। इसकी तीन धारायें प्रवाहित हैं- वेद, आगम एवं तार्किक। त्रिवेणी का महासंगम, भारतीय संस्कृति को आपूरित करने के साथ मानवता एवं सामाजिक समरसता की संरचना करता है। वस्तुस्थिति यह है कि चिन्मय शिवा के सहयोग से शाश्वत शिव अखण्ड-स्वरूप का त्याग किये बिना स्वयं में अनन्त पिण्ड-ब्रह्माण्डों के आनन्दमय उद्भावन व स्थापना के साथ विलापन की अद्भुत क्रीड़ा का सम्पादन करता है पर हमारी खण्ड-दृष्टि इन्हें दुःखहेतु के रूप में प्रस्तुत कर हमें बन्धन में डाल देती है। अतः शास्त्रकारों ने खण्ड-दृष्टि के विसर्जन पर बल दिया है। खण्ड-दृष्टि के विसर्जित होते ही प्रतिष्ठित होने वाला अद्वैतभाव हमें प्रभु एवं उनकी सृष्टि में शाश्वत आनन्द का दर्शन कराता है। इस तात्त्विक प्रतिपादन हेतु उपर्युक्त त्रिविध धारा में चतुर्विध अद्वैत की अवधारणा सुविदित है-

(१) तार्किक अश्रौतधारा- विज्ञानाद्वैत एवं शून्याद्वैत
(२) वैदिक-धारा-ब्रह्माद्वैत तथा (३) आगमिक धारा- ईश्वराद्वैत।

चतुर्विध उपर्युक्त अवधारणा के सहारे त्रिविध-धारा के समस्त प्रस्थान आगम-संविद्-महादेधि में विलीन होकर समरसता एवं पूर्णता को प्राप्त होते हैं।

खण्ड-दृष्टि से अखण्ड-दृष्टि की ओर अग्रसर होने के लिये उपर्युक्त अवधारणाओं का सामंजस्यपूर्ण विवेचन ''आगम-संविद्'' नामक ग्रन्थ में किया गया है। साथ ही व्यक्ति एवं समाज में पूर्णता एवं एकता की प्रतिष्ठा में संविद् के विविध पक्षों की उपादेयता का प्रांजल प्रतिपादन किया गया है। माध्यम के रूप में स्वीकृत संस्कृत भाषा की सरसता एवं प्रवाहमयता अत्यन्त मनोज्ञ है। ऐसी गवेषणा-पूर्ण रचना हेतु मैं डॉ० कमलेशझा, अध्यक्ष, धर्मागम विभाग, सं.वि.ध.वि., संकाय, काशी हिन्दू विश्वविद्यालय को साधुवाद करता हूँ।

विक्रम संवत्- २०६४

**(पंजाब सिंह)**
कुलपति, काशीहिन्दूविश्वविद्यालय

।।श्रीः।।

# नैवेद्यम्

राग, द्वेष, ईर्ष्या, मद-मात्सर्य आदि मनोविकार के कारण आनन्दमय ईश्वरसृष्टि भी बन्धन और कष्ट का कारण बन जाती है। बन्धन किसी को भाता नहीं है। अत: उससे छुटकारा पाने के लिए सदा से सुकृती मानव प्रयत्नशील रहे हैं। पर यह प्रयत्न शास्त्र एवं आचार्य के अनुसरण के बिना निरर्थक होता है। सार्थक-प्रयत्न व्यक्ति को साधक बना देता है। साधना के बल पर उसे अध्यात्म-जगत् में प्रवेश करने का अधिकार प्राप्त होता है। शनै:-शनै: संसार का राग छूटता है और ईश्वर का अनुराग साधक के हृदय में अङ्कुरित होता है।

आचार्य के मार्गदर्शन में आलोकित होता हुआ प्रकाशतत्त्व, विशिष्ट साधक को क्षण-भर में ही अहमात्मना प्रकाशमान होकर पूर्ण-शिवता की प्रत्यभिज्ञा करा देता है जबकि अन्य साधकों को जन्म-जन्मान्तर की साधना में लगाये रखता है। इस परमार्थ-तत्त्व को 'आगम-संविद्' नाम से सम्बोधित किया जाता है। संविद् के दो पक्ष होते हैं - प्रकाश एवं विमर्श, जिनकी अवधारणा अखण्ड संविद्रूप को परिभाषित करने हेतु की गयी है।

डॉ. झा ने अपनी इस रचना आगम-संविद् में स्वात्म-महेश्वर के साक्षात्कार हेतु चार अद्वय-सिद्धान्तों का आग्रह-मुक्त परिचय यथावत् प्रतिपादित किया है। मेरा विश्वास है कि पूज्य महामना के उद्यान में खिले इस कुसुम से सम्पूर्ण मानवसमाज को आमोदान्वित आनन्द उपलब्ध होगा। श्रीकाशी-विश्वेश्वर से डॉ. झा एवं उनकी रचना 'आगम-संविद्' की अभिवृद्धि-हेतु मेरी प्रार्थना है।


**(प्रो. अशोक कुमार कालिया)**

कुलपति

सम्पूर्णानन्द संस्कृत विश्वविद्यालय

वाराणसी-२२१००२


वि.सं.२०६४

## ।।श्रीः।।

# शोभनेयं संरचना

आगमसंविदाख्या रचना विमर्शचतुष्टयसंविभक्ता श्रीमता डॉ० कमलेशझाशर्मणा सम्यक् संनिबद्धा। अत्र प्रथमे विमर्शे प्रत्यभिज्ञाश्रियः सप्रमेयमैतिह्यं राराजते। द्वितीये विमर्शे द्वयं सौगतमद्वयं विवेचितम्, तृतीये चाद्वयद्वयसद्वपुः शिवः समाख्यातः। अन्तिमे चतुर्थे विमर्शे श्रीप्रत्यभिज्ञामोदेन संपूर्णा संविदियं पाठकानानन्दार्णवे संमूर्च्छितवती।

सततं प्रवर्तमानायां तन्त्रागमशास्त्रपरम्परायां गच्छता कालेन कश्मीरेषु लब्धजन्मना श्रीमता उत्पलदेवेन सामान्य-जनस्यापि हितमिच्छता आगमेभ्यो द्वैतवादमपास्य, अद्वयवादाङ्गीकृतमायावादं शक्तिवादतया परिगृह्य, क्षणिक-विज्ञानवादं च नित्यात्मेश्वरवादतया परिशील्य प्रत्यभिज्ञाशास्त्रं समुन्मीलितम्। तत्रेयं परम्परा साम्प्रतमप्यनारतं प्रवर्तते। सौभाग्यादस्माकमुत्तरे भारते काश्यां श्रद्धेयचरणैः श्रीमद्भिर्गोपीनाथकविराजमहोदयैः महामहोपाध्याय-आचार्य श्रीरामेश्वरझामहोदयैश्च, उत्तरप्रदेशराजधान्यां लक्ष्मणपुर्यां लखनऊ-नगरे कृतवसतिभिः पण्डितप्रवर डॉ कान्तिचन्द्रपाण्डेयमहोदयैश्च विषयेऽस्मिन् नूतना दृगुन्मीलिता। सर्वेषामेषां विदुषां यथायथं प्रवर्तन्ते स्वीयाः शिष्यपरम्पराः। आगमसंविदोऽस्या उन्मीलको वर्तते धन्यस्य यशस्यस्य आचार्य-रामेश्वरझामहोदयस्य शिष्यपरम्परा-शिखरायमाणो डॉ० कमलेशझाशर्मा। अस्या रचनायाः कृते वयमेतस्मै साधुवादान् वितरामः।

अत्र हि विदुषाऽनेन न केवलं तन्त्रागमशास्त्राणामैतिह्यम्, अपितु तत्र तत्र निबद्धानां दार्शनिकप्रमेयाणां तौलनिकमनुशीलनमपि सम्यगाचरितम्। चार्वाकसिद्धान्तानामपि दर्शनशास्त्रे समावेशः, शक्तिपातः, शुद्धाध्वा, कञ्चुकषट्कम्, विश्वमयो विश्वोत्तीर्णश्च शिवः, बन्धमोक्षव्यवस्था, प्रकाशविमर्शपदनिर्वचनम्, प्रत्यभिज्ञास्वरूपविमर्शः- इत्यादयो विशिष्टा विषया अत्र सम्यक् समालोचिताः।

अद्वैतदर्शनविकासे, विशेषतः प्रत्यभिज्ञादर्शनप्रादुर्भावे नागार्जुन - वसुबन्धुप्रभृतीनां योगाचार-माध्यमिकदर्शनाचार्याणाम्, बौद्धन्यायशास्त्रविकासे च दिङ्नाग-धर्मकीर्ति-सदृशानां बौद्धविदुषां वर्तते विशिष्टं स्थानम्। ग्रन्थकारेणानेन द्वितीये विमर्शे समेषामेषां सिद्धान्ताः सप्रमाणं सम्यग् विवेचिताः। प्रत्यभिज्ञादर्शनोन्मीलने एषामाचार्याणां वर्तते महनीयो महिमा।

अत्र तृतीये विमर्शे मायामूलकस्य ब्रह्मवादस्य, अध्यासस्य, प्रसङ्गागतस्य ख्यातिपञ्चकस्य च स्वरूपं निरूप्य वेदान्तशास्त्रस्थितानां विविधवादानां परिचयं प्रदाय सिद्धान्तागमसंमतानां पति-पशु-पाशाख्यानां तत्त्वानां विवेचनं विधाय च

प्रकाशसंविदोरभेदः सम्यक् साधितः। अस्मिन्नेव प्रकरणे पाशपञ्चकस्य बन्धमोक्षयोश्च स्वरूपं यथा-शास्त्रं विवेचितम्। जगत्सृष्टौ शिवस्य स्वार्थोत्प्रेक्षाऽत्र प्रकरणान्ते कृता ग्रन्थकारीयप्रत्यभिज्ञापरम्परायाः किमपि नूतनमुदन्तं ख्यापयति, यदा हि महिम्नः-स्तुत्यादौ किमीहः किं कायः इत्यादिना तन्निषिध्यते। स्वतन्त्रः शिवः स्वस्वातन्त्र्यमहिम्ना, विनैव किमपि प्रयोजनं जगन्निर्मिमीत इति हि तन्मतम्। अत्रैव चतुर्थे विमर्शे लीलाक्रीडारसिकः शिवः, नित्यतृप्तस्य का स्पृहा? इत्यादीनि वचनानि समवलोक्यन्ते। स्वतन्त्रः शक्तिपातः- इति च सिद्धान्तोऽत्र स्मर्तव्यः।

चतुर्थविमर्शस्य प्रारम्भ एवात्र दिक्कालयोरपि मोक्षसाधनता निरूपिता, यदा हि बन्धमोक्षयोः सत्तैव नास्ति वास्तविकी- इत्यप्यत्र प्रदर्श्यते। अथवा ''सर्वो ममायं विभव इत्येवं प्रविजानतः। विश्वात्मनो विकल्पानां प्रसरेऽपि महेशिता।।'' इति दिशा विविधेषु विकल्पेषु प्रसरत्स्वपि भगवतो महेशिता न विलुप्यत इति विभावनीयम्। अत एवात्र बहुषु स्थलेषु शक्तेः शिवस्य च स्वरूपं तत्तन्मतपद्धत्या सम्यङ् निरूपितम्। विकल्पः, स्वाभासः, स्पन्दः, निगमागमपदव्युत्पत्तिः, शिवाशिवयोः समो महिमा, ईश्वरशक्तिर्माया, त्रिविधा दीक्षा, प्रणवस्वरूपम्, विश्वहोमी, दीक्षा-गुरुः, स्वात्मसंविदेव समुपास्या- इतीदृशा विशिष्टा विषया अत्र प्रतिपादिता ग्रन्थस्यास्यापूर्वतां ख्यापयन्ति। अद्वैतकल्पितं द्वैतमद्वैतादपि सुन्दरम्, स्पृहणीयतमं शिवदास्यमित्येवमादीन् समालोचनार्हान् विषयान् समुपस्थापयता ग्रन्थकर्त्रा भक्तेर्मोक्षादपि गरीयस्त्वं ख्यापितम्। ''सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्'' इति वदता भगवता शङ्कराचार्येणैतदेव प्रतिपाद्यते। प्रत्यभिज्ञाशास्त्रनिष्णातेन शिवदृष्टिकारेण सोमानन्देन सर्वं सर्वात्मकमिति सिद्धान्तः सम्यक् साधितः सर्वासामेतादृशीनां विप्रतिपत्तीनां समाधानाय।

एवं संक्षेपेण विविधमतमतान्तरनिदर्शनपूर्वकं शैवदर्शनसिद्धान्तान् प्रत्यभिज्ञाशास्त्रनिष्कर्षांश्च प्रमाणपुरस्सरं समुपस्थापयतो ग्रन्थस्यास्य रचयितारं झा-महोदयं वयं साधुवादशतैः पुनः सभाजयामः।

व्रजवल्लभ द्विवेदी

**(आचार्य व्रजवल्लभ द्विवेदी)**

निदेशकः
शैवभारती-शोध-प्रतिष्ठानम्
जङ्गमवाडीमठः, वाराणसी-१

वि.सं.२०६४

।।ॐ नमः शिवाय।।

# स्वस्त्ययनम्

**पूतं स्वतः पूततरं ततो यद् गाङ्गं पयः शङ्करमौलिसङ्गात्।**
**तत् पातु मातुः प्रणयापराधपादाहतेः पूततमं सदा नः।।**

काशीस्थहिन्दूविश्वविद्यालयान्तर्गतसंस्कृतविद्याधर्मविज्ञानसङ्काये उपाचार्यपदं विभूषयता डॉ. श्रीकमलेशझाशर्ममहोदयेन निबद्धम् **'आगसंविद्'** इत्यभिधेयं ग्रन्थमवलोक्य नितान्तमानन्दमनुभवामि। युवाऽप्ययं लेखकः विद्यावृद्ध इति स्वकीयः पूर्वानुभवः ग्रन्थस्यास्य यत्र-तत्र स्थलविशेषेषु विषयविशेषवर्णनाध्ययनेन प्रमापितः। भारतीयदर्शनसम्प्रदाये चतुर्विधोऽद्वैतवादः प्रथितः - विज्ञानाद्वयवादो योगाचाराणाम्, शून्याद्वयवादो माध्यमिकानाम्, ब्रह्माद्वैतवादः शाङ्कराणाम्, ईश्वराद्वयवादः काश्मीरशैवानाम्। अत्र ग्रन्थे क्रमेण पूर्वकत्रयस्य यथाशास्त्रं गभीरं निरूपणं झामहोदयेन कृतम्। एतेनैतेषां शास्त्राणां विशदं ज्ञानं लेखकस्येति निर्णीयते। परं प्रथमेऽद्वैतवादत्रिके जगतो मिथ्यात्वं प्रायेणासहमानस्य झामहोदयस्य ईश्वराद्वैतवादप्रावण्यं विस्तरेणात्र ग्रन्थे तद्विवेचनेनावगम्यते। ईश्वराद्वयवादे ये ये विशिष्टा विषयास्तेषां समेषां प्रसन्नगम्भीरं निरूपणमत्र विहितम्। शास्त्रस्य पारिभाषिकीं प्राचीनशैलीनिबद्धां सुरभारतीं ये जिज्ञासवो नाधिगच्छन्त्यञ्जसा, तेषामपि एतद्ग्रन्थाध्ययनेन विषयावबोधः सुकरो भवेदिति दृढं विश्वसिमि।

अन्ते च साम्बं शिवं ग्रन्थकृन्मङ्गलाय प्रार्थयन् कामये यदयं प्रौढः प्रबन्धः समाद्रियतां सम्प्रदायविद्भिर्मनीषिभिरिति शम्।

**ताश्च ताश्च ननु चित्तवृत्तयः संस्फुरन्तु सततं समन्ततः।**
**शश्वदासु सकलासु देवि! मेत्वं विभासि शिवसामरस्यभूः।।**

(आचार्य-श्रीनारायणमिश्रः)

पूर्वसङ्कायप्रमुखः, कलासङ्कायः
का.हि.वि.वि, वाराणसी।

वि.सं.२०६४

।। श्रीरामेश्वरसद्गुरौ मम नुतिः संराजतां सर्वदा।।

# हृदयम्

अद्वयवादो भारतीयाध्यात्मशास्त्रस्य वैशिष्ट्यं पार्य्यन्तिकीञ्च स्थितिं प्रकाशयति। तत्र काश्मीरीयशैवदर्शनत्वेनाद्यत्वे प्रसिद्धः शिवाद्वयवादो बौद्ध-वेदान्तादिदर्शन-विलक्षणः सम्प्रति भारतीयदर्शनस्य परमप्रकर्षं ख्यापयन् निखिलविश्वस्या-वधानमाकर्षति। आगमिकसाधनायाः परमं रहस्यं समुन्मीलयन्नयमेव शिवाद्वयवादः भारतीयकाव्यशास्त्रस्य कलाशास्त्रस्य च शिखरमारचयति, यत्र ध्वनि- सिद्धान्तस्य रससिद्धान्तस्य चाधारभूमिः सम्यक् प्रतिष्ठिता राजते।

यश्च वैक्रमप्रथमशताब्दाद् आरभ्य सततं भारतीयदर्शनानां पारस्परिको दार्शनिको वादः एकादशशताब्दं यावत् प्रचलति तस्य परिणतिः काश्मीरीयशिवाद्वयवादे दृश्यते। यद्यपि एतादृशो मार्गः पश्चात्तनेपि काले अस्मद्- दर्शन-परम्परया न त्यक्तः अथापि बौद्धैः सह जायमानाद् वादाद् या विचाराणां प्रत्यग्रता भारतीयदर्शने पदं लेभे तदनन्तरकाले सा न दृश्यते।

अथ शिवाद्वयवादस्य सम्यगवबोधार्थं योगाचार-माध्यमिक-शाङ्करवेदान्तादिभिः स्वीकृतस्य अद्वयवादस्य सम्यगवगतिः सर्वथा अपरिहार्या। तथैव समानतन्त्रेण व्याकरणागमेन सह शिवाद्वयवादस्य सम्बन्धः सम्यक् परीक्षणीयः। ''वैयाकरणसाधूनामि''त्यादिवाक्यैः प्रधानमल्लनिबर्हणन्यायेन व्याकरणागमस्य स्थितिं निराकृतवतः परमेष्ठिगुरोः व्याकरणदर्शनविषयिणी दृष्टिः कथं तस्यैव परम्परायां ''यथाह भगवान् भर्तृहरिः'' इत्यादिवचनैः परमशिष्येणैव परिवर्तिता इत्यपि विचारणीयं भवति। यद्यप्ययं विचारः कैश्चन नवीनैः स्पृष्टः तथापि अस्य गभीरदृष्ट्या पर्यालोचनं अवशिष्टमेव वर्तते।

डॉ. कमलेशझामहाभागाः दीक्षागुरुभ्यः श्रीस्वामिलक्ष्मणजूदेवेभ्योऽधिगत-सम्प्रदायानां वैदुष्ययोगयोः संगमभूतानामस्मद्गुरुचरणानां महामहोपाध्याय-श्रीरामेश्वरझामहानुभावानाम् वयमिव प्राप्तसाम्प्रदायाः शिष्याः तैः योगाचार-माध्यमिक-वेदान्त-सम्मताद्वयस्यापि विवेचनमुररीकृतमस्मिन् ग्रन्थे इति महान् प्रमोदः।

विश्वसिमि, वैयाकरणैः स्वीकृतस्य अद्वयवादस्य विवेचनं यथासमयं तैः करिष्यते तदनु ईश्वराद्वयवादापरनामकस्य शिवाद्वयवादस्य सम्प्रदायसम्मतं संस्थापनं तैः करिष्यते। ईशवीयविंशशताब्द्यां काश्मीरीयशिवाद्वयवाददर्शनस्य कश्चन नवीनः समुपक्रमः आचार्यैः गोपीनाथकविराजमहोदयैः, अमृतवाग्भवाचार्यैः आचार्यैः महामहोपाध्यायैः पं.रामेश्वरझामहानुभावैश्च काश्यामेव कृतः।

तथैव श्रीकरपात्रस्वामिपादैः पुनरपि त्रैपुरसम्प्रदायस्य श्रीविद्योपासनायाश्च प्रतिष्ठा काश्यामेव कृता।

इदानीमपि वन्द्यचरणानां समेषामेतेषामाचार्याणां शिष्यपरम्परा काश्यां समेधमाना चकास्ति।

सैषागमानुशीलनसाधनपरम्परा यद् विद्वद्भिः श्रीमद्भिः कमलेशझामहोदयैः सुदृढमुपास्यते तदेते सतीर्थ्याः शिष्याश्चास्माभिः शुभाशीराशिभिः संयोज्यन्ते।।

वि.सं. २०६४

**(प्रो. कमलेशदत्तत्रिपाठी)**

प्रोफेसर इमेरिटस्

काशीहिन्दूविश्वविद्यालयः, वाराणसी-५

# शुभाशंसनम्

**या प्रीतिरविवेकानां विषयेष्वनपायिनी।**
**त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु।।**

**मोक्षस्य नैव किञ्चिद् धामास्ति न चापि गमनमन्यत्र।**
**अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः।।**

श्रीकमलेशझाशर्मणा विरचितः ''आगमसंविदि''ति नामधेयो ग्रन्थो मया विलोकितः। भगवती संविदेषा परमार्थभूता परमोपादेया सर्वशास्त्रसमादृता राजते। अस्यामेव परमाद्वयधाम्नि आगमानां परिणतिरिति सुविदितमेव शास्त्रधिषणानां मनीषिणाम्। शैवागमे ईश्वराद्वयवाद एतदनुगुणो यदवधार्यते तस्य सम्यगवबोधाय विज्ञानाद्वयवादः, शून्याद्वयवादो, ब्रह्माद्वयवादश्च सुहृद्भूतः सुतरां विवेचनीयो भवति।

काशीहिन्दूविश्वविद्यालयीय-संस्कृतविद्याधर्मविज्ञानसङ्काये धर्मागमविभागाध्यक्ष-पदमलङ्कुर्वता आगमशास्त्ररहस्यविदा विदुषा डॉ. कमलेशझामहोदयेन चतुर्णामेषां वादकथामाश्रित्य निरूपणमतिचारु विहितमिति दृष्ट्वा मोमुद्यते मे चेतः। सर्वत्र ग्रन्थे मानवजीवनसाफल्याय विश्वोत्तीर्णायाः विश्वस्वरूपायाश्च परस्याः संविदः माहात्म्यं, स्वरूपम् उपादेयत्वञ्च भक्तिप्रवणानामाचार्यवतां श्रद्धालूनामुद्धाराय, शास्त्रार्थजिज्ञासूनामवबोधाय, अधिगतशास्त्रसर्वस्वानां श्रीगुरूणां मोदाय च सुनिपुणं निरूपितमाभाति।

अस्य ग्रन्थस्य ग्रन्थकर्तुः श्रीझामहोदयस्य च लोकोपकारपुरःसरमभ्युदयं श्रीकाशीविश्वेश्वरमभियाचते।

कृष्णकान्त शर्मा

**(प्रो. कृष्णकान्तशर्मा)**

वि.सं. २०६४

सङ्कायप्रमुखः
संस्कृतविद्याधर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी-५

## श्रीगणेशाय नमः

# प्ररोचना

**निर्विशेषं परं ब्रह्म सच्चिदानन्दमद्वयम्।**
**करुणासागरं वन्दे जगज्जन्मादिकारणम्।।**

**वर्णःकला पदं तत्वं मन्त्रो भुवनमेव च ।**
**इत्यध्वषट्कं देवेशि! भाति त्वयि चिदात्मनि।।**

सकलशास्त्राम्भोधिपारदृश्वना महाविदुषा अति निगूढशास्त्रपङ्क्तिस्फोरणपटुना विद्याविनयसम्पत्ति-शालिना लब्धयशस्केन काश्यामन्यत्र च विश्रुतविश्रवसा श्रीमता कमलेशझामहोदयेन प्रणीत आगमसंविन्नामधेयो ग्रन्थोऽस्माभिः समवलोकितो मतश्च। तत्र विज्ञानाद्वयवाद-शून्याद्वयवाद-ब्रह्माद्वयवादेश्वराद्वयवादानां योगाचारमाध्यमिक-शाङ्करशाक्तमतसिद्धानां सिद्धान्तानां यथाश्रुतं यथागमं प्रामाणिकं विद्वज्जनग्राह्यं प्रसन्नगम्भीरभाषया विवेचनं कृतमत्यन्तमुपयोगि विद्यते। वादकथामाश्रित्य तेषां यथावत् सिद्धान्तोपस्थापनं ग्रन्थस्य प्रणेतुः श्रीझामहोदयस्यातुलमप्रमेयं विद्यावैभवं सुव्यनक्ति।

अत्र चतुर्णां बौद्धानां वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानां सिद्धान्ताः यथातत्त्वं सम्यगवेक्षिताः सन्ति। बाह्यार्थप्रत्यक्षत्वानुमेयत्ववादिनां वैभाषिकाणां बाह्यार्थानुमेयत्ववादिनां सौत्रान्तिकानां बाह्यार्थासत्त्व-विज्ञानमात्रसत्त्ववादिनां योगा-चाराणां बाह्याभ्यन्तरसर्वशून्यवादिनां माध्यमिकानाञ्च सिद्धान्तोपपादनं सयुक्तिकं कृतम्। तत्र सर्वे एव बौद्धाः शून्यत्व-क्षणिकत्व-स्वलक्षणत्व-दुःखत्ववादिनः प्रतीत्यसमुत्पादवादिनः। शून्यत्वं नाम निःस्वभावत्वम्। भावानां न स्वतो न परतो नोभयतः स्वभावः शक्योऽवधारयितुम् प्रतीत्यसमुत्पन्नत्वादेव। प्रतीत्य हेतुप्रत्ययं प्राप्य उत्पद्यते योऽसौ प्रतीत्यसमुत्पादः। कारणमेकं हेतुः कारणसमूहस्तु प्रत्यय उच्यते। ननु सर्वेषामेव तीर्थङ्कराणां मते कारणं प्राप्यैव कार्यं जायते। नहि कारणं विना कार्योत्पत्तिः सम्भवतीति को विशेषः प्रतीत्यसमुत्पत्तावितिचेदत्रोच्यते; परिणामवादपक्षे कारणमेव कार्यात्मनावस्थीयते इति कार्यकारणयोरभेदो भेदाभेदौ वेति कारणस्वभावकं कार्यम्। आरम्भवादे पुनः कारणैरेव परमाण्वादिभिः कार्यं द्व्यणुकादिकमारभ्यते इति कार्यकारणयोर्भेदस्तथापि कारणगुणकं कार्यमिति कारणस्वभावकं कार्यम्। अत्र पक्षे कार्यमुत्पत्तेः प्राग्नास्ति। परिणामपक्षे च कार्यमुत्पत्तेः प्रागपि कारणात्मना कार्यात्मना वा सदेव। विवर्तवादे पुनः यद्यपि कारणं नारभते न परिणमति तथापि अधिष्ठानाज्ञानाद्

विवर्त्तितम् अधिष्ठानसत्तानतिरिक्तसत्ताकं भवतीत्यधिष्ठानगतसत्त्वादिधर्मा: आरोप्ये-ऽध्यस्यन्ते।

प्रतीत्यसमुत्पादे पुन: कार्यकारणयो: क्षणिकत्वाद् द्वितीयक्षणध्वंस-प्रतियोगित्वात् स्थितिक्षणाभावाद् न परिणाम: नारम्भो न विवर्त: अपितु अन्वयव्यतिरेकाभ्यां कारणे सति कार्यमुत्पद्यते। न चोभयो: कार्यकारणयो: कश्चित् सम्बन्धोऽभिप्रेयते। तत्रैवं सति प्रथमक्षणे कारणमुत्पन्नं द्वितीयक्षणे विनश्यति। तत्रैव द्वितीयक्षणे कार्यमुत्पद्यते तृतीयक्षणे च तन्नश्यति तत्रैवाग्रिमं कार्यमुत्पद्यते एवं सर्व एव क्षण: उत्पादविनाशशालीति तै: मन्यते। तुलाकोटिद्वयस्य एकस्मिन्नेव क्षणे यथा उन्नामावनामौ तथा प्रत्येकक्षणस्योत्पादविनाशशालित्वमवधेयम्। तथा च बीजं प्राप्याङ्कुरो जायते अङ्कुरं प्राप्य पत्रं तत् प्राप्य शाखेत्येवं क्रमेण फलादिपर्यन्ता गतिर्बोध्या। तत्र नश्यमानमेव कारणं प्राप्य तदस्वभावं तदसम्बद्धं कार्यं भवति। अत: परत: कार्यस्य स्वभावो नास्ति। अत एव तदव्यवधानेन जायमानत्वात् कार्यस्य कश्चित् स्वभावो नास्ति विनश्यमानत्वादेव। नहि वस्तुस्वभाव: विनश्यति परिणमते वा। तस्मात् स्वतोऽपि भावस्वभावो नास्ति। अत एव नोभयत:। तस्माद् नि:स्वभावता भावानाम्। सर्वे भावा: क्षणिका: नि:स्वभावा: निरन्वया: उत्पद्यन्ते विनश्यन्ति च प्रदीपज्वालावद् जलप्रवाहवद् मेघमालावत् क्षणिका एव भावा: सन्त:। न चाक्षणिका: भावा: केचन सन्ति। तदुक्तम् - यत् सत्त्वेन प्रतीयते तत् क्षणिकं सत्त्वादेव मेघमालावद्। सर्वे भावा: क्षणिका:। अत्र एवं सति एवं भवति अनेवं सति एवं न भवति यथा बीजेऽङ्कुरं तस्मिन् पत्रं तस्मिन् सति काण्डमित्यादिक्रम: स्वीक्रियते। न च बीजे सति पत्रं पत्रे सति फलमिति प्रवाह:, प्रत्युत असति बीजादिके अङ्कुरादि:। अत: स्वभावेन भावानुत्पाद एव शून्यता। सा च प्रतीत्यसमुत्पादं विनाऽसम्भविनी। क्षणिकत्वं च भावानां सामर्थ्यासामर्थ्याभ्यां सिध्यति। कुसूलस्थे बीजेऽङ्कुरं सामर्थ्यमस्ति चेत् तत्रैवाङ्कुरोत्पत्ति:, क्षेत्रस्थे कुर्वद्रूपतापन्ने बीजे तत्सामर्थ्यं चेद् भिद्यते तावद् बीजमित्यादियुक्तय: तच्छास्त्रादवगन्तव्या:। क्षणिकत्वादेव स सर्व: पदार्थ: स्वलक्षणं स्वमेवलक्षणं स्वलक्षणम्। नहि भावसदृशं किञ्चित् न वा भावेषु अनुगतं कश्चिद्धर्म: सर्व एव पदार्थ: अनुगतधर्मरहितोऽत एव असमोऽपोहितश्चेतरस्मादिति। दु:खमेतत् सर्वं स्कन्धसंविभक्तम्।

अथ दु:खतत्समूहतत्कारणानां दु:खरूपाणामुच्छेद:कथं स्यादिति? न चानन्दरूपस्वात्मोपलब्धौ तत्र प्रमाणाभावात्। न च सुखमयस्वर्गादिलोकप्राप्तौ तेषामपि दु:खहेतुत्वात्। न च स्वरूपावस्थितौ अवस्थितेरनङ्गीकारात्। तस्माद् अविद्यया रूपविज्ञानवेदनासंज्ञासंस्कारसमूहे आत्मात्मीयत्वबुद्धौ दु:खं तन्निरोधे च दु:खात्यन्ताभाव:। रूपादिसंघाते आत्मत्वबुद्धिनिरोध: कार्य:। न चान्यत्र कूटस्थे चिदानन्दे आत्मबुद्धि: कार्या, तत्र प्रमाणाभावाद्। न च क्वापि आत्मत्वबुद्धौ जातायां दु:खानतिरेक: सम्भवति। तस्मात् सर्वत्र नैरात्म्यधीरेव कार्येति बौद्धागमसारांश:। एतत्

सर्वमत्रानेन विदुषा सम्यग् व्युत्पादितं केवलमतिसंक्षिप्तसारस्तु मया प्रदर्शितः। न च भगवत्पादीयेऽद्वैतदर्शने नैरात्म्यवादः। अपि तु सदेकाद्वितीयात्मवादः। श्रुतिमेवावलम्ब्य प्रवर्तमानं ब्रहमाद्वैतदर्शनं न निरात्मवादि। यत्रापि निरात्मशब्दोऽद्वैतदर्शने श्रुतो दृष्टो वा तत्र आत्मशब्दो यथालोकं देहादिवाची। यथा आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिण इत्यादौ। उद्धरेदात्मनात्मानं नात्मानमवसादयेदित्यादौ च। न चानिर्वचनीयात्मवादीति। सदेवेति श्रुत्या आत्मनः सत्त्वेन निर्वचनात्। न चात्मनि प्रमाणाभावः, अस्तीत्येवोपलब्धव्य इत्यादिश्रुतेः। न च श्रुतेस्तदागमस्य चाप्रामाण्यम्। श्रुतेः स्वतःप्रमाणत्वाद्। न च मोक्षे आत्मविनाशः, नित्यानन्दात्मस्वरूपोपलब्धेः मोक्षरूपत्वात्। न चात्मनि प्रमाणाभावः, सर्वलोकवेदसाक्षित्वात्। न चात्मनोऽन्यस्य वा भावस्य क्षणिकत्वं तदेवेदमिति प्रत्यभिज्ञानाद्। न चेयं प्रत्यभिज्ञा भ्रमः, उत्तरस्मिन् क्षणे बाधाभावाद्। न च सर्वं शून्यं, प्रतीत्यसमुत्पादस्याप्रामाणिकत्वात् कार्यकारणयोरनन्यत्वावगमाद्। सर्वशून्यत्ववादिनां माध्यमिकानां मतं सर्वप्रमाणाद् बहिष्कृतमिति शङ्कराचार्याः प्राहुः। विज्ञानवादिनस्तावद् विज्ञानाद् व्यतिरिक्तं बाह्यं वस्तु न स्वीकुर्वन्ति। न च विज्ञानेऽध्यारोपितं विवर्तभूतमेव बाह्यम्। न वा विज्ञानपरिणतं बाह्यं न वारब्धं न प्रतिबिम्बभूतं न वा भिन्नमिति। किमिति तर्हि ते मन्यन्ते क्षणिकविज्ञानाभिन्नमेव। न हि विज्ञानविज्ञेययोर्भेदः शक्योपपादः। विज्ञानविज्ञेययोः सम्बन्धानुपपत्तेः असम्बद्धस्य च प्रकाशत्वेऽतिप्रसङ्गाद्। तस्माद् विषयसंस्काराभिन्नं विज्ञानमेव बहिर्वद् घटाद्याकारेण भासते। नहि निर्विशेषे निराकारे वा विज्ञाने प्रमाणमस्ति। तत्त्वज्ञानाच्च वासनारूपरागादिविषयसंस्कारोच्छेदाद् विमलक्षणिकविज्ञानसंततिरेव मोक्षः। तदपि न युक्तम्। विज्ञानविज्ञेययोःसम्बन्धानुपपत्तावपि चिज्जडयोस्तयोरभेदो दुरुपपादः, विज्ञाने विज्ञेयस्याध्यारोपादेवोपपत्तौ अभेदो न युक्तः।

एवं विवेचनेन ब्रह्माद्वयवादसौगतवादयोर्महान् भेदः। एतद् अन्यच्चानेन महापण्डितेन प्रकृते ग्रन्थे व्युत्पादितम्।

ईश्वराद्वयवादः माहेश्वराणाम्। ईश्वरः परं ब्रह्म शिव एव। स चैको विभुः चित् सद् अद्वयं सर्वजगत्कारणभूतम्। स एव भगवान् स्वेच्छया स्वसामरस्यंगतां सृष्टिकाले ईषत्स्पन्दितां संविद्रूपां शक्तिमवष्टभ्य जगत् करोति पालयति उपसंहरति च। स एव परशिवोऽनुत्तररूप उच्यते। न विद्यते उत्तरं परं यस्मात् तदनुत्तरमिति व्युत्पत्तेः। अथ च न विद्यते उत्तरम् अपरं वा यस्मात् तदनुत्तरमिति। परञ्चापरञ्च तदेवेति भावः। कलानियतिकालादिभेदभिन्नया स्वाधीनयैव मायया स्वेच्छयैव संकुचितैश्वर्यो भगवान् जीवरूपतामापन्नः संसारमारचयति। लीलैव सर्वा सृष्टिः, स्थितिभङ्गावपि तस्य लीलैव। लोकमङ्गलहेतुर्भगवत्स्वारसिकविलासो लीला। सर्वेषां वस्तूनां स एव सारः सत्ता स्वभावः तदतिरिक्तं नान्यत् किञ्चिदिति। बौद्धवादात् सर्वथा भिन्नोऽयं वादः।

परशिवशक्तिविद्यादिभेदेन षट्त्रिंशत्तत्त्वात्मकोऽयं वादः काश्मीरेषु प्रत्यभिज्ञादर्शन-शैवदर्शनादिनाम्ना व्यवह्रियमाणःश्रुत्यागमस्मृतिप्रमाणकः महद्भिराचार्यैरभिनवगुप्तादिभिः प्रचार्यमाणः पुष्यमाणश्चाधुनापि विलसतितराम्।

त्रिकदर्शनेषु काश्मीरशैवागमदर्शनं प्रत्यभिज्ञादर्शनापरनाम्ना प्रसिद्धतममस्ति। तत्र परिपूर्णज्ञानक्रियाशक्तिमान् महेश्वरः। सा च शक्तिः, तदभिन्नैव शक्तिशक्तिमतोरभेदात्। जीवोऽपि शिव एव माययावृतपूर्णज्ञानक्रियाशक्तिः। आगमशास्त्रोक्तसाधनसम्पन्नः जीवः प्रत्यभिज्ञया सोऽहमस्मीत्येवंरूपया नष्टावरणः शिवाभिन्नो जायते। तत्तेदन्तोल्लेखिनी बुद्धिः प्रत्यभिज्ञा। स्वस्वरूपप्रत्यभिज्ञानहेतुत्वाद् अस्य दर्शनस्य तन्नाम्नैव प्रसिद्धिः।

तत्र परमशिवः प्रकाशविमर्शयोः शिवशक्त्योः सामरस्यं गतः। समश्चासौ रसः आनन्दः समरसः तस्यभावः सामरस्यम्। समशब्द एकपर्यायः तुल्यपर्यायश्च परमं साम्यमुपैतीति श्रुतेः। समोऽहं सर्वभूतेष्विति स्मृतेश्चैकपर्यायः समशब्दः। रस्यते आस्वाद्यते इति रस आनन्दरूपः। सामरस्यमभेदोनन्यता वा। न हि शिवः चिच्छक्त्या वियुज्यते शिवत्वाभावप्रसङ्गात्। न शिव इति शक्तिरिति भिन्नं तत्त्वम् परावस्थायामेकरूपत्वात्। सृष्टिकाले स्वेच्छया ईषत् स्पन्दः संचलनं जायते। तदा शिवशक्त्योर्भेद इव भवति। स्पन्दः संवित्तिः स्फुरणमिति पर्यायः। प्रकाशश्चिद्,विमर्शः अहमिति प्रत्ययः स्वसत्ताविमर्शनात्मकः। तत्र पूर्णक्रियत्वाभिव्यक्तिः स्पन्द इत्युच्यते। स च परापरभेदेन द्विधा।

ब्रह्माद्वैतवादे सर्वज्ञत्वादिधर्माभिव्यक्तिः मायासंवलिते ब्रह्मणि भवति। परब्रह्मणि चिद्रूपे मायानुपहिते एकरसे आनन्दसद्रूपे न स्पन्दो न विमर्शः। अध्यस्तमायायोगात्तु तत्सर्वमुपपद्यते। माया नाम परब्रह्मशक्तिः स्वात्मभूतैवानादिरध्यस्ता मिथ्या न तु सत्या। तदनादियोगात्तु क्रियादिशक्तिः। एवञ्च कृत्वा शुद्धबुद्धमुक्तता परमात्मनि। ईश्वराद्वयवादे तु सा शक्तिर्न मायापदवाच्या अपितु शक्तिसंविद्विमर्शस्पन्दादिशब्देन वाच्या अनादिर्नित्या शिवतत्त्वसमरसेति भेदः। न च ब्रह्माद्वयवादे पूर्णब्रह्मत्वानभिव्यक्तौ जडत्वापत्तिरिति वाच्यम्। तस्य स्वतश्चिद्रूपत्वात् स्वप्रकाशत्वात्। न हि शक्तियोगात् चिद्रूपता। यथा शुक्तिविषयकाज्ञानोपहिता शुक्तिः रजतादिविवर्तवत्यपि शुक्तिरेव शुद्धा तथैव सदेव ब्रह्म मायोपहितमपि स्वप्रकाशरूपं तदस्पृष्टं शुद्धमेवेति। अस्मिन् महत्त्वपूर्णे विद्वज्जनज्ञेये ग्रन्थे महापण्डितेन झामहोदयेनैतत् सर्वं व्युत्पादितमिह संक्षेपेण दिग्दर्शनमात्रं कृतम्।

अहमस्य ग्रन्थस्य प्रचारप्रसारसमृद्ध्यर्थं प्रणेतुश्च विविधविद्याविलासबन्धुरस्य सकलशास्त्रावगाहनलब्धापूर्वधिषणस्य श्रीकमलेशझामहोदस्यायुष्मतः प्रियशिष्यस्य गुरुजनाराधनप्रसादलब्धचक्षुष्कस्य दीर्घायुष्यसौख्यादिसमृदृयर्थं सदाभ्युदयाय श्रीसाम्बशिवं भूयो भूयः प्रार्थयमानोऽत्रैव विरमामि नमामि च विद्वज्जनान् इति शम्॥

**स्वाध्यायाद् योगमासीत योगात् स्वाध्यायमामनेत्।**
**स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ।।**

**विदुषामाश्रवः**

पारसनाथ द्विवेदी

वि.सं. २०६४

**(आचार्य पारसनाथ द्विवेदी)**
पूर्वविभागाध्यक्षः वेदान्तविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयःवाराणसी-२

।।श्रीः।।

# आमुखम्

**यस्यां च सत्यामहमेव भामि सर्वात्मना सर्वविकल्पहीनः।**
**यत्नैरलभ्यामतिदुर्लभां तां श्रीसद्गुरोर्नौमि दयार्द्रदृष्टिम् ।।**
**समुच्छलन्त्यै जगदात्मिकायै शान्तस्वरूपाय सदाशिवाय।**
**सते भवन्त्यै भवते च सत्यै नमः शिवायै च नमः शिवाय।।**
**तटेष्वेव परिभ्रान्तैर्लब्धास्तास्ता विभूतयः।**
**यस्य तस्मै नमस्तुभ्यमगाध- हरसिन्धवे।।**

श्रीलायाः प्रत्यभिज्ञाविद्याया ऐश्वर्यं यत्र विलसति सेयं त्रिकण्टकविराजिता ब्रह्मविद्याप्रकाशिका श्रीदेव्यन्नपूर्णाजानेः श्रीविश्वेश्वरस्यानन्दवनं श्रीकाशिका विश्वस्मिन् जगति प्राचीनतमा सर्वजनश्रद्धास्पदीभूता धार्मिकपवित्रतायाः शास्त्रीयपाण्डित्य-परम्परायाश्चास्थानकं विजयते। इयमेवाजनिष्ट श्रीपार्श्वनाथं जैनधर्मस्य उपान्तिमं तीर्थंकरं वाराणसीपरपर्याया श्रीकाशिकाभिधाना नगरीणामुत्तमा श्रेष्ठा प्रेष्ठा च श्रीः।

धर्मचक्रप्रवर्तनं प्रकुर्वाणेन सुगतेन तरुणां करुणामातन्वता अत्रैव ऋषिपत्तन अष्टाङ्गिकमार्गमुद्घोषयता बौद्धधर्मस्य देशना विहिता।

यस्य च तान्त्रिकत्रिकोणस्य अधिभारतवर्षम् व्याप्तिमश्नुवानस्य कोणभूताः कामरूप-काश्मीर-केरलेतिप्रथिताभिधानाः देशविशेषाः श्रीभारतं भारतमखण्डम-मङ्गलध्नं विदधति तस्य केन्द्रभूता काशिका अनुत्तराह्लादविधानदक्षा श्रीमद्भगवत्पाद-श्रीभास्करराय- स्वामिश्रीकरपात्री-श्रीगोपीनाथकविराज- श्रीरामेश्वरझा-कर्मभूमिः सज्ज्ञानदान-रसिका भक्तिप्रवणा चिन्मयी श्रीभागीरथीसलिलसमासेवितपादपद्मा शुण्डाहत-स्वर्णघटामृतैः शुभ्रगजैरभिषिच्यमाना श्रीनारायणप्रिया पद्मालयेव नितरां श्लाघनीया, सर्वागमनदीनां कमनीयां पूर्णतामाबिभ्रती वसुन्धरां नाभिनिविशमाना स्वयम्भूः। अथर्ववेदस्य पैप्पलादशाखा काशिजनपदस्य निवासिनः ''काशयः'' इति पदेन सम्बोधयति अथ च शतपथब्राह्मणम् कमपि काशिराजं ''काश्यः'' इति पदेन भूषयति।

दक्षिणस्याम् उत्तरस्यां च क्रमेण पुराप्रवहद्भ्याम् असिवरुणाभ्यामावृताया अस्या अन्वर्थमभिधानमभूद् वाराणसीति।

आदिकाव्यं रामायणं वाराणसीमहिमानं प्रभूतं गायति। ततोऽप्यधिकतर-मेतद्यशोगानपरायणं महाभारतं समराङ्गणे पाण्डवपक्षं श्रितस्य पराक्रमिणो नृपस्य ''काशिराजश्च वीर्यवान्'' इत्येवं प्रशंसनं कुरुते।

मत्स्यपुराणं, लिङ्गपुराणं वामनपुराणं च समधिकं सुषमाञ्चिताया: अस्या: काश्या: हारिण: प्रासादान्, मनोज्ञानि उद्यानानि, पय:पूरपूरान् तडागान्, सुरभान्वितानि नानावर्णाकृतीनि विविधप्रजातानि देवैरपि स्पृहणीयानि कुसुमानि, देवाधिदेवैरधिवासितानि सर्वदेवमयानि तीर्थानि च प्रतिपादयन्ति।

स्कन्दपुराणन्त्वधिकाशीखण्डम् विस्तरश: प्रतिपादयति तैस्तैर्दिव्यैस्त-पस्विभिरर्चितानि नानाभिधानानि प्रतिनियतस्थान-माहात्म्य-क्षेत्र-स्वरूपाणि अतिरम्याणि निरतिशयसुखप्रदानि स्वनामधन्यानि धन्यैरभिनन्दनीयानि अभिन्नान्यपि भिद्यमानाभिधानानि श्रीशिवलिङ्गानि। यागादेर्धर्मस्य, परतत्त्वस्य, सृष्टे:, जीवस्य, आत्मनो, ब्रह्मण:, स्वात्ममहेश्वरस्य च स्पृहणीयं स्वरूपं निर्णेतुमद्यापि श्रीकाशीमेव प्रमाणभूमिमाश्रयन्ते सम्पूर्णे भारते विश्वस्मिन् विश्वे च निवसन्तो भूरिभागधेया भविनो भव्या:।

पूज्या आचार्या: शङ्करभगवत्पादा:, रामानुजाचार्या:, रामानन्दाचार्या:, निम्बार्काचार्या:, मध्वाचार्या: आचार्याश्चैतन्यमहाप्रभुरित्यभिधाना: अन्ये च लोकानुद्धर्तुं यतमाना: करुणापरायणा: प्रथिताभिधाना: तेषु तेषु कालखण्डेषु इमामेव मोक्षदां पुरीमधिशिश्यिरे। नातिचिरादध्यवात्सुर्विष्णुकाश्यां श्रीबिन्दुमाधवमन्दिरसविधे महान्त: सिद्धा: शिवात्मान: दर्शनमात्रेण सर्वजनकल्याणविधायिन: श्रीतैलङ्गस्वामिचरणा:।

श्रीकबीर-तुलसी-नानक-दयानन्दपोषिका श्रीकाशिका सर्वैश्वर्यमय्या देव्याऽन्न-पूर्णयाऽम्बया सनाथिता दक्षिणत: श्रीकेदारेश्वरेण मध्ये श्रीविश्वेश्वरेण उत्तरतश्च श्रीमदोङ्कारेश्वरेण अध्यासिता त्रयीव नित्याऽभेद्या पावनपावनी भूतभावनी अवनितलमामन्त्र्य सनाथयति देवानपि समस्तान्।

अस्या एव मणिकर्णिकातीरे भगवत्पादै: प्रस्थानत्रयमधिकुर्वद्भि: प्रसन्नगम्भीरं भाष्यमभाषि। चैतन्यमहाप्रभव:, वल्लभाचार्या:, रामानन्दाचार्या: अत्रैव भक्तिप्रीतिकरीं वसतिं चक्रिरे। को वाऽध्यात्मपरायणो न वेत्ति बृहदारण्यकोपनिषदि समुपलालिता-माख्यायिकाम्? यत्र काशिराजोऽजातशत्रु: आत्मतत्त्वरहस्यमुपदिश्य दृप्तं बालाकिगार्ग्यं विदृप्तमानन्दमयं च विदधे।

अत्रैव आयुर्वेदविद्याविशारद: काशिराजो दिवोदास: श्रीमान् धन्वन्तरि: सुश्रुतप्रभृतीन् विनेयान् शल्यचिकित्सारहस्यविज्ञान् अनुभावयाञ्चकार। व्याकरणे, वेदे, ज्यौतिषे मीमांसादर्शने वेदान्तदर्शने धर्मशास्त्रे न्यायवैशेषिकदर्शने, सांख्ययोगदर्शने, तन्त्रागमदर्शने, अलङ्कारशास्त्रे, आयुर्वेदे किं बहुना सर्वविद्याक्षेत्रे काशिकेयै: तत्तत्प्रान्तेभ्य: सर्वेभ्य: श्रीकाशीमुपागतै: विद्वत्तल्लजै: शास्त्राणां प्रकरणग्रन्थानां विरचनं, शास्त्रार्थविधया संवर्द्धनं, सर्वशाखास्वाध्यायसंरक्षणं पौराणिककथा-माहात्म्यविश्लेषणं च विहितम्।

इह हि त्रयो विश्वविद्यालया:, शतं महाविद्यालया:, पर:शतं विदुषां गेहाश्चाद्यापि संस्कृतविद्यानां निगूढं विमर्शनमनारतं प्रकुर्वते। महामनसां भागवतधौरेयाणां तपोभूमौ श्रीकाशीहिन्दूविश्वविद्यालये प्राचीविद्या प्रतीच्या सह निपुणं विमृश्यते।

श्रीकाशीहिन्दूविश्वविद्यालयस्य प्राणायिते हृदयायिते च संस्कृतविद्याधर्मविज्ञान-संकाये अष्टसु विभागेषु अन्यतमे श्रीले धर्मागमविभागे माम् उपाचार्यपदे साग्रहं नियोजितवद्भि: श्रीकमलेशदत्तत्रिपाठिभिर्गुरुभिरादिष्टम् भवता संस्कृतभाषामय आगमसिद्धान्तप्रवण:कश्चन ग्रन्थ आरच्यतामिति।

तदीयां मनोज्ञामाज्ञां शिरसाङ्गीकृतवता मया सानन्दमानन्दवनमधिवसतो-रन्नपूर्णाविश्वेश्वरयोर्जगत: पित्रोश्चरणेषु प्रणतिततिं समर्प्य महामाहेश्वराणां श्रीगुरूणां महामहोपाध्यायानाम् आचार्यरामेश्वरझामहानुभावानां समवाप्तशिवसायुज्यानां सर्वदानुग्रहं वितरतां चरणयो: प्रणिपातं च विधाय **आगमसंविद्**-नामधेयं ग्रन्थं रचयितुमारब्धम्। ग्रन्थेऽस्मिन् विमर्शशब्दिताश्चत्वारोऽध्याया: संकल्पिता:। आगमवनसञ्चारिणी नितरामानन्दमयी माता देवी संविदेव नित्यनमस्या धन्यधन्याऽत्र प्रतिपाद्यतामागता सुतरां चकास्ति। सोयं ग्रन्थ: श्रीमदन्नपूर्णेश्वरीजानिसदनुकम्पया पूर्णतामगात्।

महतां गुरूणामेव तत्स्वं यदत्र महितम्, यत्तु नानवद्यमत्र मामकीनं तत् परिष्कर्तुं पराम्रष्टुं च धीधना: प्रार्थ्यन्ते विद्वांसो वै देवा:।

विदितमेवैतत् सारासारविवेकजुषां विदुषां यद् अनुत्तराभिधानो महेश्वर: प्रकाश इत्याख्यायते। प्रकाश: विमर्शशीलो भवति। नहि विमर्शादृते प्रकाशस्य चैतन्यमुपपद्यते। प्रकाश: शिव इत्याख्यायते विमर्शस्तु शक्तिरिति। प्रकाशविमर्शयो: अन्योन्यात्मकता समरसता च वरीवर्ति। एतदेव शिवशक्तिसामरस्यमित्यभिधीयते। एतदेव आगमवाङ्मये परमोपास्यं प्रतिपाद्यते। शक्तिर्यत् शिवस्वरूपमनुगच्छति तद् विश्वोत्तीर्णं रूपं शिवस्य, यत्तु विश्वरूपेण समुल्लसति तदस्य विश्वमयं रूपमित्युच्यते। विश्वमयता विश्वोत्तीर्णता चानुत्तरमहेश्वरस्य लीलामयी क्रीडा काचिदनारतं प्रचलति। प्रकाशविमर्शयो: समरसतैषा संविदित्यभिधीयते। यद्यपि लोके शास्त्रे च संविदमनुरुध्यैव सर्वो व्यवहार: प्रवर्तते। सर्वै: शास्त्रकृद्भिरस्या: माहात्म्यमुररीक्रियते। परमागमवाङ्मये प्राधान्येन संविद: सर्वात्मना माहात्म्यं साक्षात्प्रतिपाद्यते। प्रधानप्रतिपाद्यभूताया: सर्वप्रकाशिकाया: संविद: स्वप्रकाशता विलसति। माहात्म्यमण्डितायां संविदि षट्त्रिंशत्-तत्त्वमयं विश्वं विलसति। सममेव च संविदो विश्वोत्तीर्णता विलसति। संविदो वैभवभूतम् विश्वं संविद ऐश्वर्यमेव प्रकाशयति न त्वेनां विक्रियया योजयति।

शास्त्रेषु अधिकारिभेदमुद्दिश्य **द्वैत-द्वैताद्वैत**-विशिष्टाद्वैत-शुद्धाद्वैत-अद्वैत-शिवाद्वैतप्रभृतयो ये बहवो वादा: सार्थका: **प्रतिपादिता:** ते सर्वे संविदि एव प्रकाशमाना:

संविद्रूपा एव सन्ति न ततोऽतिरिक्ताः। परम् नैगमदर्शने आगमिकदर्शने अवैदिक-दर्शने च प्रवर्तितानां विभिन्नानां शास्त्रवादानां परमं तात्पर्यमायतौ अद्वैतवादे चीयते। तत्र नैगमदर्शने ब्रह्माद्वैतवादस्य परमतात्पर्यविषयता चेद् अवैदिकदर्शने विज्ञानाद्वैत--शून्याद्वैत- वादयोः। त्रिविधानामेषां विज्ञप्ति-शून्य-ब्रह्माद्वैत-सिद्धान्तानामहमहमिकया योयमीश्वराद्वयवादे। समागमो भवति तदा गंगासागरः कश्चनात्र समुल्लसन् श्रद्धालून् कृतार्थयति। तदेवमागमसंविदियं प्रकटितनिजनिखिलमहिमा प्रकाशिताद्वैतचतुष्टयामोदा विश्वमानवान् आत्मप्रेम्णा प्रीणयितुं प्रवृत्ता। प्रत्यभिज्ञादर्शने इयमेव सुतरामुपास्या देदीप्यते।

अथ कलौ यत् कैलासवासिना श्रीकण्ठनाथेन भगवता शिवेन अप्रतिघातिस्वेच्छया महामुनिः श्रीदुर्वासा आदिष्टः परम्परामिमां मुहुः प्रवर्तयितुं "त्र्यम्बकादित्यम्" मानसं पुत्रं ससर्ज। अथ तं तीव्रतरशक्तिपातविधिना शास्त्रज्ञानेन साधनाविज्ञानेन च संयोज्य तमेवाध्यकरोत्स शैवदर्शनसिद्धान्तं भुवि प्रचारयितुम्। अथ दीक्षाविधिना सिद्धान्तममुं प्रचारयतोऽस्य एतन्नामैव मानसपुत्रः पितृवदेव अपरं मानसपुत्रं ससर्ज सिद्धान्तममुं भुवि दृढ़ं प्रसार्य। एवं क्रमेण सिद्धपरम्परायाः चतुर्दशसु पुरुषेषु व्यतीतेषु पञ्चदशः त्र्यम्बकादित्यो ब्राह्मणोचितविधिना सुयोग्यां ब्राह्मणकन्यामुद्वाह्य संगमाल्लब्धजन्मानं संगमादित्यनामानं पुत्रमत्राधिकृत्य गृहस्थगुरुपरम्परामसृजत्। अथ संगमादित्यः कैलासपर्वतादवरुह्य मेधाप्रधाने शारदापीठे, अधिकाश्मीरम् मठिकां प्रकल्प्य गुरुशिष्यपरम्पराम् "तेरम्बा"- नाम्नीम् (काश्मीरीभाषा) पुपोष। अद्यापि "त्र्यम्बि" उपनाम्ना अधिकाश्मीरं वसन्ति जनाः।

अथ संगमादित्याद् वर्षादित्यः, तस्माद् अरुणादित्यः, तस्माद् आनन्दः, तस्मात् पुनः सोमानन्दो जन्म लेभे। सोमानन्द एव काश्मीरशैवस्य दर्शनग्रन्थम् अद्यत्वे प्राप्येषु सम्बद्धग्रन्थेषु प्रथमं जग्रन्थ।

त्र्यम्बकमठिकायाः अधिपतिपदमध्यतिष्ठद् उपर्युक्तक्रमेण सोमानन्दः। क्रमेण च तदनु तत्पदमधितिष्ठन् उत्पलदेवः, लक्ष्मणगुप्तः अभिनवगुप्तश्च स्वनामधन्यः श्रीनगरे वसतिं चक्रे। "बालबोधिनीन्यास" - रचयिता शितिकण्ठः "सोमं" निजपूर्वजं ब्रुवन् पद्मपुर (पाम्पोर) निवासिनं तत्समीपे सिंहपुर (साम्पोर) निवासिनं वात्मानं प्रतिपादयति।[१]

स्वेच्छया प्रसृतस्य संविदात्मनः प्रभोर्मायाशक्त्याः कियन्माहात्म्यं वर्ण्यताम्, ययाऽसौ स्वातन्त्र्येण मोहितः सन्नणुत्वमङ्गीकुर्वन् जगति क्रीडमानः पञ्चविधकृत्यकारित्वं षड्वस्तुस्वरूपतां वाऽऽत्मसात्कुरुते-

**किन्तु स्वस्यैव स्वातन्त्र्यान्मायाशक्त्या विमोहितः।**
**पूर्णोऽप्यणुत्वमापन्नः क्रीडतीव स्वयम्प्रभुः।।**[२]

---

1. तन्त्रागमखण्डः पृ. २१०, संस्कृतवाङ्मय का बृहद् इतिहास।
2. पू.प्र.का १.४८.

**अतः सृष्टिः स्थितिर्ध्वंसस्तिरोभावोऽप्यनुग्रहः।**
**इति पञ्चसु कर्तृत्वमावहच्छिव उच्यते।।**

**बिन्दुर्नादस्तथा व्योम मन्त्रो भुवनविग्रहौ।**
**षड्वस्तुत्वमप्यस्य प्रोक्तं दीक्षोत्तरादिके।।** [१]

प्रभोः स्वाभाविकी अकृत्रिमा या स्फुरत्ता, सैवोच्यते पराहंविमर्शः, अक्रमः, चैतन्यम् , परामर्शः, स्वभाव इति। क्रमरूपेव भवन्ती सैषा एकशक्तिः, त्रिशक्तिः, पञ्चशक्तिः, षड्रूपः केवलः शिवः, केवला शक्तिर्वोच्यते-

**न च बीजाङ्कुर - लतादलपुष्पफलादिवत्।**
**क्रमिकेयं भवेत् संविद् यतो भात्येव सर्वदा।।**

**शक्तिः शिवस्वभावैव न तु वस्त्वन्तरात्मिका।**
**शिवो वा कथ्यतां शक्तिर्भेदो नास्त्येव वस्तुतः।।**

**स्वाभाविकी स्फुरत्ता या विमर्शाख्यापराभिधा।**
**अक्रमा क्रमरूपेव सेच्छाज्ञानक्रियात्मिका।।**

**त्रिशक्तिरेकशक्तिर्वा देवो वा केवलः स्थितः।**
**शक्तिरेवाथ देवी सा सा च शास्त्रे निरूप्यते।।**

**शिवादभिन्नमात्मानं स्वात्मनश्च शिवं तथा।**
**भासयन्ती विस्फुरन्ती शक्तिश्चैतन्यमुच्यते।।** २

स्वातन्त्र्यादसौ शिवः सङ्कुचितप्रकाशो नानाविधोऽन्योन्यविलक्षणोऽणुर्भवत्यनवच्छिन्नप्रकाशः। पुनश्च स्वातन्त्र्यादेवानुपायेन, शैवोपायादिना वा समवाप्तसमावेशो विश्रान्तनिजस्वरूप एष कृतकृत्यो भासते-

**अनवच्छिन्नप्रकाशो यो निजानन्दपरिप्लुतः।**
**स स्वातन्त्र्यात् सङ्कुचितमात्मानमवभासयन्।।**

**अणुरित्युच्यते शास्त्रे स्वातन्त्र्येण पुनर्यदा।**
**सर्व - कर्तृत्वरूपेण सर्वज्ञत्वेन चाप्यथ।।**

**प्रकाशयत्यात्मनात्मानं तदा देवः प्रकाशते ।**
**अनविच्छन्नप्रकाशात्मशिवरूपतयैव सः।।** [३]

---

१. (क) पू.प्र.का. १.४९-५०.
(ख) पूर्णाहन्तात्मभावेन कृत्रिमाहन्तया विना ।
आत्मानमात्मना साक्षाद्यः पश्यति स पश्यति।। का.क.वि-५.

२. पू.प्र.का. २.२६२,१.५,५५,५६,६०., ३. पू.प्र.का. १.६६-६८.

या चेयं पूर्णता, ईश्वरता, महाव्याप्तिः, स्वतन्त्रता वा; सा सिद्धैव न तूपायसाध्या, भेदापायमात्रेण तु प्रतिप्रकाशते। किं बहुना, भेदोऽपि भासमानः सन्नेव प्रतिप्रकाशते, ततश्च संविदो नातिरिच्यते, संविद्भित्तिलग्नतया प्रकाशमानत्वात् तदभिन्नत्वात्। यथाहुर्गुरवः-

**सृष्टिसंहारकारित्वं पारमेश्वर्यमेव च।**
**पूर्णतेश्वरता वापि महाव्याप्तिः स्वतन्त्रता।।**

**न साध्या किन्तु सिद्धेयं भेदापाये तु भासते।**
**भेदोऽपि भासमानोयं संविदो नातिरिच्यते।।**

**संविदेव विभातत्त्वादिति निश्चयशालिनः।**
**अपयाति क्षणादेव भेदोऽभेदत्वमागतः ।।** [१]

शिवतत्त्वस्वरूपे मयि अभिन्नमपि विश्वं भिन्नवद् भासते, इत्येवं दृढं विविश्चानो गुरुकृपया पारमेश्वरमनुपायसमावेशं प्राप्य कश्चन विद्वानेव कृतार्थोऽनुग्रहात्मा विजयते।

**एवमेव सदा भातं यत्तत्त्वं शिवशब्दितम्।**
**तदेवाहं च तत्रैव मय्यन्तः प्रतिबिम्बितम्।।**

**विश्वं विमर्शशक्त्या मे भात्यभिन्नन्तु भिन्नवत्।**
**एवं दृढं विविश्चानो लभते पारमेश्वरम्।।**

**शश्वदेव समावेशमुत्तमं निरुपायकम्।**
**ध्वस्ताखिलमलो योगी विश्रान्तश्चिन्मयाम्बुधौ।**
**महासिद्ध्या समाश्लिष्टोऽनुग्रहात्मा जयत्यसौ ।।** [२]

मन्थानाभिध एष शिवो लीलया स्वस्मिन् स्वविमर्शशक्त्या सृष्टिस्थिति-संहृतीर्बिभर्ति-

**स्वस्मिन् बिभर्ति स्वविमर्शशक्त्या**
**सर्गस्थितिध्वंसमनारतं यः।**
**तमच्छमच्छन्नमनन्तरूपं**
**मन्थानसंज्ञं प्रणमामि देवम्।।**
**सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।**
**सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः।।** [३]

---

१. पू.प्र.का. १.११८-१२०.

२. पू.प्र.का. १.२३०-२३१,२३६.

३. पू.प्र.का. १.१९६.

चेतनाचेतनतया भासमाने ह्यस्मिन् स्वात्ममहेश्वरे भेदोऽपि स्वच्छन्दमवभासते, कथमन्यथा(भेदानवभासने) सर्वरूपताऽस्य सिद्ध्येत्। ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' इति श्रुत्या सदान्तर्मुखस्वभावस्य स्वात्मशिवस्य न वाचा न वा क्रियया प्रसादनं सम्भवति-

**मदात्मनापि त्वमुना विभासि**
**स्वतन्त्र एकः स्वमिवातिभिन्दन्।**
**त्वय्येव भेदोऽपि न चेद् विभायात्**
**सर्वात्मता ते नहि साधु सिद्ध्येत्।।**
**वाचा कया त्वामहमीशमीडे**
**प्रसादये त्वां क्रियया[१] कया वा।**
**यतः सदाऽन्तर्मुखभास्वरूपो**
**न मायिकं पश्यसि किञ्चिदेतत्।।[१]**

यत् किमपि प्रमाणमभ्युपगम्यते प्रमेयसिद्ध्यर्थम् , तस्य प्रमाणत्वं किं प्रमातारं महेश्वरं विना भवितुमर्हति? नैवार्हति। किमप्युपजीवकं प्रमाणं स्वोपजीव्यं प्रमातारं कथं प्रमापयेत्? नहि यदुदराज्जायमानस्तद्विवाहे वरायाततां निर्वहति। यदाहुः-

**संविन्निष्ठा हि सकलाःसंवेद्यत्वात् क्रियादयः।**
**संविदं नावभासेयुर्भास्यन्ते संविदा त्वमी।।[२]**

श्रीतन्त्रालोककृतोऽप्यत्र संवादः-

**प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते।**
**अनपह्नवनीयत्वात् किं तस्मिन् मानकल्पनैः।।**

**प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते।**
**तेषामपि परो जीवः स एव परमेश्वरः।।[३]**

अथ अविदुषां कृते समावेश उपायपक्षमपेक्षते। निर्विकल्पे पराहम्परामर्शे प्रकाशमानमनुत्तरं तत्त्वं सद्य इच्छामात्रेण येनाभेदोपायेनेच्छासमाख्येन स्वस्वरूपतया प्रथते, स एष शाम्भवोपायः प्रथमः। सोऽयं परामर्शस्त्रेधा विभज्यते-

---

१. (क) पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढ़ा।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः।। श्रीत. आ. ४/१०१.
(ख) पू.प्र.का. १.१९८,२०१.

२. पू.प्र.का. १.२२४.

३. श्रीत. आ. १.५४-५५.

**शक्तिं पश्यन्नभिन्नां स्वां स्वातन्त्र्याख्यामिमां पराम्।**
**निर्विकल्पं समावेशं शाम्भवं सोऽप्यवाप्नुयात्।।**

**यस्य संविदि विश्वोऽयं शक्त्या स्वातन्त्र्यसंज्ञया।**
**प्रतिबिम्बतया भाति सैष विश्वेश्वरो ह्यहम्।।**

**उदेति मत्त एवेदं मय्येव प्रतिबिम्बति।**
**मदात्मकमिदं सर्वमित्येवं शाम्भवस्त्रिधा।।** [१]

यन्नैर्मल्यं यत्र तत्प्रतिबिम्बनं तत्रैव, रूपनैर्मल्यसम्पन्ने दर्पणे रूपप्रतिबिम्बवत्। चिदात्मनि स्वात्मनि सर्वनैर्मल्यसम्पन्ने तु सर्वमेव विश्वं प्रतिबिम्बितमाभासते-

**नैर्मल्यं यत्र यस्यास्ति तच्च तत्रावभासते।**
**सर्वनैर्मल्यसम्पन्ने चिद्रूपे सर्वमेव हि।।**

**भावा भान्ति यथादर्शे निर्मलेऽपि विरोधिनः।**
**अनामिश्रास्तथैतस्मिंश्चिन्नाथे विश्वसञ्चयाः।।** [२]

चितिरसौ भगवती परावाक्, स्फुरत्ता, उन्मेषः, स्पन्दः, अहमिति वा व्यपदिश्यते। एनया शक्त्या परमेश्वरः शिवादिक्षित्यन्तं निखिलं जगदविकल्पसंविद्रूपतया बिभर्ति, पश्यति, भासयति च। सैषा भैरवाख्यकालप्रकाशनात् कालकर्षिणीति गीयते-

**सा परा परमेशस्य शक्तिः स्वात्माविभेदिनी।**
**भैरवाख्यस्य कालस्य भासनात् कालकर्षिणी।।** [३]

यथा दर्पणे नगरप्रतिभासो भेदाभेदाभ्यां बोभवीति, तथा परमेश्वरस्य तदभिन्नया यया शक्त्या विश्वरूपेण भेदेन, अभेदेन चावभासनं भवति, सा परापरेति गीयते-

**यया तु भेदाभेदाभ्यां दर्पणे नगरादिवत्।**
**राजते शिवशक्त्यात्मा सोच्यतेऽस्य परापरा।।** [४]

यया शक्त्या त्वस्य सर्वशक्तिमतः परस्परं विविक्ततया विश्वरूपेण इदन्तया भेदावभासनं भवति, सैषा गीयते-अपरेति। यदा तु त्रितयमप्येतत् प्रभुरसौ यया स्वशक्त्या अनुसन्धानात्मतया स्वात्मसात् कुरुते, तदा पुनरेषा परेति गीयते।

एवं च परा, परापरा, अपरेति शक्तित्रयमयः परमेश्वरे दृष्टिस्मृतिविकल्पवा-

---

१. पू.प्र.का. १.२६५,२७०,२७२.

२. पू.प्र.का. १.३५५,३३९.

३. पू.प्र.का. १.३८१.

४. पू.प्र.का. १.३८२.

नाभाति। परमेश्वरानुग्रहपूतः परादितत्त्वज्ञो योगी पूर्णाहन्तात्मनि शिवपदेऽभिषिच्यमानः शिवतामधिगच्छति। तत्र योऽयं नित्य; स्वच्छोऽसाङ्केतिकः पराहम्परामर्शः, तज्ज्ञः शिवयोगी शाम्भवोपायविज्जगति जयति। स एष इच्छाख्यः शाम्भवोपायः। नहीच्छाशक्तिव्यतिरेकेण क्वाप्यनुरज्यति भगवान् महेश्वरः। परमार्थः शिव एवासौ विश्वस्य प्राणभूतः। स एवाहमस्मीति सद्विकल्पोदयो बन्धहेतुभूतान् विकल्पान् विनिहन्ति। एतावान् महिमा शाम्भवोपायस्य-

**एतद्धि परमाद्वैतमत्र त्यागग्रहौ नहि।**
**भेदस्य चाप्यभेदस्य स्थितिः सर्वत्र सर्वदा।।**

**परा पराऽपराऽपरा-शक्तित्रयमयः प्रभुः।**
**एक एव त्रिधा भाति दृष्टिस्मृतिविकल्पवान्।।** [१]

**अतः परादितत्त्वज्ञो योगी चक्रेश्वरो भवन्।**
**पूर्णाहन्तात्मनि स्पन्दतत्त्वे रूढिमवाप्नुयात्।।**

**अज्ञातशक्तिः पश्वात्मा शक्तिं जानन् स्वयं प्रभुः।**
**भवतीति विनिश्चित्य शक्तिं स्वां पश्य सर्वतः।।**

**स्वप्नसङ्कल्पसृष्ट्यादौ शक्तिः संविदितात्मनः।**
**स्वेनैवास्तीत्यतः स्वात्मा शक्त्या भाति तथा तथा।।** [२]

एषा भगवतः शक्तिर्व्यापिनीभावमापन्ना बाह्यविषयोन्मुखी सृष्टिरिति, समनाभावमापन्ना त्वसौ स्थितिरिति, उन्मनीभावमापन्ना पराङ्मुखी आत्मसात्कृतभावा सा संहारपदाभिधेया, शाम्भवे धाम्नि पूर्णविश्रान्ता त्वसौ अनाख्येति जेगीयते। यथाहुः प्रत्यभिज्ञादार्शनिकाः-

**शक्तिः स्पन्दनशीलैव या बहिर्विषयोन्मुखा।**
**व्यापिनीभावमापन्ना सा सृष्टिव्यपदेशभाक्।।**

**सैव गाढान्तराविष्टा समनारूपतां गता।**
**स्थितिः स्थिरतया भाति सृष्ट्यङ्कुरितवस्तुनः।।**

**आत्मसात्कृतभावत्वात् प्रत्यावृत्य पराङ्मुखी।**
**सैवोन्मनायमाना तु संहारो व्यपदिश्यते।।**

**अनुपाधिर्भजमाना विश्रामं धाम्नि शाम्भवे।**
**पुनराद्यैव सा शक्तिरनाख्येत्यभिधीयते।।** [३]

---

१. पू.प्र.का. १.२५२,३८५.

२. पू.प्र.का. १.३९७,४७०,५०९.

३. पू.प्र.का. १.५११-५१४.

प्रभोः प्रिया एषा शक्तिः स्फुरत्ता-महासत्ता-सारम्-ज्ञातृता-कर्तृतादिपदेन गीयते। स्वसंवेदनशब्देन व्यपदिश्यमानाऽसौ संविद् भगवती विश्वव्यवस्थामूलं परमार्थवस्तु विद्यते, या विमर्शात्मतां न जहाति, स्फटिकादिवज्जडत्वापत्तेः। विमर्श एवासौ भगवान् ज्ञानशक्तिरिति क्रियाशक्तिरिति वा शब्द्यते। यथाहुः प्रत्यभिज्ञाकृतः-

**सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।**
**सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः।।[१]**

परिशील्यमानासौ[२] स्वसंविद् भगवती स्वात्मसात्कृताशेषषडध्वरूपा परित्यक्तद्वैतावभासा अद्वयात्मतया देदीप्यतेतमाम्। सततं भासमानस्वरूपायामस्यां संविदि बीजाङ्कुरलतादिवत् क्रमिकत्वं नास्ति। स्वयमेवास्या विविधान्योन्यविलक्षणरूपेणावभासमानाया विज्ञानाय प्रत्यभिज्ञापरामर्शमात्रमेवापेक्ष्यते। तदभावादेव तु सर्वसाधकः सर्वात्मा स्वात्मशिवो नितरामन्तिकस्थोऽपि दूरातिदूरगो दुःखशतविनिपातको निराभासते-

**इत्थं स्वसंवित् परिशील्यमाना**
**स्वात्मीकृताऽशेषषडध्ववर्गा।**
**द्वयावभासं परिमुच्य सद्योऽ-**
**द्वयावभासात्मतया चकास्ति।।**

**स्वापरामर्शनं ह्येतदपराधो महान्ननु।**
**अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः।।[३]**

आस्तामेतत्, समावेशकथा प्रक्रान्ता स्मर्यताम्। असङ्कुचितचिता सह सङ्कुचितचितो यदैक्यम्, तदेव समावेश इत्युच्यते। यदाहुः-

**अविकल्पा स्थितिःसेयं भावनाद्यनपेक्षिणी ।**
**शिवतादात्म्यमापन्ना समावेशः स शाम्भवः।।[४]**

---

१. ई.प्र.का. १/४५

२. (क) प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते।। श्रीत.आ. ४/२१.

(ख) स्वसिद्धान्ताविरुद्धेन यस्तर्केण विचारयेत्।
धर्मज्ञानापवर्गार्थं स तत्त्वं वेद नापरः।। श्रीत.आ. ४/२४.

(ग) यस्य स्वतोऽयं सत्तर्कः सर्वत्रैवाधिकारवान्।
अभिषिक्तः स्वसंवित्ति-देवीभिर्दीक्षितश्च सः।। श्रीत.आ. ४/४२.

३. पू.प्र.का. २.१९०,२६१.

४. पू.प्र.का. २.२३१.

मध्यमोपायिनां शाक्तः समावेशो भवति। तत्रायं क्रम आद्रियत; अहङ्कारेण मनसा, बुद्ध्या वा यद् विकल्पनं भवति, तत्र सर्वत्र अहमःस्थितिरनुस्यूताभवति। अतोऽहमहमिति नित्यविमर्शनात्मा स्वावमर्शः शाक्तः समावेश इत्युच्यते। एष च मायिकः समावेशोऽमायिकस्वरूपाकलनात्मकेन शैवोपायेन सह योजयति, तेन स्वात्मनः शिवरूपता प्रत्यभिज्ञापिता भवति साधकस्य।

यद्यप्यद्वयबोधेऽभ्यासोऽनुपयोगी, तथापि द्वैतमालिन्यशङ्कानिर्मूलनायाभ्यासः समुपयुज्यते। स चैष मायिकः शाक्त उपायो ज्ञानाख्यो भेदाभेदात्मकः। यदाहुः-

**अहङ्कारेण मनसा बुद्ध्या वा यद् विकल्पनम्।**
**सर्वत्राहं स्थितं सर्वं मय्येवास्ति व्यवस्थितम्।।**

**अथवाहमहमिति स्वावमर्शनमेव यत्।**
**तच्छाक्तः प्रोच्यते सद्भिरुपायोऽभ्यासियोगिने।।**

**विकल्पत्वाच्च भेदात्माऽभेदात्मार्थानपेक्षणात्।**
**इत्युभयात्मकः शाक्त उपायोऽयं हि मायिकः।।** [१]

अत्राप्यनधिकृतानां जिज्ञासूनामुद्धारायान्तिम आणवोपायः प्रतिपाद्यते। उच्चारकरणध्यानवर्णस्थानप्रकल्पनादिनोपायेन यः समावेशः प्राप्यते, स आणव-समावेश इत्युच्यते।

एतदुक्तं भवति; शाक्ते, आणवे चोपाये विकल्पाभ्यासः समानः, तथापि शाक्ते चेतसा स्मरणमात्रं विधीयते, आणवे तु बाह्यविषयसापेक्षं विकल्पनं भवतीत्यनयोर्भेदः। तत्र प्राणोच्चारादिकमपेक्ष्य बुद्धिजं ध्यानादिकं दूरम्, ततो दूरं देहगतं करणादि, ततोऽपि विदूरं बाह्यमण्डलस्थण्डिलादिकम् इत्येष क्रमः शास्त्रेषु प्रतिपादितः। तत्र योऽसौ चिद्रूपोन्मेषः, तत् सामीप्यमित्युच्यते; यस्तु चिद्रूपनिमेषस्तत्किल दूरत्वमित्युच्यते। यथाहुः-

**मितमातृत्वगौणाय परमातृत्वक्लृप्तये।**
**प्रत्यभिज्ञाफलोपाय उपादेयो यथायथम्।।**

**अणुस्वातन्त्र्यजन्मापि विकल्पो निश्चयात्मताम्।**
**सम्यक् संस्कारतो गच्छन् भोगमोक्षौ प्रयच्छति।।** [२]

---

१. पू.प्र.का. २.२३८-२४०.

२. पू.प्र.का. २.२५०,२५४.

प्रत्यभिज्ञानये पारमेश्वरी शक्तिरेव कार्यकारणभावमपि भावयति। यश्च कल्पिताकल्पितभेदेन द्वैविध्यं भजते। अकल्पित एव तु कल्पितस्यापि प्राणभूतः। सच्चिद्घनानन्दरूपस्य ईशस्यैव सर्वकर्तृत्वं सम्भवति, न तु जडस्य। अत एव तिङर्थकृतिवादिनो नैयायिका अपि "रथो गच्छति" इत्यादौ लक्षणया व्यापारमेव तिङर्थमभिदधति। शक्तिमानसावेव अन्तरात्मतया बहिरात्मतया वाऽवभासते। एवं च शक्तिरूपं शिवरूपं वा शिवादिक्षितिपर्यन्तं सर्वं तत्त्वं चकास्ति, एतदुभयरूपं वा द्वैतवर्जितम्। चकास्ति किल स्वातन्त्र्यशक्तेरद्भुतो महिमा यद् अनया प्रभुरेवं कल्पिताकारं विधाय कल्पितकर्मभिरात्मानं प्रतिबध्नाति, फलतश्चायमणुः सम्पद्यते। पुनश्चाणुरयं पूर्णतां प्रत्यभिजानानः शुद्धमिव रूपं सम्प्राप्य मुच्यते। तेन तेन रूपेण बहुधा भासमानता त्वस्य स्वभावः, वह्नेर्दाहिकेव। तेन नात्र काचनानुयोगवार्ता समुदेतुमर्हति।

शिवगुरोरनुकम्पया[१] कस्यचिदेव शिवे या नवधा भक्तिस्तया शक्तिपातसंज्ञया पूर्णता परिचीयते, येनासौ परशक्तिपातसम्पन्नोऽपरिच्छिन्नसंविद्रूपः सन् चकास्ति, कृतकृत्यतां चाश्नुते। भोगांशसंस्कारसमाश्लेषयुतेनापरशक्तिपातेन तु न जीवन्मुक्तिः, अपि तु मरणोत्तरं प्राप्यमाणा देहपातसमकालिकी मुक्तिरेवाऽपरा समवाप्यते। यथाहुर्गुरवः-

**पारमार्थिक एवायं कल्पितोऽप्यस्ति वस्तुतः।**
**परमार्थादृते सत्ता घटते कल्पितस्य न।।**

**अस्वतन्त्रस्य कर्तृत्वं जडस्य नोपपद्यते।**
**स्वीकृता लक्षणा तस्मात् तिङर्थकृतिवादिना।।**

**शक्तिश्च शक्तिमांश्चापि द्वे तत्त्वे समवस्थिते।**
**शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वरः।।**

**अणुरूपोऽप्ययं पूर्णं शुद्धं रूपं स्पृशत्यहो।**
**परावृत्त्येति महिमा स्वातन्त्र्यस्यास्य दृश्यताम्।।**

**प्रकाशात्मा स्वतन्त्रोऽयं चिद्रूपो नर्तकः शिवः।**
**स्वभावात् स्वस्वरूपस्य प्रच्छादनपरायणः।।**

**परमः शक्तिपातोऽसौ परिपूर्णचिदात्मता।**
**ध्वस्तोपाध्यनवच्छिन्न - संविदेकस्वभावता।।**

---

१. अनादिमति संसारे कारणं परमेश्वरः।
स्वभावेनैव जन्तूनामनुग्रहपरः सदा।। उद्धृ.श्रीत. आ. ४/५६.

केवलं चिद्विकासेन विकारनिकराञ्जहि।इति।।[१]

**प्रत्यभिज्ञाग्रन्थानामन्वर्थतापरिशीलनम्**

अस्यां स्थितौ इन्द्रियसाम्राज्यं यत् किल कदाचित् तिरोहितम्, कदाचिद् आवृतम्, उद्दीप्तं प्रकटं वा भवेत् सन्तोषदाने अकिञ्चित्करम्, नितरामसमर्थमेव तल्लभामहे। अतश्च पुण्योद्रेकात् प्रभोरनुग्रहाद्वा इन्द्रियसाम्राज्ये वैराग्यमिवोपजायते। न तत्र तादृशी स्पृहा प्रतिष्ठिता भवति। अन्यस्मिन् क्षेत्रे अन्वेषणं प्रारभ्यते। इन्द्रियसाम्राज्ये सुखाशा नावशिष्यते। परमथापि तादृशस्य दृश्यप्रपञ्चस्य तुच्छता वा उपेक्षणीयता वा अपलपनीयता वा न जागर्ति। प्रत्युत समस्तमपीदं दृश्यं यदि स्वयं न प्रकाशते तर्हि केन प्रकाश्यते। येन चेदं दृश्यं प्रकाश्यते तस्य प्रकाशः स्वयं वा भवति परतो वा भवति? यदि स्वयं प्रकाशते तदा निरपेक्षमस्य स्वातन्त्र्यं स्वप्रकाशने। तस्य च प्रकाशस्य अहमर्थता[२] जागर्तीति प्रकाशः, स्वयम्प्रकाशश्च स्वात्मा इति काचन अनुभूतिः श्रीप्रभुगुरुकृपया समुल्लसतीति प्रत्यभिज्ञादर्शने भूयानेष विमर्शः[३] समुज्जृम्भते।

सोऽयं स्वप्रकाश ईश्वरः, यत्रैतस्य प्रत्यभिज्ञा आत्मत्वेन कारिता स ग्रन्थः ईश्वरप्रत्यभिज्ञा[४] इत्युच्यते। सत्यां चास्यां प्रत्यभिज्ञायाम् स्वकीया पूर्णता प्रत्यभिज्ञाता भवति। तदेतदुच्यते ''पूर्णता-प्रत्यभिज्ञेति।[५] इयमेव शिवमयी शिवविषयिणी दृष्टिः सम्यगिति ''शिवदृष्टिरिति''[६] नाम्ना प्रत्यभिज्ञाप्रवर्तकेन भगवता सोमानन्देन ख्यापितम्।

---

१. पू.प्र.का., १/२५७.

२. अहमिति शुद्धचिद्विमर्शो न विकल्पः, प्रतियोग्याभासनाद्यनुपलब्धेः। ई.प्र.वि., ख. १, पृ. २९०.

३. तस्य देवादिदेवस्य परबोधस्वरूपिणः।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी।। ने.त.उ., खं. १, पृ. २१.

४. कथंचिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्।
समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि।। ई.प्र. १/१

५. प्राधीतास्ताश्च विद्या ऋषिमुनिगुरुभी रक्षिता याः प्रयत्नैः
प्राप्तं पीतञ्च पूर्णं गुरुमुखसुलभं ब्रह्म विद्यामृतं यत्।
किन्त्वेषा कापि रम्या समरसरसिका मोक्षयन्ती च भोगाञ्
शक्तिः स्वीया स्वतन्त्रा विलसति हृदये पूर्णताप्रत्यभिज्ञा।। पू.प्र.का., १/१४.

६. शिवदृष्टेः रचयितारः श्रीसोमानन्दनाथाः।
तेषां हीदृशी शैली;
स्वपक्षान् परपक्षांश्च निःशेषेण न वेद यः।
स्वयं स संशयाम्भोधौ निमज्जंस्तारयेत् कथम्।। प.त्री.वि., पृ. ११७.

अयमेव तादृशः परमार्थः सारभूतश्च यदभिज्ञापयितुं श्रीमतामभिनवगुप्तपादानां "परमार्थसारः"[१] ईश्वराद्वैतवादं पोषयन् प्रवृत्तः तन्त्रेषु-तान्त्रिकीषु श्रुतिषु तदीयवाङ्मये च अयमेव स्वात्ममहेश्वरालोक उद्दीपितो भवति। प्रत्यभिज्ञाविमर्शिन्यां प्रत्यभिज्ञाविवृतिविमर्शिन्यां चायमालोको नितरां विशदीकृतश्चकास्ति। श्रीमालिनीविजयतन्त्रमधिकृत्य यद् वार्तिकं श्रीमताभिनवगुप्तमहोदयेन विरचितं तदद्यत्वे भाष्यमपेक्षमाणं चकास्ति। प्रत्यभिज्ञासिद्धान्तख्यापनपरेषु एषु ग्रन्थेषु शिवस्तोत्रावली-संवित्स्वातन्त्र्यम्-प्रभृतिषु शिवत्वानुभूतिप्रकाशकेषु च ग्रन्थरत्नेषु, अनुत्तरः शिव एव परमेश्वरः[२] समनुशील्यते। महेश्वरप्रवणतैव तैस्तैः सिद्धैः विद्भिः प्रकाशिता जनस्यायत्नसिद्ध्यर्थम्।

## अनादिता किलागमपरम्परायाः

अविच्छिन्ना काचिदस्मद्गुरुपरम्परा एनमेव महेश्वरं सर्वेश्वरं परमेश्वरं प्रतिपादयन्ती तमेव प्राप्यतमं संस्तौति। सोऽयमनादिरनन्तः स्वयंज्योतिः कारणकारणात्मकतां गतः स्वात्मा। प्रकाशोऽयं विमर्शशीलतया स्वप्रकाशः स्वपरप्रकाशो विद्योतते। आत्मनि आत्मैवायं शास्ता उपलभ्यते। आत्मैव शास्त्यात्मानम्। यश्च प्रशास्ति सोऽयमात्मा कियति काले कियति वा देशे कियत्सु वा वस्तुषु आत्मानं प्रसारयति संकोचयति वा? सर्वप्रथमम् इदमेव विचारणीयं यद् अहमो विपरिलोपः कदाचिद् भवति? नैव भवति। जाग्रति अहमेव भवामि, स्वप्ने, सुषुप्तौ च अहमेव विचरामि। समाधौ या तुर्योपलब्धिः सा तु प्रस्फुरत आत्मतत्त्वस्य नैरन्तर्येण परामर्श एव। तदेवं सर्वत्रात्मानुभूतिं लभामहे। सुप्तोत्थितस्य सुखमहमस्वाप्सं न किञ्चिदवेदिषम् इत्येष परामर्शः सुषुप्तिकालिकाम् आत्मानुभूतिं गमयति। नहि कस्यापि विवेचकस्य सन्देहो मनागपि जायते अहमस्मि नवेति। अपितु निःसन्दिग्धं सर्वो जनोऽनुभवति अहमस्मीति। नैवासौ विपर्यस्यति नाहमस्मीति।

एवं चात्मनि सत्यतया प्रतीते भवान् सत्यः "सन् भवान्" इति बोधयितुं नैव प्रवर्तन्ते किलागमाः। अयमत्र विशेषो नितरामूहनीयः निगमयितुं प्रवृत्तानां

---

१. शिवान्तेभ्यो धरादिभ्यः शुद्धाशुद्धाध्वरूपतः।
परिच्छिन्नस्वभावेभ्यस्तत्त्वेभ्यः सर्वतो हि यत्॥
उत्तीर्णमपरिच्छिन्नसंविन्मात्र - स्वरूपकम्।
अनुत्तरं परं तत्त्वं परमार्थस्तदेव हि॥ पू.प्र.का., १. ४१४-४१५.

२. (क) परमेश्वरः, पञ्चविधकृत्यमयः। प.त्री.वि., पृ० ३
(ख) एवं स्वातन्त्र्यपूर्णत्वादतिदुर्घटकार्ययम्।
केन नाम न रूपेण भासते परमेश्वरः॥ श्रीत.आ., १/९२.

वेदानामात्मतत्त्वप्रतिपादनवेलायाम् ब्रह्म सत्यमित्येतदपि निवेदनमावश्यकं भवति। परमागमे निरूढ़ितो लोके प्रसिद्धिमागते आत्मा सन्, ब्रह्म सत्यमिति प्रतिपादनस्य किमपि औचित्यं न भवति।

यदा कश्चन परमेश्वरानुगृहीतः श्रीगुरुमुपसर्पति तदा गुरुः शिष्यमुपनतं दर्शं दर्शं हृष्यति, वेत्ति च-यदसौ सत्यमात्मानं विचिन्वन्नेव समागतः। सत्यादनपेतत्वमात्मनो जानानस्य चित्त्वम् आनन्दमयत्वं चानुभावयति श्रीगुरुः शिष्यतां गतस्य सुजनस्य।

सा चेयं चिन्मयता अद्वयभावं विना न सम्भविनी। या चेयमानन्दमयता सा निराशंसभावं विना न सम्भविनी। अत एवोक्तं श्रीगुरुणा-

**अनुत्तरं परं देवं स्वतन्त्रं चिन्मयाद्वयम्।**
**निराशंसं निजानन्दं वन्दे स्वात्ममहेश्वरम्।।इति।** [१]

इदन्तावद् रहस्यं यत् स्वात्ममहेश्वरस्वरूपमाहात्म्यं विदन् श्रीगुरुः यदा दातृताशक्तिं स्वस्मिन् प्रकटयति तदा यस्मै कस्मैचिदपि तन्माहात्म्यमाविष्कर्तुं प्रदातुं वा प्रभवति। नासौ पात्रतामीक्षतेऽपेक्षते वा। परन्तु विन्यस्ता महेश्वरता निश्छिद्रे पात्रे एव विश्राम्यति समुल्लसति विजृम्भते च। सच्छिद्रात्तु पात्राद् अपयाति। नैश्वर्यमुल्लासयति।

अहो! श्रीगुरुरसौ स्वपिण्डमात्रं न व्याप्नोति। स तु ब्रह्माण्डमभिव्याप्नोति। अध्यात्मविज्ञानाय पिण्डात्मनो गुरोः आवश्यकता अनिवार्यता वा न भवति। अहमात्मस्वरूपपरामर्शनं शरीररहितेनापि गुरुणा तत्र तत्र विधीयते। श्रीरामानन्दाचार्याद् गुरोः शारीरं संवादं विनैव स्निग्धा अविरला च ज्ञानधारा श्रीकबीरमाप्लावयति स्म। विद्या सूक्ष्मा तरलतरला सर्वदेशकालव्यापिनी सती केन वा क्वचिद् अपि परिच्छेत्तुं नियन्त्रितुं वा शक्या। अत एव तु प्रथते एषा कथा यद् द्रोणाचार्यजीवच्छरीरसन्निधानं विनैव सकलं सरहस्यं च शस्त्रविज्ञानम् एकलव्ये शिष्ये प्राकट्यमभजत। लौकिकं विज्ञानमपि यदि नावश्यं सशरीरतामपेक्षते तदा का कथा अलौकिकस्य कार्यकारणभावं नातीव सहतो विश्ववैचित्र्यमुद्वहतो महतोऽलौकिकविज्ञानस्य।

## गुरुशक्तिर्विजयते

लीलया विश्ववैचित्र्यचित्रणे समुत्सुकः परमेश्वरः स्वयमेव पशुप्रमातृतां गतो बद्धान् अणुभावानवाप्नोति संसारिणश्च निर्माति। तानुद्धर्तुमसौ परमेश्वर एव प्रभुर्नान्यः। स च श्रीगुरुरूपेणावतीर्णो भवति कांश्चिदुद्धरति च। अत एव श्रीगुरुभिः शिवशक्तिमायां जयन्त्याः ''गुरुशक्तेः'' स्तुत्यतरत्वमाविष्कृतम्-

---

१. पू.प्र.का. १/१.

**गुरुशक्तिर्जयत्येका मद्रूपप्रविकासिका।**
**स्वरूपगोपनव्यग्रा शिवशक्तिर्जिता यया।।**[१]

क्रीडार्थं प्रभुरेव द्विधा अनेकधा च भवन् भाति। क्रीडार्थमनेन अनन्तब्रह्माण्ड-पिण्डाण्डानामाभासनं विहितम्। पिण्डेषु यद् खण्डितोऽहङ्कारः[२] समुद्भावितः। तत्खण्डने पूर्णाहम्भावाविष्करणे च कोऽन्यो हुतवहाद् दाहे प्रकाशे वा प्रभवति? अनुग्रहप्राधान्येन धृतविग्रहः शिव एवात्र प्रभुर्नान्यः।

या किल अहन्ता देहे भाति। सा नितरामुपेक्ष्या भवितुं नार्हतीव। चलनम्, भ्रमणम्, भोजनम्, पानं, विहरणम् अन्यदपि सुखदं तत् तद् यत् किमपि चेष्टितं वा तत्कथं देहे अहन्तां विना संभवेत्। परम् परिच्छिन्नामिमामहन्तामारूढेन साधकेन शिवगुरुकृपाबलाद् अपरिच्छिन्ना पराहन्ता पूर्णाहन्ता शाश्वती काचन अवाप्या अवाप्ता च भवति। पूर्णाहन्तामिमां प्रति य उन्मुखताया उदयः ततः प्राग् महेश्वरप्रवणता काचिदुदेति या विघ्नानपोहति पराहन्तां प्रकाशयति च। "कस्तत्र विघ्नः" एतस्य प्रश्नस्य उत्तरं प्रयच्छति आचार्यः- या देहाहन्तायाम् अस्माकं प्ररूढ़िः अहं देह एवास्मि, देहे सति जीवामि, नष्टे देहे म्रिये इत्येषा दृढ़ा धारणा सा शिवोहम् पूर्णोऽहम् इति उपदेशम् आधानं वा शिथिलयतीव।[३] सोयं विघ्नः।

## अपि चार्वाकसिद्धान्तानां दर्शनत्वम्?

अथ विचार्यते चार्वाकसिद्धान्तोपि दर्शनशास्त्रे कथं परिगणितो भाति। यतोहि देहः उत्पद्यते नश्यति च। षड्भावविकारा देहे सुस्पष्टं दृश्यन्ते; जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते,नश्यति इत्येवमात्मकाः।यथा घटः पटो वा भाववस्तु विद्यते। तत्र च जायते इत्यादिकान् विकारान् सर्वे वयं पश्यामः। एवं देहेऽपि ते ते विकाराः सुस्पष्टं संघटिता भवन्ति। न च कश्चिद् घटं पटं वा विकारमयम् इदन्तास्पदम् "आत्मा" "अहम्" इति वा परामृशति। परम् देहं विकारमयम् इदन्तास्पदमपि अहं गौरः, अहं श्यामः, अहं लम्बः, अहं वामनः, अहं स्थूलः, अहं कृशः इत्येवं यदनुभवति सर्वो लोकः, तत्र भासमानः अहंकारः देहालम्बनो भवति। यः चेतनो भवति, यदिदं चैतन्यं भवति। तस्य प्रकाशरूपता इष्यते। प्रकाशस्य परामर्शनं येन शब्देन भवति स शब्दः "अहम्" इत्युच्यते। यथा भोजनं भवति

---

१. पू.प्र.का. १/९.

२. अत एव विशुद्धात्मस्वातन्त्र्याहंस्वभावतः।
अकृत्रिमादिदं त्वन्यदित्युक्तं कृतिशब्दतः।। श्रीतं.आ., ९/२३२.

३. स्वसंकल्पसमुत्थशङ्कातङ्कालस्य-संशयादिरूपविघ्नौघप्रसरप्रध्वंसपूर्विकां शास्त्रनिष्पत्तिं मन्यमानः ...... परमेश्वरप्रवणतां परामृशति। प० सा० वि०-१

तत्र कस्यायं प्रकाशः समुदेति ''अहं भोजनं करोमि''। देवदत्तस्य, रामस्य, मोहनस्य एष प्रकाशोऽनुभूयते। न ओदनं जानाति, न सूपः, न व्यञ्जनम्, न करः, न मुखं, न जिह्वा, न दन्ताः, न कण्ठः, नोदरम्, न स्थाली, न पात्रम्, न आसनम्। परं देवदत्तः रामः मोहनः यो हि अत्ता विद्यते। असौ विजानाति अहं भोजनं करोमीति। यः प्रकाशः, यदिदं प्रकाशनं, यदिदं भानं भवति तदर्थमेव प्रयुज्यते ''अहम्'' इति। अथ प्रकाशेन सह यस्य यस्य सम्बन्धो भवति तत्सर्वम् एकेन सामान्यशब्देन उच्यते इदमिति। इदम् ओदनम्, अयम् सूपः। इदं लवणम्। इदं व्यञ्जनम्। इदं मुखम्, इयं जिह्वा, इमे दन्ताः, अयं कण्ठः, इदं पात्रम्, इदम् उदरम्, सर्वोऽप्ययं प्रकाशसम्बन्धसहः पदार्थ ''इदम्'' शब्देन सम्बुध्यते। किं तावदत्र रहस्यम् ? इत्येवं यदा विचार्यते तदा प्रतिभातं भवति यद् बोधः अहं शब्देन कीर्त्यते। बोधसम्बन्धी तु इदं-शब्देन आख्यायते।

## अहमर्थो वास्तवः किमु

देहे, इन्द्रियवर्गे, मनसि, बुद्धौ, प्राणे, शून्ये वा प्रयुज्यमानः अहंशब्दः कदाचिद् उत्तरकाले बाधितो भवति। संविदि, प्रकाशे, स्वरूपे तु यः अहंशब्दः प्रयुज्यते स कदाचिदपि बाधितो न भवति।

''इदम्'' शब्देन येषां परामर्शो भवति तेषां यथार्थं स्वरूपन्तु अहमात्मा बोध एव भवति। अहम्-प्रकाशसम्बन्धमुपेत्य जडावभासनं भवति न तु स्वातन्त्र्येण। अतश्च जडानां वास्तविकं स्वरूपम्, स्वभावः, आत्मा वा प्रकाश एव भवति अहमात्मा अहं-शब्दविमर्शनीयः। तथा च जडः चैतन्यं चेति वर्गद्वयमाभाति। बोधः बोधगम्यश्चेति। ज्ञाता ज्ञेयं चेति। प्रमाता प्रमेयं चेति। जडस्य कृते इदंशब्दः प्रयुज्यते युष्मदर्थः, चेतनस्य कृते तु अहंशब्दः प्रयुज्यते- अस्मदर्थः। प्रमाता ब्रूते- अहं पीनोस्मि। अहं पश्यामि, अहं जिघ्रामि, अहं स्पृशामि, अहं मधुरं रसमास्वादयामि, अहं सङ्कल्पयामि, अहं चिन्तयामि, अहं स्मरामि, अहं निश्चिनोमि, अहं क्षुधितोस्मि, अहं पिपासितोस्मि, अहं भोजनेन तृप्यामि, अहं रसपानेन तुष्यामि। अहं सुषुप्तौ किञ्चिदपि न वेद्मि- अहं शिवोस्मि, अहम्प्रकाशोस्मि।

प्रमेयं स्वतो न ब्रूते किन्तु तद्विषये प्रमाता ब्रूते। अयं घटः, अयं पटः, इदं भवनम्, इदं पुस्तकम्, इयम् पृथिवी, इदं सलिलम्, अयमग्निः, अयं वायुः, इदम् आकाशम्, अयं वृक्षः, इयं लता, इदं पुष्पम्, इदम् फलम् - इत्येवमादिका व्यवहाराः प्रकाश्यस्य कृते इदमिति शब्देन प्रवर्तन्ते।

उपर्युक्तेषु अहमिदमोः प्रयोगेषु केचन व्यवहारा उभयाश्रिता वर्तन्ते।

मम इदं शरीरं स्थूलम् अस्ति। अहं स्थूलः अस्मि। अहम् पश्यामि- इदं मम चक्षुः अस्ति। अहं शृणोमि मम इदं श्रोत्रम् अस्ति। एवमन्येष्वपि इन्द्रियेषु

उभयथा प्रयोग उपलभ्यते। अहं चिन्तयामि मम मनश्चिन्तयति। अहं निश्चिनोमि-मम बुद्धिः निश्चिनोति। अहं क्षुधितः अस्मि, भोजनेन मम प्राणा तृप्तिमाप्नुवन्ति। सुषुप्तौ मम किमपि न प्रतिभाति- सुषुप्तौ शून्यायितं भवति। योहमात्मानं स्थूलमनुभवामि स एवाहं पश्यामि, शृणोमि, चिन्तयामि, निश्चिनोमि,सुखी अस्मि, तुष्यामि,प्रकाशे, आनन्दघनोस्मि, तदेकोवशिष्टः शिवः केवलोऽहमस्मि।

एष्वेव उभयाश्रितेषु सम्पृक्तव्यवहारेषु दर्शनशास्त्राणि विविच्य एकतरनिर्धारणं विधातुं प्रवर्तन्ते। तत्र चार्वाकसिद्धान्तप्रवणा वाक् = चारु वाक् सामान्यजनानां रुचिं व्यवहारं चानुसरति। समधिकसंख्याकेषु जनेषु ''चैतन्यविशिष्ट देह एवात्मा'' इति चार्वाकप्रजल्पितं मतं यतः आयतं प्रसृतं वा विद्यते लोके अतः अस्य लोकायतिकम् इत्यन्वर्थं नाम प्रथते। स्थूलोहं गच्छामि, शये, उपविशामि। गौरोऽहं सुन्दरोहं, दीर्घो ह्रस्वोहं भवामि - एते व्यवहाराः चैतन्यविशिष्टं देहम् अहमात्मना परामर्शेन परामृशन्तोऽनुभूयन्ते। सोऽयमात्मप्रत्ययो भवति न त्वनात्मप्रत्ययः इति आत्मविषयकविवेचने यतः प्रवर्तते ततः चार्वाकमतस्यापि दर्शनशास्त्रेषु परिगणनं विधीयते।

## जैनदर्शनसौरभम्

**यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो**
**बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः।**
**अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः**
**सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः।।**

**अनेकान्तवादः** भारतीयदर्शनेषु जैनदर्शनं नितरां प्रथते योऽयम् अर्हन्नामा देवः असौ यथास्थितार्थवादी परिलक्ष्यते। अस्य दर्शनस्य मुख्यो न्यायः सप्तभंगी-नयः, तद्यथा- १. स्यादस्ति, २. स्यान्नास्ति, ३. स्यादस्ति च नास्ति च, ४. स्याद् अवक्तव्यः, ५. स्यादस्ति च अवक्तव्यः, ६. स्यान्नास्ति च अवक्तव्यः, ७. स्यादस्ति च नास्ति च अवक्तव्यः।

सप्तभंगीमाश्रित्य प्रवृत्तः स्याद्वादः अनेकान्तवादनाम्ना प्रथते। अस्य वादस्य जैनदर्शनसर्वस्वभूतत्वम् इतरेष्वपि दर्शनेषु नितरां चर्च्यते। समग्रस्य जैनदर्शनस्य आधारस्तम्भः अनेकान्तवाद एवास्ति। सप्तभंगनयः इत्यत्र जैनतार्किकानां मतमिदं प्रतिभाति यद् अपूर्णस्य जीवस्य ज्ञानमेकाङ्गि एव सम्भवति। एवञ्च सत्यस्य यद् एकपक्षीयं ज्ञानं तदेव नय इत्युच्यते। ''एकदेशविशिष्टोऽर्थः नयस्य विषयो मतः'' इति। अत एव विनम्रनिवेदनम् अस्य दर्शनस्य विद्यते यत् केनापि जनेन यत्किमपि ज्ञायते तज्ज्ञायतां नाम किन्तु अन्येनाऽपि यज्ज्ञायते तदपि मन्यताम् - यतो हि जीवेन किमपि ससीम एव शक्यते अंशतोऽवगन्तुं तदभिप्रायेणैव स्याद् इति

शब्दसमादरः क्रियते अत एव स्यादस्ति घटः इति अयमेव प्रयोगो न्याय्यः। यतो हि कमपि पक्षं देशं कालं वा आदायैव घटसत्ता अस्माभिः शक्यते स्वीकर्तुम्। अस्य प्रमाण-वाक्यता स्वीक्रियते जैनागमे। यदुक्तम्-

**तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनम्।**
**क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतम्।।**[१]

यदा तु उच्यते घटः अस्तीति तदा एतस्य नयरूपता भवति। यतो हि अत्र नास्तित्वांशः नापलप्यते। यथोक्तम् - नीयते येन श्रुताख्यप्रमाणविषयीकृतस्य अर्थस्य अंशतः तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविषयो नयः।

यदा तूच्यते घटः सर्वथा अस्त्येव तदा एतस्य दुर्नयता भवति। यतो हि अत्र नास्तित्वसम्भावनायाः कश्चन न्यक्कारः क्रियते। आचार्यः अकलंकः श्रुतस्य उपयोगद्वयं प्रतिपादयति एकः स्याद्वादः अपरश्च नयः। वस्तुनः सम्पूर्णाभिधानं स्याद्वादः एकदेशकथनं तु नय इत्युच्यते। यथोक्तम्-

**उपयोगौ श्रुतस्य द्वौ स्याद्वादनयसंज्ञितौ।**
**स्याद्वादः सकलादेशो नयो विकलसंकथेति।।**[२]

स्याच्छब्देन तिङन्तप्रतिरूपकेण निपातेन अत्र अनेकार्थता प्रतीयते। यदुक्तम्- स च तिङन्तप्रतिरूपको निपातः। तस्यानेकान्तविधिविचारादिषु बहुप्वर्थेषु सम्भवत्सु इह विवक्षावशाद् अनेकार्थो गृह्यते।

तत्त्वार्थराजवार्तिकमतेन विविधप्रश्नानुरूपं प्रत्यक्षानुमानाभ्यामविरुद्धं विधिनिषेधकल्पनं सप्तभंगीनय इत्युच्यते।

अष्टसाहस्रीमतेन सप्तभंगो नाम विधिनिषेधकूटः। तद्यथा (१) विधिकल्पना (२) प्रतिषेधकल्पना (३) विधिप्रतिषेधकल्पना (४) युगपद् विधिनिषेधकल्पना (५) विधिकल्पना युगपत्कल्पना च (६) प्रतिषेधकल्पनं युगपत्प्रतिषेधकल्पनं च (७) क्रमेण युगपद् विधिप्रतिषेधकल्पना च।

एतच्च परिभाषितं यशोविजयेन-

इयं सप्तभंगी वस्तुनि प्रतिपर्यायं सप्तविधधर्माणां सम्भवात् सप्तविध-संशयोत्थापितसप्तविधजिज्ञासामूलसप्तविधप्रश्नानुरोधादुपपद्यते।

## दर्शननिकाये वस्तु-सत्तामतभेदः

जैनदर्शनं किमपि वस्तु एकान्तं न मनुते अपितु अनेकान्तम्। तदितरदर्शने

---

१. आ०मी० १०१.

२. स्याद् वा० म०- १८

वस्तुनः एकान्तता स्वीक्रियते, तत्र सांख्यदर्शने कस्यापि पदार्थस्य सर्वदा सत्ता स्वीक्रियते अत एवात्र सत्कार्यवादः अभ्युपगम्यते। न्यायदर्शने तु वस्तुनः उत्पत्तेः प्रागभावः उत्पत्तेः पश्चाद् भावः नाशे पुनरभाव; स्वीक्रियते, अत एवात्र असत्कार्यवादः आद्रियते। नात्र जैनदर्शनवत् युगपद् भावाभावौ वस्तुनः स्वीक्रियेते। अद्वैतदर्शनं जागतिकं वस्तु अनिर्वचनीयं मनुते। शून्यवादिबौद्धदर्शनन्तु पदार्थस्य असत्त्वं शून्यत्वं वा अङ्गीकुरुते। किन्तु जैनदर्शनम् इदं स्वीकरोति यद् अस्तित्वं नास्तित्वं वा वस्तुनः स्वभावो नास्ति। यतो हि वस्तुनः अस्तित्वं स्वभाव इत्यभ्युपगमे घटः अस्ति इति वक्तुं न शक्येत पर्यायताप्रसंगात्। घटो नास्तीति च न प्रयुज्येत सदसत्त्वयोर्विरोधात् वस्तुनो नास्तित्वं स्वभाव इत्यभ्युपगमेपि न निस्तारः। यदुक्तम्-

**घटोस्तीति न वक्तव्यं सन्नेव हि यतो घटः।**
**नास्तीत्यपि न वक्तव्यं विरोधात्सदसत्त्वयोः।।इति।**[१]

एतस्य अनेकान्तवादस्य सर्वेषु दर्शनेषु आदरः स्पष्टं शक्यते अवलोकयितुम्। चार्वाका अमुं वादं स्वीकृत्यैव अभ्युपगच्छन्ति - आपरमाण्वन्तं सर्वत्र चैतन्यं स्वीकुर्वन्तोऽपि जडत्वाजडत्वयोरुभयोर्विकल्पेन जायमानस्य आपामरसाधारणस्य लोक-व्यवहारस्य सिद्धये सर्वव्यापकस्य ज्ञानापरपर्यायस्य चैतन्यस्य क्वचित्स्पष्टत्वं क्वचिच्चास्पष्टत्वम्।

जैनदर्शनस्य एषा अवधारणा विद्यते यत् सर्वाणि दर्शनानि अंशतः सत्यानि अंशतः असत्यानि च प्रतिपादयन्ति। सोऽयम् अनेकान्तवादः जैनदर्शनस्य आधारभूतः सिद्धान्तश्चकास्ति।

जैनदर्शने मुख्यतया प्रमाणद्वयमङ्गीक्रियते प्रत्यक्षं परोक्षञ्चेति। एतद् द्वयमपि भेदोपभेदैर्बहुविधं भवति। प्रमाणस्य नयस्यापि तत्त्वज्ञानपुष्टये उपयोगः अत्र स्वीक्रियते तदङ्गतया जैनदर्शने प्रत्येकं वस्तुनि अनेके धर्माः अङ्गीक्रियन्ते। तेषु धर्मेषु यदा केनापि एकेन धर्मेण वस्तुनो निश्चयः क्रियते तदा नयस्य उपयोगो भवति यथा नित्यत्वधर्मेण आत्मा नित्यं वस्तु इति। यदा तु अनेकैः धर्मैः वस्तुनः अनेकरूपेण निश्चयः क्रियते तदा तत्प्रमाणम्भवति। अनयोः द्वयोरपि ज्ञानं तत्त्वज्ञानाय आवश्यकमस्ति। जैनदर्शने अद्वैतवेदान्तवत् सतो न नित्यता न वा बौद्धमतवत् उत्पादविनाशाभ्यां युक्तता प्रतिक्षणं विनाशिता नापि सांख्यमतमिव चेतनवत् कूटस्थता प्रकृतिवत् परिणामिता वास्ति। नापि न्यायवैशेषिकवत् परमाणोर्नित्यता कार्यस्य अनित्यता वास्ति। किमत्राभ्युपेयते इति चेद्! ये ते ते सिद्धान्ताः ते सर्वेऽपि वस्तुस्वरूपभूताः भवितुमर्हन्ति इति अनेकान्तवादः स्याद्वादशब्देन सप्तनयशब्देन वा स्वीक्रियते। पूर्वोक्तासु सप्तविधासु अवस्थासु द्रव्य-क्षेत्र-काल-भावस्वरूपा-

---

१. ल० त्र० का०, ६२.

णामाधारेण विभिन्नानामवस्थानां सम्भावनामुखेन वस्तुनः सम्पूर्णः परिचयः शक्यते प्राप्तुम्। एतदेव अनेकान्तवादस्य उद्देश्यं प्रतीयते। रामानुजदर्शने एतस्य वादस्य आलोचनं विधीयते। यथोक्तम्;

सप्तभंगिनयः स्वयमेकान्तोऽनेकान्तो वा? आद्ये सर्वमनेकान्तमिति प्रतिज्ञाव्याघातः। द्वितीये विवक्षितार्थासिद्धिः। अनेकान्तत्वेनासाधकत्वात् इति।[१]

**अयमाशयः-** कस्यापि वस्तुनः पारमार्थिकं स्वरूपम् एकमेव भवितुमर्हति सत्त्वमसत्त्वं वा। न हि क्वापि वस्तुनि ऋते देशकालभेदात् कश्चन विकल्पः नानाकल्पो वा स्वीकर्त्तुं शक्यते। अथ विचार्यतां योऽयं सप्तभंगिनयः स एकान्तो वा भवेद् अनेकान्तो वा। आद्ये अनेकान्तता विशीर्येत। अन्त्ये सर्वमनेकान्तमिति भज्येत। यदि सप्तभङ्गिनयः अनेकान्तः स्वीक्रियते तदा एतस्य नयस्य अनेकान्ततया अप्रामाणिकत्वमापद्येत। तथा चात्र लोकोक्तिः लब्धप्रसरा भवेत् - स्वयमसिद्धः कथं परान् साधयेदिति। एवञ्च सर्वस्य वस्तुनः अनेकान्तत्वाभ्युपगमे समग्रस्य दर्शनस्यैव संदिग्धता आपद्येत।

किन्तु विचारणया प्रतीयते यत् समेषां दार्शनिकानां तत्तद्विषये यावत्यो धारणाः विलसन्ति तासु कस्याश्चिदपि अपलापः न युज्यते न वा सम्भवतीति। अतो योऽयम् अनेकान्तवादः स नितरां श्लाध्यः मनोहरश्चाभाति। यदुक्तम्-

**अपर्ययं वस्तु समस्यमानमद्रव्यमेतच्च विविच्यमानम्।**
**आदेशभेदोदितसप्तभङ्गमदीदृशस्त्वं बुधरूपवेद्यम्।।इति शम्।।**[२]

## आत्मपदप्रवृत्तिनिमित्तम् –

अथ यदात्मनः स्वरूपविषयेऽपि तत्परिणामवन्मतभेदो दार्शनिकप्रस्थानेषु विलसति। परं देहादिर्नात्मा, शिव एव तु स्वात्मेति कथं चीयते सैषा काचन जिज्ञासा बुधजनमुपोद्वलयति। तत्रेदम्प्रतिसमाधानं जागर्ति तस्यां तस्यां क्रियायां यस्य कर्तृत्वं भवति स एव आत्मा भवितुमर्हति। यस्तु कस्यांचित् क्रियायां कर्मत्वमप्यनुभवति कर्तृत्वातिरिक्तमन्यद्वा करणत्वादिकमप्यनुभवति स तु आत्मा भवितुं नार्हति। भवति च चैतन्यविशिष्टे देहे अहं स्थूलो गच्छामि भवामि वा। परन्त्वत्र इमं स्थूलं देहं स्पृशामि, पश्यामीति वा कर्तृत्वव्यतिरिक्तं कर्मत्वादिकं यतः देहोऽनुभवति अतः अयमनात्मा भवितुमर्हति।

इयमेव स्थितिः अहं चक्षुषा सूक्ष्ममपि पश्यामि इत्येवमादिव्यवहारे विद्यते। अतः इन्द्रियादेरपि कर्तृत्वव्यतिरिक्तकर्मकरणत्वाद्यनुभूतिविजृम्भणबलाद् आत्मरूपता

---

१. स.द.सं. रा.दर्शनम्. पृ० १०१, २. स्याद्वा० म० का.२३.

प्रतिषिद्धा बाधिता वा भवति। मनसि, बुद्धौ, प्राणे, शून्ये वा उक्तनयेनैव आत्मत्वबाधो भवतीति देहादि-शून्यान्तानां प्रकामम् अहन्तया इदन्तया च प्रथनं भवेन्नाम किन्त्वेतेषामात्मत्वं निष्कलङ्कं निरुपाधिकं च नैव भवतीति दार्शनिकेन विवेचनेन वयं विद्मः।

यस्तु बोधात्मा प्रत्यवमर्शः अहं वेद्मि, जानामि, विमृशामि, प्रत्यभिजानामि, प्रकाशे, स्मरामि इत्येवमादिः स्फुरति-तदेतस्य स्फुरणस्य सुस्पष्टमाश्रयः प्रमाता भवति, ज्ञाता भवति, आघ्राता आस्वादयिता वा भवति। न च कयाचिदपि प्रतीत्या बोधात्मनः प्रत्यवमर्शस्य बाधो भवतीति निर्बाधः अहमनुभवः यं विमर्शं, यां संविदम्, यत्स्फुरणं वा निर्वक्ति तदेवास्य स्वच्छं कर्तृत्वं भवति कर्मत्वादिव्यधिकरणम्। अमुमेव विमर्शं मुख्यमैश्वर्यं[१] वदन्ति आगमिकाः। यश्च विमृशति स एव कर्ता, ज्ञाता, स्वात्मा आदिसिद्धः, प्रमाणानां प्राणभूतःस्वयन्तु प्रमाणनिरपेक्षो भाति, अभात्, भास्यति भाता चेति योऽयं स्वात्मैव महेश्वरः स एवात्मा। स एव च अहमात्मना सदा प्रकाशमानः इदमात्मना यत् प्रकाशते तदस्य विश्वमयं दृश्यं रूपं भवति यत्त्वयमहमात्मना नित्यविमर्शेनामलेन प्रकाशते तदस्य द्रष्टृरूपमित्युच्यते।

सोयं विमर्शप्राणितः प्रकाशः स्वात्ममहेश्वर-शब्देन गीयमानः आत्मा न कयाचित् प्रतीत्या बाधितो भवति एतस्य आत्मनः शिवः, महेश्वरः, शम्भुः, विष्णुः, रामः, कृष्णः शक्तिरित्येवमादीनि सहस्रं नामधेयानि प्रथन्ते। यः शिवयोगी स्वयम् आत्मानम्, तदीयं मुख्यम् ऐश्वर्यं चाधिगच्छति स शिवदास्यमवाप्य कृतार्थो भवति। अथ परोपकाराय यतमानोऽसौ समस्तसम्पत्समवाप्तिहेतुभूताम् आत्मप्रत्यभिज्ञां सर्वेषु जनेषु जनयितुं जयशीलं शम्भुमेव शरणमुपगच्छति।

**परं परस्थं गहनादनादिमेकं निविष्टं बहुधा गुहासु।**
**सर्वालयं सर्वचराचरस्थं त्वामेव शम्भुं शरणं प्रपद्ये।।**[२]

---

१. (क) एवं स्वातन्त्र्ये प्रकाशिते ज्ञानक्रिये अपि प्रकाशिते एव।
तदेव चैश्वर्यमिति किमन्यदप्रकाशितं स्यात्। ई.प्र.वि.,खं. १, पृ. ७८.

(ख) अन्यनिरपेक्षतैव परमार्थत आनन्दः, ऐश्वर्यम्, स्वातन्त्र्यम्, चैतन्यञ्च। ई.प्र.वि., खं. १, पृ. २०७.

(ग) एवं ममेच्छा ज्ञानाख्या क्रियाख्या शक्तिरुच्यते।।
सूर्याचन्द्रमसौ वह्निस्त्रिधामपरिकल्पना।
त्रिनेत्रकल्पना मह्यं तदर्थमिह दृश्यते।।
दहनाप्यायने तेन प्राकाश्यं विदधाम्यहम्। ने० त०, १/२९-३१.

२. प.सा.का. १.

## त्रिविधं मङ्गलम्

शास्त्रेषु मङ्गलाचरणस्य परिपाटी बहुचर्चिता विद्यते। मङ्गलस्य त्रैविध्यमङ्गीकुर्वन्ति सुधियः। परमेकैकस्मिन्नपि मङ्गले अङ्गाङ्गिभावेन तिस्रोपि विधाः प्रतिबिम्बिता विलोक्यन्ते। इदं मङ्गलं परमार्थसारग्रन्थस्य विद्यते। अत्र नमस्काररूपता, आशीर्वादरूपता वस्तुनिर्देशात्मकता चाभाति। परमस्त्येतस्य मङ्गलस्य कश्चनातिशयः यदत्र ईश्वराद्वयवादस्य सर्वे पक्षाः सूचिता भवन्ति। शम्भुः परतत्त्वं विद्यते। सर्वस्माद् उत्कर्षः परशिवे विद्यते। गहननामा रुद्रः मायातत्त्वस्य अधिपतिः अस्ति। शम्भुः गहनात्परस्थः भवति। मायातत्त्वादुत्तीर्णः शम्भुरास्ते। मायायाः किमपि कृत्यं शम्भुं नैव ग्लपयति। असौ न कस्यचिद् उत्पाद्यं, विकार्यम् प्रकाश्यं संस्कार्यमाप्यं वा भवति। सर्वस्माद् वेद्यात् पूर्वसिद्धोऽसौ अनादिः अस्ति। न च सर्वकर्तुः सर्वज्ञाद् व्यापकस्य नित्यस्य पूर्णतृप्तस्य चास्य शम्भोः काचिद् न्यूनता सम्भवति यत्पूर्त्यै अनेकः शम्भुरिष्येत। अतोऽसौ एक एव विजृम्भते नानारूपेण। एकः सन्नप्यसौ प्राणिनां हृद्गुहासु बहुधा प्रविष्टः शिवाद् भेदेन प्रथते प्राणिषु चान्योन्यं भिन्नः सन् प्रथते। अतो कृतहानिर्वा अकृताभ्यागमो वा दूषणं न प्रक्रमते। न च हीयते प्रतिकर्मव्यवस्था।

सर्वं विश्वं शम्भौ आधारभूते चैतन्ये एव आस्ते अतः शम्भुः सर्वालय इत्यभिधीयते। भूतं भौतिकम्, चरम् अचरं च सर्वं यद् भासितं भवति तत्र स्वयं शम्भुरेव स्थितः सन् प्रकाशते तदुच्यतेऽसौ सर्वचराचरस्थः इति। य एवं-विधं सच्चिदानन्दलक्षणं विश्वमयं विश्वोत्तीर्णञ्च स्वप्रकाशं परप्रकाशकं स्वात्ममहेश्वरं सर्वनमस्यमेकमद्वयमात्मानं जानन् श्रद्-धत्ते शरणं चाधिगच्छति, स नूनं सदेहोपि शिवायते।[१] अनुग्रहमूर्तिरसौ परानपि सुखयितुं सदा सम्प्रवर्तते इति शम्भुं, मुक्तात्मानं गुरुं च श्रद्धया नतोहमस्मि।

प्रभुः चिदानन्दैकघनो विद्यते। परमस्वतन्त्रश्चायमास्ते। एष एव निजशक्तिप्रसरसमुद्रेकात् विश्वाच्छादकम् अण्डचतुष्टयं प्रकाशयति। शक्त्यण्डम्, मायाण्डम्, प्रकृत्यण्डम्, पृथिव्यण्डं चेति चत्वारि अण्डानि कोशरूपाणि विश्वम् आच्छादयन्ति। सम्पूर्णमिदं विश्वं प्रमातृप्रमेयरूपेण समुल्लसति। सम्पूर्णस्य विश्वस्य सारः पराहन्ता विद्यते, परं परमेश्वरशक्त्या परमेश्वरस्वरूपस्य अपोहनं क्रियते। स्वरूप-प्रकाशननिषेधरूप इयं शक्तिरख्यातिरित्याख्यायते। सदाशिवप्रभृति शुद्धविद्यापर्यन्तं विश्वमनया शक्त्या आच्छादितं भवति। एतदभ्यन्तरे शेषम् अण्डत्रितयं गर्भीकृतं

---

१. समुज्ज्वलन्यायसहस्रसाधितोऽप्युपैति सिद्धिं न विमूढचेतसाम्।
महेश्वरः पाणितलस्थितोपि सन् पलायते दैवहतस्य सन्मणिः ॥ ई.सि. ५५.

तिष्ठति। शक्त्यण्डस्य अधिपतित्वं सदाशिवेश्वरयोरिष्यते।

द्वितीयमण्डं मायाण्डमित्यभिधीयते। इदमण्डं मोहमयं भवति भेदैकप्रवणं भवति। सर्वप्रमातृनेतद् बन्धयति। मायाप्रभृति पुंस्तत्त्वपर्यन्तम् एतस्मिन्नण्डे अन्तर्भूतं भवति। मायाण्डस्य अधिपतिः गहनसंज्ञको रुद्रो भवति। एतदभ्यन्तरे गर्भीकृतं प्रकृत्यण्डम्, पृथिव्यण्डं च तिष्ठति। पुंसि यद् भोक्तृत्वम् आभास्यते तस्य भोग्यांशं पूरयितुं सत्त्वरजस्तमोमयी प्रकृतिः कार्यरूपेण बाह्याभ्यन्तरकरणरूपेण च परिणता भवति। सेयम् पशुप्रमातृणाम् सुखदुःखमोहरूपं बन्धनमुपकल्पयति। तदिदं प्रकृत्यण्डमित्यभिधीयते। अस्याण्डस्य अधिपतिः भेदप्रधानो महाविभूतिर्भगवान् विष्णुर्भवति।

मनुष्यादारभ्य स्थावरपर्यन्तं यावन्तः प्रमातारो भवन्ति तेषां प्रतिप्रकाररूपमा-बिभ्रती स्थूलकञ्चुकरूपं बन्धनं समर्पयन्ती पृथिवी ''पृथिव्यण्डम्'' इत्यभिधीयते।

अस्मिन्नण्डे चतुर्दशविधो भूतसर्गो विजृम्भते। अस्य अण्डस्य अधिपतिः भगवान् ब्रह्मा भवति।

एषु चतुर्विधेषु अण्डेषु सम्पूर्णं विश्वम् अन्तर्भवति। यदुक्तम्-

**शक्त्यण्डमृत्पिण्डमुपाददानो मायाण्डचक्रभ्रमणक्रमेण।**
**मूलाण्डदण्डेन मुहुर्विधत्ते ब्रह्माण्डभाण्डं भगवान् कुलालः।।** [१]

अत्र मूलपदम् प्रकृतिबोधकं भवति तथा च मूलाण्डं नाम प्रकृत्यण्डम्। विश्वमिदं भोग्यं भवति। तस्य च भोक्ता देहवान् प्राणी भवति। शिव एव कञ्चुकैः नियमितशक्तिर्मायापदे पशुप्रमाता भवन् विश्वस्य भोक्ता सम्पद्यते। विचित्राः तनवः, सातिशयानि करणानि, सातिशयसंस्थानानि भुवनानि चेति समेषामेषाम् अविरतबन्धप्रवाहः विश्वस्मिन् विश्वे प्रवहति।

## अपरिमितो महिमा स्वातन्त्र्यस्य

अथ योऽयं भेदप्रधानो व्यवहारः तत्र ''यो विशेषस्तमाह योगराजाचार्यः-

**तस्मादेतदेव परमेश्वरस्य स्वातन्त्र्यं निरतिशयं यत् पूर्णस्वरूपता-परित्यागेन भोक्तृभोग्यस्वभावं पशुभावम्, आपन्नोपि सर्वप्रमातृणाम् अनुभवितृतया स्वात्मनि प्रस्फुरन् चिदानन्दैकघनः शिव एव इति।** [२]

---

१. पू.प्र.का. १/१९६-तुल.

२. प.सा.वि.का., ५.

यथा स्फटिकमणि: नानाविधान् उपाधिरूपान् आकारान् बिभर्ति अथापि स्वस्वरूपतया प्रथते। तथा स्वातन्त्र्यशक्तिसंवलित ईश्वर: स्वच्छे स्वात्मदर्पणे देवमनुष्यपशुपक्षिस्थावरान्तानां स्वनिर्मितानां वैचित्र्यम् स्वात्माभेदेन धारयन्नपि तत: समुत्तीर्ण एव अहमिति एकं स्वात्मानं प्रत्यवमृशति।[१]

एवञ्च एक एव आत्मा ग्राह्यग्राहकरूपेण नानारूपस्वभावो भवति। पुनश्च सर्वानुभवितृतया सर्वस्य एकतया प्रथते इति अद्वयत्वं नास्य व्याहन्यते।

अयं चात्मा सूक्ष्म:, व्यापक: सर्वत्रैव विद्यमानोऽपि प्राकट्यं नोपयाति। यदा त्वसौ कंचिद् विषयमधिकरोति तदा बुद्धिदर्पणे निर्मले प्रतिबिम्बति न पुन: लोष्टादौ।[२]

## शक्तिपातो विशिष्यते

कश्चन जनो दर्पणसम्मुखो भवति। दर्पणश्चेद् मलानावृतो भवति तदा तस्य मुखं तत्र प्रतिबिम्बति तथैव यस्य बुद्धि: शक्तिपातवशाद् निर्मला भवति तत्रैव प्रकाशात्मन: स्वात्मनो भानं भवति।[३]

विलक्षण: क्रीडारसिक: प्रभु: अद्वयमयोपि मायास्वातन्त्र्यवशात् स्वात्मनि भेदमयं भाववर्गं प्रकाश्य तस्मिन् स्वात्मकल्पे कांश्चित् वेद्यखण्डान् पुर्यष्टकरूपान् अहन्तारसैरभिषिच्य वेदकतया उन्नयति, कांश्चित्पुनरसौ वेद्यभावं गमयतीति तदिच्छैव जडाजडव्यवहारनियामिका भवति।[४]

प्रभो: अनुग्रहशक्ति: स्वकिरणविस्फारद्वारा त्रिविधमलवासनाक्षयपुर:सरं येषां प्रतिभां विशदयति ते मुक्तकल्पा भवन्ति। येषां बुद्धिं प्रभोर्निग्रहशक्ति: त्रिविधमलेन समाच्छादयति तेषां बुद्धौ भारूपोऽप्यात्मा अभातकल्पो भवति। येषां बुद्धौ उभयशक्तियोगो भवति ते आरुरुक्षवो भवन्ति। तदिदं शक्तिपातवैचित्र्यं शास्त्रेषु बहुधा वर्ण्यते।[५]

अण्डचतुष्टयमध्ये शिवादि-धरणीप्रान्तं यत् षट्त्रिंशत्- तत्त्वमयं विश्वं समुल्लसति तदाभासक: परशिवो भारूपो विद्यते। आप्तकामोऽसौ परिपूर्णं तृप्त: स्वमहिम्नि प्रतिष्ठित: आनन्दघन: चिदानन्दैषणाज्ञानक्रियाशक्तिसुनिर्भर: शुद्ध: शान्तो विकल्परहितो राराजते।

---

१. प.सा.वि.का., ६.

२. प.सा.वि.का., ७.

३. प.सा.वि.का., ९.

४. प.सा.वि.का., ८.

५. प.सा.वि.का., ९.

प्रकाशमानं चैतद् जगद् परमेश्वराद् भेदाभेदरूपं भाति। किमिवेति जिज्ञासायामुच्यते। दर्पणे प्रतिबिम्बितं घटपटादिवस्तुजातं दर्पणात् पृथक् यद्यपि स्वमस्तित्वं न धारयति तथापि ततो भिन्नं भाति अन्योन्यं च भिन्नं भाति ततोऽस्य भेदाभेदरूपता इष्यते तथैव बोधभैरवाद् अविभक्तमपि ततोऽन्योन्यं च विभक्तं जगद् भाति। इयांस्तु विशेषः, दर्पणः स्वच्छतामात्रसनाथो भिन्नं बाह्यं प्रतिबिम्बयति। बोधाख्यः प्रकाशस्तु स्वच्छन्दतासनाथोपीति स्वचमत्कारसारः स्वेच्छया स्वभित्तौ स्वसंविदुपादानं विश्वम् अभेदेन परामृशन् आभासयति। यदुक्तम्-

**अन्तर्विभाति सकलं जगदात्मनीह**
**यद्वद् विचित्ररचना मुकुरान्तराले।**
**बोधः पुनर्निजविमर्शन-सारयुक्त्या**
**विश्वं परामृशति नो मुकुरस्तथा तु।।इति।** [१]

**श्रीशुद्धाध्वा–**

परमेश्वरापेक्षया स्वाङ्गनिर्मिते भावराशौ भेदभ्रान्तिर्न भवति किन्तु माया-प्रमात्रपेक्षया तु भेदावभासो भवति। प्रथमम् परशिवेन चिदादिशक्तीनाम् एकैकप्राधान्येन पञ्चशुद्धाध्वाभासनं क्रियते। तदेतत् तत्त्वपञ्चकं प्रथते- शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या चेति। यदुक्तम्-

**चिदानन्दैषणाज्ञानक्रिया- पञ्चमहातनुः।**
**विवर्तते महेशानस्तत्तद्वर्गेषु पञ्चधा।।** [२]

तत्र पूर्णाहन्ताचमत्कारमयं महाप्रकाशवपुश्चैतन्यं शिवतत्त्वम्। विश्वं भवामीति परामृशतो भगवतः आनन्दरूपा विश्वभावस्वभावमयी सर्वभावानां बीजभूमिः संविदेव शक्तितत्त्वम्।

बीजभूमौ ''अहमिदम्'' इति अभेदेन पूर्णाहन्तामयश्चमत्कारः सदाशिवतत्त्वम्। अस्मिन् तत्त्वे मन्त्रमहेश्वराः प्रमातारः तिष्ठन्ति।

अहमिदमिति अभेदेन अहन्तेदन्तयोः समधृततुलापुटन्यायेन ज्ञानप्राधान्येन यः स्वात्मचमत्कारः तदेतदीश्वरतत्त्वम्। अत्र मन्त्रेश्वराः प्रमातारः तिष्ठन्ति।

अहमिदम्इत्यत्र इदन्ताप्राधान्येन अहन्तागुणीकारेण ''अहम् - अहम्'' इति ''इदम् - इदम्'' इति वा अभ्यावृत्तिः बोधसाररूपा शुद्धविद्यातत्त्वम्।

---

१. प.सा.योग.वि.पृ०७९./ ई० प्र० वि० वि० ३/२/१

२. श्रीत.आ., ६/४९.

**कञ्चुकषट्कम्**

मायापरिग्रहवशाद् सर्वज्ञत्व-सर्वकर्तृत्वमयोपि "बोध:" सर्वज्ञत्वादिगुणमपहस्तयन् अख्यातिस्वरूपम् मलम् आपद्यते। मीयते-परिच्छिद्यते धरान्त: प्रमातृप्रमेयप्रपञ्चो यया सा माया[१] मोहयति विश्वं या सा माया इत्यन्वर्थं नामैतत्।[२]

हा हन्त! अस्या एव मायाया: पाल्य: पाश्यश्च सन् शिव: पशुतामापद्यते। आणवेन मायीयेन कार्मेण च मलेन पाशसंज्ञकेन माया एनं पाशयति।[३]

तदेवं बोध: स्वमायया अणुतां प्राप्तो भवति। तदीया ज्ञानशक्ति: विद्यया[४] संकुच्यते क्रियाशक्तिस्तु कलया संकुच्यते।[५]

---

१. (क) माया च नाम देवस्य शक्तिरव्यतिरेकिणी।
भेदावभासस्वातन्त्र्यं तथाहि स तया कृत:।। श्रीत.आ. ६/११६.

(ख) एकरसे स्वभावे उद्भावयन्ती विकल्पशिल्पानि।
मायेति लोकपते: परमस्वतन्त्रस्य मोहिनी शक्ति:।। म.म., १७.

(ग) अधस्ताच्छुद्धविद्याया मायाया उपरिस्थिता।
महामाया यया सुप्ता अणवो मनव: स्मृता:।। पू.प्र.का.,१/१५३

२. रागो माया कला विद्या नियति: काल एव च।
पञ्चकृत्याश्रया: सर्वे पाशाश्चेति प्रकीर्तिता: ।। श्रीक्रमोदय:। पृ० ३५

३. आद्यो भेदावभासो यो विभागमनुपेयिवान्।
गर्भीकृतानन्तभाविविभागा सा परा निशा।। श्रीत.आ. ६/११६
सा जडा भेदरूपत्वात् कार्यं चास्या जडं यत:।
व्यापिनी विश्वहेतुत्वात् सूक्ष्मा कार्यैककल्पनात्।।
शिवशक्त्यविनाभावाद् नित्यैका मूलकारणम्। श्रीत.आ. ६/११७.

४. सर्वज्ञताऽस्य शक्ति: परिमिततनुरल्पवेद्यमात्रपरा।
ज्ञानमुद्भावयन्ती विद्येति निगद्यते बुधैराद्यै:।। ष.त्रि.त.स.का. ९.

५. (क) सम्पूर्णकर्तृता या बह्व्य: सन्ति शक्तयस्तस्य।
संकोचात् संकुचिता कलादिरूपेण रूढयन्त्येवम्।।
षट्त्रिंशत्. त० स० का, ०७
तत्सर्वकर्तृता सा संकुचितकतिपयार्थमात्रपरा।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कला नाम।। ष.त्रि.त.स.का. ८.

(ख) कला हि किञ्चित्कर्तृत्वं सूते स्वालिङ्गनादणो:।
तस्याश्चाप्यणुनान्योन्यं ह्यञ्जनं सा प्रसूयते।। श्रीत. पृ. १३६.
सेयं कला न करणं मुख्यं विद्यादिकं यथा।
पुंसि कर्तरि सा कर्त्री प्रयोजकतया यत:।। श्रीत. पृ. १४२.

अधुनैव जानामि, इदं मया ज्ञातम्, जानामि, ज्ञास्यामि, कृतं, करोमि, करिष्ये इत्यवेम् ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् अवच्छिनत्ति यदसौ कालः तृतीयः कञ्चुकः।[१]

नियतात् करणाद् नियतं कार्यं यदसौ अर्थयते यथा वह्नेरेव धूमः इत्येवं नियमेन यया शक्त्या आत्मानं नियमयति सा नियतिरित्युच्यते।[२]

सर्वात्मना इति या इयम् अपूर्णम्मन्यता, सर्वम् मम इदमुपयुज्यते,भूयासम्, मा कदाचिद् न भूवम्, इत्येतत् पशोः रागतत्त्वम् अभिधीयते। रागवशादेव पुरुषः अशुचिष्वपि भोगेषु प्रवर्तते। यदुक्तम्-

**रागोपि रञ्जयत्येनं स्वभोगेष्वशुचिष्वपि।इति।**[३]

**किञ्चित्तु कुरुते तस्मान्नूनमस्त्यपरं तु तत्।**
**रागतत्त्वमिति प्रोक्तं यत् तत्रैवोपरञ्जकम्।।**[४]

न च तद् बुद्धिगतमवैराग्यमेव, तद्धि स्थूलं, वृद्धस्य प्रमदायां न भवेदपि, रागस्तु भवत्येव। बुद्धिधर्माष्टकेऽपि च दृष्टोऽभिष्वंगः।[५]

माया, कलां जनयति। कला, विद्यादिचतुष्टयं जनयति। तदेवं माया, कला, विद्या, रागः, नियतिः, कालश्चेति कञ्चुकषट्कम् केवलम् आगमदर्शने विजृम्भते।

एतत् कञ्चुकषट्कं पूर्णसंवित्स्वरूपाद् व्यतिरिच्यते अथापि अव्यतिरिक्ततया तद् आच्छाद्य स्थितं भवति। तण्डुलाद् व्यतिरिक्तमपि कम्बुकं ततोऽव्यतिरिक्तमिव

---

१. कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस् तदनुसारेण प्रमेयेपि प्रसरति। योऽहं कृशोऽभवं स स्थूलो वर्ते, भविष्यामि स्थूलतरः, इत्येवमात्मानं देहरूपं क्रमवन्तमिव परामृशन् तत्सहचारिणि प्रमेयेपि भूतादिरूपं क्रमं प्रकाशयति। ई० प्र.वि.भा., भाग-१, पृ. २३७.

२. (क) नियतिः, ममेदं कर्तव्यं नेदं कर्तव्यम् इति नियमनहेतुः। प.प्र., पृ.९.
(ख) नियतिर्नियोजयत्येनं स्वके कर्मणि पुद्गलम्। मा.विजयो., १/२९.
(ग) नियतिर्नियोजनां धत्ते विशिष्टे कार्यमण्डले। श्रीत०आ०, भाग-६,पृ. १६०
(घ) नियच्छति भोगेषु अणूनिति नियतिः। श्रीत०आ० .टी., भाग-६, पृ. ४६.
(ङ) याऽस्य स्वतन्त्रताख्या शक्तिः संकोचशालिनी सैव।
कृत्याकृत्येष्ववशा नियतममुं नियमयन्त्यभून्नियतिः।। ष०त्रिं०, पृ.१२.

३. मा.वि.त. १/२८.

४. श्रीत. भाग-६, पृ. १५७.

५. ई.प्र.वि., भाग-२, पृ. २३८.

तण्डुलकणविनिविष्टं सद् अन्तरङ्गतया स्थितमत्र दृष्टान्ततया स्वीक्रियते।

**मायासहितं कञ्चुकषट्कमणोरन्तरङ्गमिदमुक्तम्।।**
**कम्बुकमिव तण्डुलकणविनिविष्टं भिन्नमप्यभिदा।** [१]

इदञ्च पशुत्वापादकं कञ्चुकावरणं तावद् न विलीयते यावत् स्वात्मज्ञानं नाविर्भवति। स्वात्मज्ञानस्य विमर्शनप्रकारः ''ममैव इदं विश्वं स्वशक्तिविजृम्भणमात्रम्'' इति ''परमाद्वय- चिदानन्दैकघनोस्मि'' इति ''अहमेव महेश्वरोस्मि'' इत्येवमादिको भवति।

परमेवंविधो विमर्शः तदा सम्भवति यदौन्मुख्ययोगेन पशोर्हृदयं परमेश्वरशक्तिपातेन विशुद्धिमेति।मायीयं किमपि नियतिनियन्त्रितं कर्म कञ्चुकमयमावरणं भेत्तुं कथमपि न प्रभवति। यदुक्तम्-

**भजते तत्तु विशुद्धिं शिवमार्गौन्मुख्ययोगेन।इति।** [२]

तदेवं शिवतत्त्वमारभ्य कालतत्त्वपर्यन्तं यान्येकादश तत्त्वानि भवन्ति। आगमदर्शनेष्वेव एतेषां परिकल्पना विहितास्ते। तुर्यातीतावस्थापन्नः परशिवः अद्वयमयो भवति। तस्य तुर्यावस्था विद्यते पञ्चतत्त्वमयः शुद्धाध्वा। एषः शुद्धाध्वा महेश्वरस्य अभेदेन स्फुरणात्मा विश्वमयावस्था समुल्लसति। मायादिकालतत्त्वान्तं यत् कञ्चुकषट्कं शिवस्य तदिच्छयैव पशुत्वापादकं तदेतस्य भेदाभेदेन स्फुरणात्मा विश्वमयावस्था समुल्लसति।

## भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः

एकादश तत्त्वानि इमानि आत्मसात्कृत्य महेश्वरः पुमानिति[३] संज्ञया प्रथितः प्राणपथमवतरन् अणुरिति प्रथां लभते। स च भोक्ता भोग्यमपेक्षते।

---

१. प.सा.का. १७/१८.

२. प.सा.का. १८.

३. (क) कलाविद्याकालरागनियतिभिरोतप्रोतो माययापहृतैश्वर्यसर्वस्वः सन् पुनरपि प्रतिवितीर्णतत्सर्वस्वराशिमध्यगतभागमात्र एवम्भूतोऽयं मितः प्रमाता भांति इदानीमिदं किञ्चिज्जानानः, इदं कुर्वाणोऽत्र रक्तः, अयमेव च यः सोऽहम्। इति। विमर्शिनी भास्करी, भा.-२, पृ. २३८.

(ख) पर एव प्रकाशः स्वस्वातन्त्र्यात् स्वरूपं गोपयित्वा यदा संकुचितात्मतामवभासयति तदा सकल एवायं भेदव्यवहारः समुल्लसेत्। श्रीत०आ० टीका १५६.

(ग) इदमेव च पञ्चविंशं पुंस्तत्त्वमित्युच्यते यत् श्रीपूर्वशास्त्रेषु पुमानिति, अणुरिति पुद्गलमिति चोक्तम्। श्रीत०आ० टीका, पृ. १६५.

अणोर्भोक्तुः भोग्यसमर्पणाय कला, प्रकृतिं जनयति त्रिगुणात्मिकाम्, प्रकृतिस्तु महदादिधरणी-प्रान्तं त्रयोदश तत्त्वव्रातम्। तदेवं भोक्तृभोक्तव्यभावापन्नं पञ्चविंशति-तत्त्वजातं सांख्यैरपि स्वीकृतं महेश्वरस्य भेदेन स्फुरणात्मा विश्वमयावस्था समुल्लसति।

एतदुक्तम्भवति- महेश्वरः शुद्धाध्वनि अभेदेन अहमात्मना स्फुरति। मायिके कञ्चुकमये तत्त्वव्राते भेदाभेदात्मना "अहमिदम्" इत्येवमात्मना स्फुरति। भोक्तृ-भोग्यापन्ने तत्त्वव्राते त्वसौ भेदात्मना "इदम्" इति परिस्फुरति।

प्रधानाख्या प्रकृतिः सत्त्वरजस्तमसां साम्यावस्थारूपा त्रयोविंशतिधा स्फुटभेदं वेद्यं जनयन्ती मूलकारणतया दर्शनेषु सत्कार्यवादमण्डिता प्रतितिष्ठति।[१]

## सांख्यनये त्रिविधं प्रमाणम्

स्फुटवेद्यस्य इदमात्मनः त्रयोविंशतिधा प्रसृतस्य मूलं कारणं प्रधानं "प्रकृतिः" इत्याख्यायते। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरित्युच्यते। सांख्यनये जगतः मूलं कारणं किमिति जिज्ञासायाम् कारणद्वयं स्वीक्रियते - पुरुषः प्रकृतिश्चेति। "प्रमेयसिद्धिः प्रमाणाद्धि" इत्येवं प्रतिज्ञाशालिनः सांख्याचार्याः प्रमाकरणस्य प्रमाणस्य त्रैविध्यम् अङ्गीकुर्वन्ति। प्रत्यक्षम्, अनुमानम्, आगमश्चेति।

घटपटादीनां प्रमेयाणां प्रत्यक्षेण सिद्धिर्जायते। प्रधानस्य पुरुषस्य च सौक्ष्म्यात् प्रत्यक्षेण उपलब्धिर्न भवति किन्तु अनुमानेन सिद्धिर्भवति। अनुमानं तावद् द्विविधं भवति। वीतम्, अवीतञ्च। अनयोः परिभाषा तत्त्वकौमुदीकृता प्रोक्ता-अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्। व्यतिरेकमुखेन प्रवर्तमानं निषेधकम् अवीतम्।[२]

अवीतम् इत्यस्य अपरं नामधेयं भवति शेषवदिति। शिष्यते = परिशिष्यते इति शेषः। स एव विषयतया यस्य अनुमानज्ञानस्य तच्छेषवदिति। एतस्य अवीतानुमानस्य केवलव्यतिरेकिणः उदाहरणं भवति- न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात्, इह यद् यतो भिद्यते, तत् तस्य धर्मो न भवति, यथा गौरश्वस्य। धर्मश्च पटस्तन्तूनां, तस्मान्नार्थान्तरम् इति।

वीतमनुमानन्तु द्विधा भवति - पूर्ववत्, सामान्यतोदृष्टं च। तत्र पूर्ववदनुमानस्य

---

१. (क) त्रयोविंशतिधा मेयं यत्कार्यकरणात्मकम्।
तस्याविभागरूप्येकं प्रधानं मूलकारणम्।। ई.प्र.वि., पृ. २३९.

(ख) वेद्यमात्रं स्फुटं भिन्नं प्रधानं सूयते कला। श्रीत०आ०, पृ. १७१.

२. (क) त्रिविधमनुमानमाख्यातम्। तल्लिङ्गलिङ्गिपूर्वकम्। सां.का. ५.

(ख) सां.त.कौ., का. ५, पृ. ५१.

उदाहरणं यथा धूमाद् वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते। तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषे दृष्टो रसवत्याम्।[१]

वीतप्रभेदस्य द्वितीयस्य सामान्यतोदृष्टस्य स्वरूपादिकं मिश्रचरणैः वितत्य निरूपितम्। यथा - अपरञ्च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयम्। यथेन्द्रियविषयकमनुमानम्। अत्र हि रूपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते इति।[२]

एवं च प्रधानस्य, पुरुषस्य, इन्द्रियस्य अन्यस्य चातीन्द्रियस्य वस्तुनः प्रतीतिः सामान्यतोदृष्टेन शेषवदित्यनुमानेन वा भवति। सतोपि प्रधानादेः प्रत्यक्षं यन्न भवति तत्र अतिदूरत्वादीनां नवविधानां मध्ये सूक्ष्मत्वं हेतुः। अनुपलब्धौ सतः वस्तुनः नव हेतवो भवन्ति - अतिदूरत्वम्, अतिसामीप्यम्, इन्द्रियघातः, मनोऽनवस्थानम्, सौक्ष्म्यम्, व्यवधानम्, अभिभवः, समानाभिहारः, अनुभवश्चेति। यदुक्तम्-

**अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।**
**सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च।। इति।**[३]

## अनुमेयम् प्रधानम् –

प्रकृतिसरूपाद् विरूपाच्च महदादिकात् कार्यतः सौक्ष्म्यात्तु प्रत्यक्षेणानुपलभ्यमानस्य प्रधानस्य अनुमेयता इष्यते। यदुक्तम्-

**सौक्ष्म्यात् तदनुपलब्धिर्नाभावात् कार्यतस्तदुपलब्धेः।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च।।**[४]

प्रपञ्चितं चैतत् टीकाकृद्भिः मिश्रचरणैः तत्त्वकौमुद्याम् निम्नाङ्कितकारिकाव्याख्यानमुपस्थापयता-

**भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।**
**कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य।।**[५]
**कारणमस्त्यव्यक्तम् –......................**

अनुमानेन पुरुषः, तद् बहुत्वं च सिध्यति-पुरुषस्य सिद्धिस्तु यथा अनुमानप्रमाणेन भवति तथा निम्नाङ्कितकारिकामवलम्ब्य मिश्रचरणैः विस्तरेण प्रतिपादितम्-

---

१. सां.त.कौ., का. ५.

२. सां.त.कौ., का. ५.

३. सां.का. ७.

४. सां.का. ८.

५. सां.त.कौ., का. १५-१६.

**सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च।।** [१]

अनुमानप्रमाणेन प्रमितस्य पुरुषस्य बहुत्वमपि युक्त्या अनुमानेन सिध्यति-

**जननमरणकरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव।।** [२]

यतश्च त्रिगुणात्मिका प्रकृतिः, गुणानां च सुखदुःखमोहात्मकता भवति अतः कारणगुणप्रक्रमेण सुखादिरूपता प्राकृते बुद्ध्यादौ पृथिव्यन्ते समनुगच्छति।

**प्रकृतेः कार्याणि –**

प्रकृतिः पूर्वम् अन्तःकरणत्रयं जनयति। ये गुणाः अङ्गाङ्गिभावं विना प्रकृतौ तिष्ठन्ति ते अङ्गाङ्गिभावमुपाश्रित्य निश्चयम्, संकल्पनम् (मननम्) अभिमानञ्च वृत्तितया प्रकल्प्य क्रमेण बुद्धिं मनः अहंकारं च जनयन्ति। यदुक्तम्-

**सुखदुःखमोहमात्रं निश्चय - संकल्पनाभिमानाच्च।**
**प्रकृतिरथान्तःकरणं बुद्धिमनोऽहङ्कृति क्रमशः।।** [३]

एतदनन्तरम् बाह्यानि द्विविधानि इन्द्रियाणि आविर्भवन्ति।

तत्र इन्द्रियाणि अहङ्कारस्य सात्त्विकांशेभ्यः समुत्पद्यन्ते, तन्मात्राणि तु तामसेभ्यः, अथ उभयम् राजसेभ्यः। यथोक्तम्-

**सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्।।** [४]

तत्र शब्दस्पर्शरूपरसगन्धेषु क्रमेण श्रोत्रं,त्वग्,अक्षि, रसनं, घ्राणं च ग्राहकम् इन्द्रियं प्रवर्तते। अथ वचनादानविहरणोत्सर्गानन्देषु विषयेषु क्रमेण वाक्, पाणिः, पादः, पायुः, उपस्थं च कर्मेन्द्रियं सम्प्रवर्तते। यदुक्तम्-

**श्रोत्रं त्वगक्षिरसनाघ्राणं बुद्धीन्द्रियाणि शब्दादौ।**
**वाक्पाणिपादपायूपस्थं कर्मेन्द्रियाणि पुनः।।** [५]

---

१. सां.त.कौ., का. १७.

२. सां.का. १८.

३. प.सा.का. १९.

४. सां.का. २५.

५. प.सा.का. २०.

**शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्।।** [१]

**एषां ग्राह्यो विषयः सूक्ष्मः प्रविभागवर्जितो यः स्यात्।**
**तन्मात्रपञ्चकं तच्छब्दः स्पर्शो महो रसो गन्धः।।** [२]

दश बाह्येन्द्रियाणि त्रीणि आभ्यन्तराणि इन्द्रियाणि- मिलित्वा त्रयोदश-संख्याकानि भवन्ति। तत्र वागादीनि कर्मेन्द्रियाणि स्वविषयान् आहरन्ति। आभ्यन्तराणि इन्द्रियाणि बुद्ध्यहंकारमनांसि स्ववृत्त्या प्राणादिलक्षणया धारयन्ति। बुद्धीन्द्रियाणि श्रोत्रादीनि स्वविषयान् प्रकाशयन्ति। यदुक्तम्-

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।**
**कार्यञ्च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च।।** [३]

एषु त्रिविधं यदन्तःकरणं, तस्य विषयान् आख्याति दशविधं बाह्यं करणम्। बुद्धीन्द्रियाणि आलोचनद्वारा संकल्पाभिमानाध्यवसायेषु द्वारम् भवन्ति। कर्मेन्द्रियाणि तु यथास्वं द्वारं भूत्वा अन्तःकरणानि व्यापारयन्ति। यथा वाग् वचनं जनयति, पाणिः आदान-प्रदानम्, पादः भ्रमणम्, पायुः उत्सर्गम्, उपस्थः आनन्दं जनयति।

अथ बाह्यम् इन्द्रियं केवलं वर्तमानकालिकमेव विषयं गृहणाति। आभ्यन्तरं करणं तु त्रिकालवृत्तिपदार्थसार्थं गृहणाति। यदुक्तम्-

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्।।** [४]

तत्रापि बुद्धीन्द्रियाणि स्थूलं सूक्ष्मं च शब्दादिकं विषयतया गृहणन्ति। कर्मेन्द्रियेषु वाक् स्थूलशब्दमात्रं विषयं गृहणाति, अन्यानि कर्मेन्द्रियाणि तु शब्दस्पर्शरूपरसगन्धेति पञ्चात्मकं घटादिकं विषयीकुर्वन्ति। यदुक्तम्-

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।**
**वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि।।** [५]

यतश्च बाह्येन्द्रियैः उपनीतं विषयम् अन्तःकरणत्रयम् अवगाहते तस्माद्

---

१. सां.का. २८.

२. प.सा.का. २१.

३. सां.का. ३२.

४. सां.का. ३३.

५. सां.का., ३४.

बाह्येन्द्रियाणि द्वाराणि भवन्ति सान्तःकरणा बुद्धिस्तु द्वारवती भवति।[१]

एवञ्च भोक्तुः पुरुषस्य भोग्यम्, भोगकरणम् महदादिकम्, इन्द्रियवर्गं च विषयं तन्मात्रादिकम्, भूतपञ्चकम्, भौतिकं च वस्तुजातम् प्रकृतिः महदादिक्रमेणोत्पाद्य उपकरोति। एकस्मिन् जीवने व्यतीते पुनः जीवनान्तरं लभ्यते। तत्र स्थूलशरीरं जीवनान्तरं न गच्छति। स्थूलशरीरत्यागः, तन्नाशश्च प्राणवियोगसमनन्तरमेव भवतः। परं सूक्ष्मशरीरं, कारणशरीरञ्च जीवनान्तरेऽपि जीवमनुगच्छति। जीवः पूर्वजन्मनि अनुभूतम् जरामरणादिजन्यं दुःखम् अनुभवति, दुःखसंस्कारवांश्च भवति। अत एवासौ जन्मजरामरणादिभ्यो बिभेति। अतएव कृमिपर्यन्तस्य जीवस्य मरणत्रासो भवति- मा न भूवम्, भूयासम् इति। यदुक्तम्-

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।**
**लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन।।**[२]

आगमिकः समेषां दर्शनानां सिद्धान्तान् सम्मानयति अथ तान् आत्मसात्कर्तुं प्रत्यभिज्ञासिद्धान्तैः सह समरसतामापादयति ततश्च तान् पूर्णतां गमयति। गुरुभिः प्रकाशितेयं पूर्णता, अस्माकं निसर्गसिद्धां शिवतां प्रकाश्य चमत्कृतानस्मान् विधाय कृतार्थयति। परिचीयतां तावदागमसंविद्।

समेषामस्माकं स्वात्मभूतो महेश्वरः सर्वोत्कर्षेण विद्यते। अयमेव परमं तत्त्वम् अस्ति। आगमिका आचार्या एनमेव महेश्वरम् ''अनुत्तरम् तत्त्वम्'' कथयन्ति। तदेतत् परात् परतरं तत्त्वम् आगमदर्शने स्वीक्रियते। अस्मादेव सम्पूर्णस्य विश्वस्य सृष्टिः भवति। अनुत्तरमहेश्वरः कुलसंज्ञकस्य विश्वस्य सृष्टिसंहारकृद् ''अकुल''[३] इत्याख्यायते।

## कुलम्—

जडात्मकं चराचरं जगत् कुलपदवाच्यं भवति। अभिनवगुप्तपादः कुलं प्राणेन्द्रियभूतादिसमूहमुररीकरोति।[४]

जयरथः शाक्तप्रसरात्मकं जगत् कुलपदवाच्यमित्यङ्गीकुरुते।[५]

अन्यत्र गुप्तपादः प्रमातृप्रमाणप्रमेयेति त्रिकमयं विश्वं कुलपदवाच्यमिति प्रतिपादयति।[६]

---

१. सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि।। सां.का., ३५.

२. सां.का., ५५.

३. अनुत्तरं परं धाम तदेवाकुलमुच्यते। श्रीत.आ., ३/१४३.

४. कुलं स्थूलसूक्ष्मपर-प्राणेन्द्रिय भूतादिसमूहात्मतया ..... इति। प.त्री.वि., पृ. ३२.

५. ''कुलस्य शाक्तप्रसरात्मनो जगतः।'' श्रीत.वि., खं.-२, पृ. ७६.

६. ''कुलं ग्राह्यग्राहकग्रहणचक्रम्।'' प.त्री.ल.वृत्ति., पृ. ३.

आचार्यमहेश्वरानन्दः देहेन्द्रियभुवनात्मकं विश्वविलासं कुलशब्दवाच्यं स्वीकरोति।[१]

पारमेश्वरी शक्तिरेव कुलम्, स्वातन्त्र्यम्, सामर्थ्यम्, ओजः, संविदिति वा कथ्यते।[२] साधनाक्रमे दक्षिणाचारादपि कुलाचारस्यास्य उत्तमयोगरूपता स्वीक्रियते।[३] कुलाचारः, कौलाचारश्च परस्परं भिद्येते।[४] श्रीरत्नमालाकृन्मते तु वामदक्षिणाचारयोः सामरस्यमयी साधना कौलपदेनोच्यते। परशिवप्राप्तौ कुलसाधनायां कौलं द्वारतया तिष्ठति।[५]

**एतदुक्तं भवति**- परा-संविदेव, ''परमः शिवः'', ''शिवः'', ''शक्तिश्चेति'' तत्त्वत्रयतया भासमाना अकुलमित्युच्यते। सदाशिवतत्त्वं द्वारीकृत्य अकुलस्यैव कुलरूपतया प्रथनं भवति। स्वातन्त्र्याख्या शक्तिरेव अकुलस्य कुलरूपतया प्रथने हेतुभावं भजते।[६] गुप्तपादाः पर्यन्ततः विप्रतिपत्तिचतुष्टयातीतम् अनुत्तरतत्त्वमिति अभिप्रयन्ति।[७]

**अनुत्तरपदव्युत्पत्तिः–** परात्रीशिकाविवरणे अनुत्तरपदस्य षोडशधा विवरणं प्राप्यते।[८]

---

१. ''कुलस्य देहाक्षभुवनादेर्विश्वविलासस्य।'' म.मं.प., पृ. १८.

२. कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता।
स्वातन्त्र्यमोजो वीर्यं च पिण्डः संविच्छरीरकम्।। श्रीत.आ., २९/४.

३. वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्।। उद्धृ., प.त्री.वि., पृ. ९२.

४. क्रमिकः शक्तिपातश्च सिद्धान्ते वामके ततः।
दक्षे मते कुले कौले षडर्धे हृदये ततः।। श्रीत.आ., १३/३००.

५. (क) उक्तं श्रीरत्नमालायामेतच्च परमेष्ठिना।
अशेषतन्त्रसारन्तु वामदक्षिणमाश्रितम्।
एकत्र मिलितं कौलं श्रीषडर्धकशासने।। श्रीत.आ., ३७/२५.

(ख) कुलं शक्तिरिति प्रोक्तमकुलं शिव उच्यते।
कुलेऽकुलस्य सम्बन्धः कौलमित्यमिधीयते।। कुलार्णवत.उल्लास-१०

६. ''यतोऽयं कौलिकी विधिः प्रभवति, यत्र च प्रतिष्ठापदवीं भजते, यन्मयं चेदं कौलिकम्, तदेवानुत्तरमित्युक्तम्।'' प.त्री.वि., पृ. ९५.

७. न सन्न चासत् सदसन्न च तन्नोभयोज्झितम्।
दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम्।। श्रीत.आ., २/२८.

८. अनुत्तरं तद्धृदयं हृदये ग्रन्थिरूपता।
ग्रन्थिं षोडशधा ज्ञात्वा कुर्यात् कर्म यथासुखम्।। प.त्री.वि., पृ. ३१.

उदाहरणरूपेण कानिचिद् विवरणानि उपस्थाप्यन्ते[१]

१. उत्तरन्त्यतः इति उत्तरो बन्धः, उत्तरणमुत्तरो मोक्षः, तदेवंविधा उत्तरा यत्र न सन्ति तदनुत्तरम्।

२. ''उत्तरञ्च शब्दनम्, तत्सर्वथा ईदृशं तादृशमिति व्यवच्छेदं कुर्यात्। तद् यत्र न भवति अव्यवच्छिन्नमिदमनुत्तरम्।''

३. उत्तराः पश्यन्त्याद्याः शक्तयः अघोराद्याः, पराद्याः, ता यत्र न स्युः, तदनुत्तरम्।

४. अनिति = श्वसिति इति क्विपि अन्, अणुरात्मा देहपुर्यष्टकादिः, तथा अननं जीवनम् = अन्, देहाद्यन्तर्गतैव भिन्नभिन्नशक्त्याद्यहन्तया शून्यप्राया जीवनाख्या वृत्तिः, यः शून्यप्रमाता इत्यभिहितः। तस्यैवोत्तरत्वं सर्वतः परमार्थतयाधिक्यं यत्र, भैरवैकमयत्वात्। शुद्धसंवित्स्वभावस्य अस्यानुत्तरस्य स्वात्ममहेश्वरस्य अहमित्यात्मा परामर्शः अविच्छिन्नतया प्रथते। सोऽयं परमेश्वरस्य परमेश्वरताबीजभूतः स्वभाव आस्ते। अयमेव शुद्धचिद्विमर्शशब्देनाप्य-भिधीयते। अस्मिन् परामर्शे प्रभोः स्वातन्त्र्यं भवति। एतत् स्वातन्त्र्यम्, अनन्यमुखप्रेक्षि भवति। संवित्तिः, तत्र प्रकाशितं विश्वम्, तत्र पुनः संविद आभास इति त्रितयात्मा संघातः, भैरवस्य अहमात्मा प्रकाश इत्याख्यायते।[२] यदुक्तम्-

**नार्थव्यवस्था प्राणादावहम्भावनिरोधतः।**
**प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः।।**[३]

आगमे एतस्यैव स्वात्ममहेश्वरस्य समावेश्यत्वं परमोपादेयतया प्रतिपादितं भवति।

**समावेशपदार्थः**—अथ को नाम समावेश इति जिज्ञासायामुच्यते संकुचितायाः चितः असंकुचितचिता सह यत् तादात्म्यस्थापनं, सोयं बोधात्मा समावेश

---

१. प० त्री. वि., पृ. १९-३१.

२. ''अकारहकाराभ्यामेव सम्पुटीकारयुक्त्या प्रत्याहारन्यायेन अन्तः स्वीकृतं सद् अविभागवेदनात्मकबिन्दुरूपतया स्फुरितम् अनुत्तर एव विश्राम्यति।'' प्र.हृ.पृ. ५०

३. अ० प्र० सि०, २२.

इत्याख्यायते।[१] एष समावेशः मायाप्रमात्रभिमानातिरेकेण न्यग्भावितां संविदात्मकस्वस्वरूपताम् उन्मज्जयति।।[२] सत्यस्वरूपे सम्यक् आसमन्ताद् आवेशलक्षणो यः प्रवेशः तदेव ज्ञानम् अज्ञानात्ममलद्वेषि इत्युच्यते। अत एव समावेशदशालाभात् सन्तुष्टः साधको ज्ञानीत्यभिधीयते। अथ समावेशदशाभ्यासेन देहप्राणादावनन्त-संविद्धर्मात्मकविभव-समासादनादसौ योगीत्यभिधीयते।[३]

**एतदुक्तम्भवति** जडभावस्य चिद्भावमध्ये,जीवभावस्य च शिवभावमध्ये निमज्जनात् चिद्भावस्य शिवभावस्य वा स्वतन्त्रप्रथैव समावेश इत्युच्यते।[४]

सोयं समावेशस्त्रिविधो भवति - शाम्भवः, शाक्तः, आणवश्चेति।[५]

अनेन समावेशेन साधकः, स्वम् अद्वैतभावं सर्वथा परिचिनोति। अस्य जीवभावः शिवभावे विलयं प्रयाति। फलतः अविशङ्कमसौ शिवभावे स्वात्मनः स्थितिं विमृशति।

---

१. (क) चितः संकुचितायाश्चासंकुचितचिता सह।
स्वतन्त्रयाऽस्वतन्त्राया ऐक्यं तादात्म्यमेव यत्।।
स समावेश इत्युक्तो बोधैकात्म्यमिदं स्फुटम्। पू.प्र.का. २/२२७.
(ख) मुख्यत्वं कर्तृतायाश्च बोधस्य च चिदात्मनः।
शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम्।। ई.प्र.का०, ३/२/१२.

२. माया-प्रमात्रभिमानातिरेकन्यग्भावितसंविदात्मकस्वस्वरूपताया उन्मग्नतात्मकः समावेशः। ई.प्र.वि.वि., खं. १, पृ. ७.

३. चिदात्मनो हि मुख्यत्वं समावेशस्य लक्षणम्।
अज्ञानात्ममलद्वेषि ज्ञानमप्येतदुच्यते।।
समावेशदशालाभतुष्टो ज्ञानीति कथ्यते।
एतदभ्याससम्प्राप्तैश्वर्यो योगी मतो हि नः।। पू.प्र.का, २/५२६-५२८.

४. (क) आवेशश्चास्वतन्त्रस्य स्वतद्रूपनिमज्जनात्।
परतद्रूपता शम्भोराद्याच्छक्त्यविभागिनः।। श्रीत.आ., १/१७३.
(ख) अज्ञानरूपमलप्रतिद्वन्द्वितया समावेशलक्षणं सत्यस्वरूपे सम्यगासमन्तात् प्रवेशलक्षणं ज्ञानं,यल्लाभेन ज्ञानी, यदभ्यासेन च देहप्राणादावनन्त-संविद्-धर्मात्मकविभवसमासादनाद् योगी भवति। ई.प्र.वि.वि., खं. ३, पृ. ३२७.

५. आवेशश्च प्राणावेशमयः प्रथम आणवः, द्वितीयश्च प्राणक्षोभवर्जितः सानन्दः शाक्तः, तृतीयश्च आनन्दानुभवोत्तीर्णः स्वस्वरूपविश्रान्तिनेदीयानावेशः शाम्भवः। म.न.प्र.वि., पृ. २२.

समावेशो द्विविधो भवति -अनुपाय: सोपायश्चेति। तत्र प्रथमः अनुपाय: समावेश:, उत्तमोत्तमाधिकारिभिरेव प्राप्यते।[१] अस्यैव अपरमपि नामधेयं शैवागमदर्शने प्रथते। यथा आनन्दोपाय:, आनन्दयोग:, अनुत्तरं ज्ञानम्, निरुपायश्चेति। अस्मिन् समावेशे इच्छायोग:, ज्ञानयोग:, क्रियायोगो वा नापेक्ष्यते।[२] यत्र सिद्धजनदर्शनस्पर्शादिना गुरूपदेशमात्रेण वा स्वस्वरूपसाक्षात्कार: समुदेति सोऽयम् अनुपाय: समावेश इत्याख्यायते।[३]

येषां निरुपाये समावेशे नाधिकार: तेषां सोपाय: समावेशो भवति। तत्र उपायस् त्रिविध:- शाम्भव:, शाक्त:, आणवश्चेति। स्वस्वरूपसाक्षात्कारसिद्ध्यर्थं यस्य उपादानं = ग्रहणं भवति, सिद्धे तु साक्षात्कारे तस्य त्यागो भवति स उपाय इत्युच्यते। यथोक्तम्;

**उपादायापि ये हेयास्तानुपायान् प्रचक्षते।।इति।**[४]

तत्र उत्तमाधिकारिणां कृते शाम्भव: इच्छाख्य: उपाय: प्रोच्यते। स्वात्मसंवित्स्वरूपस्य अपरोक्षतया साक्षात्काराभ्यास: शाम्भव उपाय इत्युच्यते। अनेन अभेदोपायेन साधक: शाम्भवसमावेशमवाप्नोति।[५] साधकस्य चित्तं निर्वातदीपवत् स्थितं भवति तदास्य स्वात्मसंवित्प्रकाशेन स्वात्मन एव साक्षाद् दर्शनाभ्यास: सम्पद्यते। अस्मिन्नभ्यासे अपरिमितस्य पारमैश्वर्यमण्डितस्य शुद्धसंवित्स्वरूपस्य स्वात्मन:

---

१. (क) नानिर्मलचित: पुंसोऽनुग्रहस्त्वनुपायक:। श्रीत.आ., २/४७.
 (ख) निरुपायस्य विद्वांसो भवन्तोऽस्याधिकारिण:। पू.प्र.,का.१/२३२.

२. उपायजालं न शिवं प्रकाशयेद् घटेन किं भाति सहस्रदीधिति:।
 विवेचयन्नित्थमुदारदर्शन: स्वयम्प्रकाशं शिवमाविशेत्क्षणात्।।
 त०., पृ. ९.

३. (क) ''इच्छाशक्त्युन्मेषाभ्यासदशायां शाम्भव:, तदुन्मेषाभ्यासं विनैव एवमेव स्वरूपप्रथनमनुपाय:।'' शि.सू.वि., १/५.
 (ख) शि.दृ., ७/५-६.
 (ग) स्वल्पोपायममुं प्राहुरनुपायं महाजना:। पू.प्र.,का. १/२०४.
 (घ) ''निरुपायमत एवाक्रमं यत्प्रतिभात्मकम्।'' श्रीत.आ.वि.,१३/१५७.

४. उद्धृ श्रीत.आ. ४/४१.

५. अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधत:।
 जायते य: समावेश: शाम्भवोऽसावुदाहृत:।। मा.वि.त., २/२३.

साक्षात्कारो जायते सोऽयं शाम्भवोपाय इत्युच्यते।[1]

शाम्भवसमावेशलाभात् साधकः सुस्पष्टं परामृशति-

**यस्य संविदि विश्वोऽयं शक्त्या स्वातन्त्र्यसंज्ञया।**
**प्रतिबिम्बतया भाति सैष विश्वेश्वरोऽस्म्यहम्।।इति।**[2]

इमे त्रयोऽपि उपायाः शिवयोगशब्देनाभिधीयन्ते। त्रिभिरेभिरुपायैः स्वात्मशिवतायाः साक्षात्कारस्य कृते अभ्यासो विधीयते। अत्र दर्शनसिद्धान्तज्ञानेन सह पारमेश्वरी भक्तिरपि नितरामपेक्षिता भवति। शिवयोगः भुक्तिं मुक्तिञ्च सममेव प्रयच्छति साधकेभ्यः। एतद्-योगलभ्या भोगपरम्परापि पर्यन्ते पारमार्थिकमुक्तिं प्रयच्छति। नात्र योगे हठयोग इव इन्द्रियदमनम्, न वा पातञ्जलयोग इव बलाद् मनोवृत्तीनां निरोध आद्रियते। प्रत्युत शिवयोग एष जीवपरमेश्वरयोरैक्यं निसर्गतः साक्षाद् अनुभावयति। ततश्चायमकृत्रिमो भावनामयः शिवयोगः साधकमनायासमेव शिवमयं विधत्ते। यदुक्तं-

**प्राणायामादिकैर्लिङ्गैर्योगाः स्युः कृत्रिमा मताः।**
**तेन तेऽकृतकस्यास्य कलां नार्हन्ति षोडशीम्।।**

**अनादरविरक्त्यैव गलन्तीन्द्रियवृत्तयः।**
**यावत्तु विनियम्यन्ते तावत् तावद् विकुर्वते।।**

**निमज्जमानमप्येतन्मनो वैषयिके रसे।**
**नान्तरार्द्रत्वमभ्येति निश्छिद्रं तुम्बकं यथा।।**

**अत एव न कश्चिदाग्रहो विषयाणां ग्रहणेऽप्यपोहने।**
**परभैरवसंविदात्मनः स्वयमेवोच्छलिता हि भोक्तृता।।**[3]

---

१. (क) अकिञ्चिच्चिन्तकस्येति विकल्पानुपयोगिता।
तया न झटिति ज्ञेयसमापत्तिर्निरूप्यते।। श्रीत.आ., १/१७१.

(ख) एवं परेच्छाशक्त्यंशसदुपायमिमं विदुः।
शाम्भवाख्यं समावेशं सुमत्यन्ते निवासिनः।। श्रीत.आ., १/२१३.

(ग) उदेति मत्त एवेदं मय्येव प्रतिबिम्बति।
मदात्मकमिदं सर्वमित्येवं शाम्भवस्त्रिधा।। पू.प्र.का. १/२७२.

२. (क) पू.प्र.का. १/२७०.

(ख) तस्माद् विदंस्तथा सर्वं मन्त्रत्वेनैव पश्यति। श्रीत.आ., ३/२२५.

३. मा.वि.त., २/१८,११२,१०८,१५५

साधकः शिवयोगेन शिवभावभावनामयीं सर्वशिवतां विमृशति। शाश्वतं वाङ्मनसातीतमपि शिवतत्त्वमसौ शिवयोगी ज्ञानभक्तिमयेन शिवमार्गेण स्वात्मतया विमृशन् सकलं विश्वं स्वेच्छया स्वस्मिन् प्रतिबिम्बकल्पम् आभाससारं विज्ञाय मोदते। सेयं शिवदृष्टिः साधकान् समधिकं सुखयति।[१]

अखण्डे प्रकाशवपुषि स्वात्मशिवे अनुपायसमावेशम् अलभमानः उत्तमः साधको भवति न पुनः उत्तमोत्तमः। एष साधकः स्वातन्त्र्यशक्तिं स्वाभिन्नां यदा प्रत्येति तदा निर्विकल्पकम् अविकल्पकं वा शाम्भवं समावेशमवाप्नोति।[२]

सुप्तोत्थितः परिच्छिन्नविषयमनपेक्षमाणः व्यापकदृष्टिसम्पन्नः पूर्वं निर्विकल्पे अहंप्रकाशात्मनि स्फुरत्तामात्रशीले इच्छामात्रेण वस्तुना इदमात्मना निरपेक्षः यदयमनुत्तरशिवं साक्षात्कुरुते। तत्रैवाभ्यासेन क्रियमाणेन अविकल्परूपतां व्रजन् साधकः, अभेदाख्यं शाम्भवमुपायमाश्रित्य शिवात्मनि समावेशमाप्नोति। यत्रासौ स्वैरं स्वेच्छामात्रमाश्रित्य शिवतामनपायिनीं साक्षात्कुरुते। फलतो मोक्षलक्ष्मीमभ्युपैति।[३]

सकलः प्रमाता त्रिविधेन मलेन अज्ञानसंज्ञकेन युक्तो भवति। आणवः, मायिकः, कार्मश्चेति त्रिविधो मलो भवति। आदेवम् आचस्थावरम् ये संसारिणः प्राणिनः सन्ति ते मायापदे एव स्थिता भवन्ति। मलत्रयप्रादुर्भावाद् एषां पशुरूपता सम्पद्यते। यदा पुनः परमेश्वरानुग्रहाद् मलत्रयतिरोभावो जायते तदा एषां मुक्तता भवति।

---

१. (क) मदमात्सर्यसन्त्यागान्मानगर्वतमःक्षयात्।
लभ्यते शाश्वतं नित्यं शिवमव्ययमुत्तमम्।। ने.त., पृ. १७९.

(ख) ज्ञानस्य परमा भूमिर्योगस्य परमा दशा।
त्वद्भक्तिर्या विभो कर्हि पूर्णा मे स्यात् तदर्थिता।। शि.स्तो., ९/९.

(ग) शिवो रात्रिः शिवो वह्निः पक्तृत्वात् स पुरोहितः।
तत्रस्था देवताः सर्वा द्योतयन्त्योऽखिलं जगत्।। श्रीत.आ. ३२/२५.

२. अखण्डमण्डलाकारे प्रकाशाख्ये शिवात्मनि।
अनुपायतया प्रोक्ते प्रवेष्टुं यश्च नार्हति।।
शक्तिं पश्यन्नभिन्नां स्वां स्वातन्त्र्याख्यामिमां पराम्।
निर्विकल्पं समावेशं शाम्भवं सोऽप्यवाप्नुयात्।। पू.प्र.का. १/२६४-२६५.

३. मोक्षलक्ष्मीसमाश्लेषरसास्वादमयो ह्ययम्।
अभेदाख्यः समाख्यातः शाम्भवोपाय उत्तमः।।
अनुसन्धिं विना भाति यथा भावः स्फुरद्दृशः।
तथा स्फुटं प्रबुद्धस्य स्वेच्छयैव शिवात्मता।। पू.प्र.का. १/२६८-२६९.

**एतदुक्तं भवति-** देवादिस्थावरान्तानां सकलसंज्ञकानां प्रमातृणाम् त्रिविधैरेभिर्मलैः संविद्भागो निमज्जितो भवति जडतारूपा इदन्ता तु उन्मज्जिता भवतीति स्वातन्त्र्येण अहमात्मस्वात्मना प्रथनमेषां न्यक् कृतं भवतीति सोऽयं बन्धः। तदेव न्यक्कृतं स्वातन्त्र्यं यदा कलया किञ्चित्कर्तृतया युज्यते तदा अस्य मायामातृषु शून्यादिदेहपर्यन्तेषु स्थितिर्भवति सेयं मितमातृता इत्युच्यते।[१]

इयं मितमातृता यथा गौणभावं गमिता भवति परप्रमातृता चाधिगता भवति तदर्थमधिकारिभेदेन उपायाः शाम्भवादिकाः नितरामुपादेया भवन्ति। सर्वेषां चैषामुपायानामेकमेव फलं यत्साधकः स्वीयां पूर्णतां प्रत्यभिजानाति।[२]

अनुपायेन सोपायेन वा शिवयोगेन यदा साधकः स्वां परप्रमातृतामधिगच्छति तदा प्रत्यभिज्ञातस्वस्वरूपस्य संसारिता अपैति। भवन्ति हि मितप्रमातृतापन्नानां सकलसंज्ञकानां संसारिणां तिस्रः अवस्थाः - जाग्रदवस्था, स्वप्नावस्था, सुषुप्तावस्था चेति।[३]

**तुर्यतुर्यातीते**—अनुपायेन सोपायेन वा साधकस्य योऽयं नैसर्गिके स्वस्वरूपे समावेशः समुदेति स प्रभोरनुग्रहविशेषः। अनुग्रहप्राप्तिर्येयं साधकस्य तत्र च स्वातन्त्र्यमेव हेतुर्नान्यः। एवं च पूर्णाहम्भावोदयात् साधकः स्वात्मनि नित्यत्वं पूर्णत्वं च परामृशति। फलस्वरूपं स्वत एव मितप्रमातृता गौणभावं भजते पूर्णप्रमातृता च प्राधान्यमेति। स्वत एवास्य साधकस्य संसारिता मितप्रमातृताप्रयुक्ता या आगन्तुकी समायाता सा व्यपगच्छति या तु परप्रमातृता सनातनी शुद्धसंवित्स्वरूपता सा उन्मज्जतीति साधकस्य तिसृणाम् अवस्थानां

---

१. (क) मलत्रयेण सम्बद्धा मायातत्त्वान्तरस्थिताः।
देवादिस्थावरान्ता ये भविनस्ते द्विधा मताः॥
सर्वेषां त्रिदशादीनां संविद्भागस्य मज्जनात्।
चिद्रूपस्य च तत् तत्त्वं स्वातन्त्र्यं न्यक्कृतं मलैः॥ पू.प्र.का.२/५०९,५११.

(ख) इदन्तापन्नशून्यादिमितमातृस्थितत्वतः।
मितं प्रमेयतापन्नमप्रधानतया स्थितम्॥
इत्थमन्तर्विलीनाहम्भावेदन्तावगाहिनी।
परिस्फुरति संसारावस्था संसारिणामियम्॥पू.प्र.का.२/५१३, ५१५.

२. मितमातृत्वगौणाय परमातृत्वक्लृप्तये।
प्रत्यभिज्ञाफलोपाय उपादेयो यथायथम्॥ पू.प्र.का.२/२५०.

३. जाग्रत्स्वप्नसुषुप्तात्मावस्था संसारिणामियम्।
याभिः परिवृतो नित्यं सकलोऽयं पशुः स्मृतः॥ पू.प्र.का.२/५१६.

स्थाने पञ्चमी तुर्यातीतावस्था परिलक्षिता भवति।[१]

तुर्यातीतावस्थायाः प्राक् तुर्यावस्था या साधकस्य असंसारितावस्थायां प्राकट्यमेति तत्र शिवयोगमालम्ब्य साधकः पूर्णाहम्भावसंज्ञकेन सिद्धरसेन शून्यादारभ्य देहपर्यन्तमिदन्तास्पदेषु धातुस्वरूपेषु नित्यैश्वर्य- पूर्णत्वसमुल्लसितेन स्वातन्त्र्येण किमपि विलक्षणं वेधं विधत्ते तदास्य देहादिः शून्यान्त इदन्तास्पदीभूतोपि चिद्रूपतां श्रयते- सेयं तुर्यावस्था निगद्यते।[२] येयमवस्थाद्वयी सा सकलसंज्ञकपशूनां ''मुक्तावस्था'' उच्यते।[३]

एतुदुक्तं भवति- प्रभोरनुग्रहपूतः साधकः शुद्धविद्याभिख्यापितैश्वर्यः प्रत्यभिज्ञातस्वरूपः चिद्घनानन्दरूपः देहवानपि मुक्तो जीवन्मुक्त एव वा तिष्ठति। देहपाते तु शिव एवैकघनस्तिष्ठति।[४] समस्तमपि षट्त्रिंशत्तत्त्वमयं विश्वम् अस्य साधकस्य स्वात्मभूतं स्वोद्भासितं स्वविभवभूतमेव भवति।[५] श्रुतिरपि अत्र संवदति

---

१. अहम्भावेन तेनैव स्वातन्त्र्येण यदा पुनः।
परामृशंश्च नित्यत्वपूर्णत्वाद्यपि चात्मनि।।
तस्मादुन्मज्य शून्यादिमेयान्मातुश्चिदात्मनि।
तिष्ठतीव तदा तस्य तुर्यातीता दशा भवेत्।। पू.प्र.का.२/५१७-५१८.

२. यदा सिद्धरसेनेवाहम्भावेनैव विध्यते।
नित्यैश्वर्यादिसम्भिन्नस्वातन्त्र्येणापि योगिना।।
शून्यादिदेहधात्वन्तं तदा देहादिरप्यसौ।
प्रमेयतां परित्यज्याध्यास्ते तुर्यदशामिव।। पू.प्र.का.२/५१९-५२०.

३. सेयं द्वय्यपि जीवानां मुक्तावस्थेति कथ्यते। पू.प्र.का.२/५२१.

४. ''विद्यया तु स्वरूपप्रकाशनशक्त्या प्रत्यभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव शरीरादावपि विश्वमपि संवेदनमेवाभिमन्यमानो भवति, अत एव चिदेकघना अन्याऽचिद्रूपव्यामिश्रणशून्या यस्य रूपं, स पुनर्जन्मबन्धविरहाद् देहेऽपि स्थिते 'मुक्त' इति व्यपदेशयोग्यः। पतिते तु शिव एकघनः। इति कः कुतो मुक्तः। भूतपूर्वगत्या तु प्रमात्रन्तरापेक्षया मुक्तशिवः इति व्यवहारः।''
ई.प्र.वि., खं. २, पृ. २१९-२२०.

५. ''श्रीमत्सादाख्यपदात् प्रभृति आकृमि यो मातृवर्गस्तदधिष्ठातृ यदहमितिरूपं, तदेव आत्मतया मुक्तोऽभिनिविशते। ततश्च यत् प्रमेयं, तन्ममापि, यन्मम, तदन्यस्यापि। मेयं चेदं ममैवाङ्गभूतं, मेयान्तरमपि तथा, इत्येवं मेयं परस्परतो मातृवर्गाच्चाव्यावृत्तमित्येकरसाभेदविश्रान्तितत्त्वमस्य सर्वं परामर्शपदमभ्येति।
ई.प्र.वि.वि., खं. ३, पृ. ३९४.

"विमुक्तश्च विमुच्यते इति।"[१] परमेश्वरलीलावशात् साक्षात्कृतशुद्धसंवित्स्वरूपः साधकः, यद्यपि मुक्तो भवति अथापि मलसंस्कारस्य किञ्चिद्विध्वंसमानत्वे यत् क्रमेण मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वरपदेषु विराजते। तत्र शिवेच्छया निग्रहानुग्रहादिकं कुर्वन् मुक्तः सन्नपि मलसंस्कारशेषतया अणुपदवाच्यो भवतीति सोयं मुक्ताणुः इत्यभिधीयते।[२]

अवाप्त- शिवसमावेशः साधकः अनात्मनि आत्मभावं विसृजति, निजात्मलाभेन तृप्यति अथ आत्मनि अनात्मनां विश्रान्तिं नयतीति सेयम् अस्य महाव्याप्तिरुदाहृता।[३]

साधकोऽसौ स्वोद्भासितान् मनोबुद्ध्यादीन् वेत्ति अतस्तान् स्वेच्छया गुरुप्रदर्शितदिशा निमज्जितान् विधाय संविद्बोधाभिमुखः निरपेक्षभावनादिः अविकल्प-शिवतादात्म्यमवाप्य आप्तशाम्भवसमावेशः सुखमेधते।[४] यावत् संविदो नैर्मल्यं नोदेति तावत् समावेशकथा वृथैव। संविदो नैर्मल्ये किमपि नियतकारणं न भवति। क्वचित् पूर्वाभ्यासः, क्वचिद् ईशेच्छा, क्वचित् तु साम्प्रतिकः अभ्यासः संविदं निर्मलयति।[५]

---

१. कठोपनिषद्, २/२/१.

२. (क) मुक्ताणूनां च मोक्षावस्थायामपि परमशिवाद् अनादिशिवतामयान्मल-निर्हाराभिव्यक्तशिवत्वानां भेद इति। ई.प्र.वि., खं. २, पृ. ३२५.

(ख) मुक्ताणूनाम् इति संसारोत्तीर्णानां मन्त्रमहेशादीनामित्यर्थः। ई.प्र.वि.वि., खं. ३, पृ. ३१८.

३. (क) आदावनात्मन्यात्मत्वे लीने लब्धे निजात्मनि।
आत्मन्यनात्मनां नाशे महाव्याप्तिः प्रवर्तते।। श्रीत.आ., ५/१०६.

(ख) सृष्टिसंहारकारित्वं पारमेश्वर्यमेव च।
पूर्णतेश्वरता वापि महाव्याप्तिः स्वतन्त्रता।
न साध्या किन्तु सिद्धेयं भेदापाये तु भासते।। पू.प्र.का.१/११८.

४. स्वोद्भासितास्वतन्त्रात्मबुद्ध्यादि द्राङ् निजेच्छया।।
निमज्ज्येति गुणीकृत्यानादृत्य स्वात्मना स्थितिः।
स्वात्माभिमुखबोधेन विकल्पक्रममन्तरा।।
स्वतन्त्रबोधरूपेण तादात्म्यापत्तिरेव या।
अविकल्पा स्थितिः सेयं भावनाद्यनपेक्षिणी।।
शिवतादात्म्यमापन्ना समावेशः स शाम्भवः।। पू.प्र.का.२/२२८-२३१.

५. पूर्वाभ्यासवशात् क्वापि क्वापीशेच्छावशात् पुनः।
अभ्यासेनापि कुत्रापि नैर्मल्यं संविदो भवेत्।
यस्मादहेतुकस्यापि शक्तिपातस्य मुख्यतः।।
नवधा चर्चितो भेदो भेदभेदोऽप्यसंख्यकः।। पू.प्र.का.२/२३४-२३६.

अथ शाक्तः समावेशोऽधिक्रियते। शाक्तो विकल्पोपायः भेदाभेदात्मकः ज्ञानरूपः कीर्त्यते। अस्माद् ज्ञानरूपाद् उपायात् समावेशोपि शाक्तः समुदेति। शाम्भवः समावेशः अविकल्पात्मा अक्रमात्मा च भवति। शाक्तः समावेशस्तु विकल्पात्मा भवति। मनोबुद्ध्यहंकारादिषु विकल्पप्रत्ययहेतुषु अहमो नैरन्तर्येण स्थितिरस्ति। अतः सर्वत्रैव अहम्-अहमिति विमर्शनेन क्रमात्मना विकल्पनेन लब्धस्थितिः शाक्तः समावेशः शाम्भवाद् भिद्यते।[१]

नास्मिन् समावेशे कारणभूतः शाक्तोपायः उच्चारकरणादिकं बाह्यालम्बनमपेक्षते। प्रत्युत यच्छुद्धं निजं स्वरूपं तदालम्ब्य साधकः विकल्पात्मिकां भावनामभ्यस्यति - सर्वत्राहं तिष्ठामि, सर्वञ्च मयि तिष्ठतीति।[२]

अत्रेदमवधेयम् - शुद्धः क्रमिकश्च विकल्पः, अहमर्थं स्वात्मानमेवावलम्बते, नान्यं किमपि प्रमेयम्, सोयं शाक्त उपायस्तदुपेयश्च शाक्तः समावेशो भवति।

शुद्धः क्रमिकश्च विकल्पः स्वात्मनो भिन्नं बुद्धिप्राणदेहादिकं किमपि एकं प्रमेयम् अवलम्बते, तदाधारेण च परिपूर्णपरमेश्वरभावनया समाविशति तदा आणव उपायस्तदुपेयस्तु आणवः समावेशः सोयम् आणवात् शाक्तम्, शाक्तात् शाम्भवं च समावेशं लब्ध्वा साधकः स्वात्ममहेश्वरस्वरूपं प्रत्यभिज्ञाय पूर्णतामधिगच्छति। तदेवं स्वात्मालम्बनः, विकल्पाभ्यासः शाक्त उपायः, प्रमेयालम्बनस्तु सोऽभ्यासः आणवोपाय इत्यनयोर्भेदः। यथोक्तं जयरथेन - "**विकल्पस्य द्वयी गतिः स हि कस्यचिद् उपायान्तरनिरपेक्षतया स्वस्वातन्त्र्यादेव संस्कृतः स्यात्, कस्यचित् तु अन्यथा। तत्र पूर्वः प्रकारः शाक्तोपाये निरूपितः। इतरः पुनराणवोपाये निरूपयिष्यते।**[३]

अथ ये शाक्तोपायानुष्ठानेऽपि असमर्थाः सन्ति। तेषां कृते कश्चन आणव

---

१. अखण्डवस्तुनो भासोऽविकल्पेऽक्रमतो भवेत्॥
विकल्पे तु क्रमेणेति शाक्तो वैकल्पिको मतः।
अहंकारेण मनसा बुद्ध्या वा यद्विकल्पनम्॥
सर्वत्राहं स्थितं सर्वं मय्येवास्ति व्यवस्थितम्।
अथवाऽहमहमिति स्वावमर्शनमेव यत्॥
तच्छाक्तः प्रोच्यते सद्भिरुपायोऽभ्यासियोगिने॥ पू.प्र.का.२/२३७-२३९.

२. उच्चाररहितं वस्तु चेतसैव विचिन्तयन्।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते॥मा.वि.त., २/२२.

३. श्रीत.आ.वि., खं. ३, पृ. ३१०-३११.

उपाय: अवलम्बनीयो भवति। अत्रोपाये साधकै: विकल्पसंस्कारार्थं बुद्धि:, प्राणो, देह:, घटादिर्वा य: कश्चन परिमित: उपाय: परिगृह्यते। एतदालम्बनद्वारा अणुत्वमापन्नैरेभि: क्रमेण शाक्तशाम्भवोपायप्रवेशद्वारा परिपूर्णशिवात्मकज्ञानोदयात् माहैश्वर्यमवाप्यते- सोऽयम् आणवसमावेश इत्याख्यायते।[१]

स्वात्मनो नैकट्यं दूरत्वं चाश्रित्य इदमात्मना प्रथमाना बुद्धिप्राणादयो भेदेनात्र परिगृह्यन्ते तथापि पूर्णशिवतासमापत्तिरेव पार्यन्तिकफलमत्राप्यवाप्यते।[२]

अत्रेदमवधेयम् - स्थानकल्पनम्, ध्वनि:, करणम्, उच्चार:, बुद्धिर्ध्यानम्, शाक्तोपाय:, शाम्भवोपाय: इत्येतेषां पूर्वं पूर्वं प्रति वीर्यरूपता साररूपता प्राणरूपता वा आस्थीयते।[३]

आणवे इदमात्मनां विकल्पानां श्रयणम्, शाक्ते आत्मनिष्ठं विकल्पस्फुरणम्, शाम्भवे तु आत्मनि विकल्पलयो भवतीत्येष कश्चन क्रमो वरीवर्ति।[४] प्राणोच्चारादयो ये ग्राह्यविषया ये वा देशकालप्रभेदा बाह्यास्तानवलम्ब्य आणवोपाये परिपूर्णशिवत्वभावनाया अभ्यास: क्रियते। तद् वशात् क्रमेण

---

१. यदा तूपायान्तरमसौ स्वसंस्कारार्थं विकल्पोऽपेक्षेत तदा बुद्धिप्राणदेहघटादिकान् परिमितरूपानुपायत्वेन गृहणन्नणुत्वं प्राप्त आणवं ज्ञानमाविर्भावयति। त.सा., पृ. ३५.

२. (क) एवं धीप्राणसम्बन्धादान्तराद् बाह्यतोऽपि च।
चर्यया य: समावेश: स इहाणव उच्यते।। त.व.धा., ३/३८.

(ख) विकल्प: कस्यापि स्वयमनुपयन् पूर्णमयता-
मुपायात् संस्कारं व्रजति स उपायोऽत्र बहुधा।
धियि प्राणे देहे तदनु बहिरित्याणवतया
स निर्णीतो नैषां परफलविधौ कापि हि भिदा।। त.सा., पृ. ४३.

३. अकिञ्चिच्चिन्तनं वीर्यं भावनायां च सा पुन:।
ध्याने तदपि चोच्चारे करणे सोपि तद्-ध्वनौ।
स स्थानकल्पने बाह्यमिति क्रममुपाश्रयेत्।।
वीर्यं विना यथा षण्ढस्तस्याप्यस्त्यथवा बलम्।
मृतदेह इवेयं स्याद् बाह्यान्त: परिकल्पना।। श्रीत.आ., ५/१५६-१५८.

४. आणवे विकल्पौल्बण्यम्, शाक्ते तस्य स्फुरत्तामात्रं स्वात्मनिष्ठम्, शाम्भवे तु निर्विकल्पत्वमित्युत्तरोत्तरपर्वानुशीलनादुक्तरूपमेषां नैश्चिन्त्यमव्याहतम्। म.म.प., पृ. १६१.

स्वात्मशिवभावसमावेशः संजायते।[1]

**एतदुक्तं भवति।** परमः शिवः चिदानन्दैषणाज्ञानक्रियाशक्तिसुनिर्भर आस्ते। शक्तिरियमेकैव वस्तुतः अहमात्मना भासमाना शिवं स्वस्यां भासयन्ती स्वयं तु शिवे भासमाना चकास्ति। इयं शक्तिः शिवादव्यतिरिक्ता यथा स्वात्मानं शिवादभिन्नं भासयति तथैव स्वात्मनोऽभिन्नं शिवं भासयति। सेयं सततस्फुरणमयी "चैतन्य" पदभाग् भवति।[2]

प्रकाशंमहेश्वरस्य संविदात्मा अहम्-परामर्श एव वस्तुतः प्राणभूत आस्ते। एष परामर्शः स्वे महिम्नि प्रतिष्ठितः, अन्यापेक्षारहितः, संविद्रूपसमावेशप्रदः, अवागपि वागात्मभूतः, अपोह्यवर्जितत्वाद् अविकल्पः, समेषां प्राणिनामभ्यर्हिततमो नितरामुपास्यो विद्यते। अयमेव अहमात्मा विमर्शः, पश्चाद्भाविनि विकल्पने इदमात्मानं निर्भासयन् अविकल्पस्वभावोपि विकल्पवानिव प्रथते।

स्वातन्त्र्यशक्तिजुष्टः परमेश्वरः पञ्चकृत्यस्वभावो लीलया सृष्टिस्थितिप्रलय-निग्रहानुग्रहनिरतः स्वच्छः स्वच्छन्दश्च स्वभावाद् अच्युत एव सन् बन्धमोक्षचित्रां विचित्रां क्रीडामारचयति। स्वातन्त्र्यादेवासौ मायया अपरिगृहीतोपि मायां शक्तिरूपां परिगृह्णाति। तदुद्भावितं कञ्चुकपञ्चकमावरणतया स्वीकरोति। तेन सर्वज्ञत्वम्, सर्वकर्तृत्वम्, निरभिलाषित्वम्, पूर्णत्वम्, नित्यत्वं च संकोचयन्नसौ अल्पज्ञत्वादिविशिष्टान् अणून् उद्भासयति, अथ स्वातन्त्र्येण चैनान् अनुगृह्णन् सर्वज्ञत्वादिसंकोचापनयनेन निरवच्छिन्नप्रकाशरूपतयैव विभासयन् अणुतामपाकुर्वन् विजयते। एष च समावेशः अनुग्रहपरायणेन शिवेन स्वातन्त्र्याद् अणुषु अनुपायेन शैवशाक्ताणवोपायेन वा प्रत्यभिज्ञाफलं शिवोऽहमस्मीति प्रकाश्यते। उपायाश्चेमे इच्छाज्ञानक्रियारूपाः फलभेदभाजो न भवन्ति।[3]

---

१. उच्चारकरणध्यानवर्ण - स्थानप्रकल्पनैः।
यो भवेत् स समावेशः सम्यगाणव उच्यते।। मा.वि.तं., २/२१.

२. अहमित्यात्मिका शक्तिः शिवामर्शस्वरूपिणी।
भासयन्ती शिवं स्वस्यां भातीयं च शिवे स्वयम्।।
शिवादभिन्नमात्मानं स्वात्मनश्च शिवं तथा।
भासयन्ती विस्फुरन्ती शक्तिश्चैतन्यमुच्यते।। पू.प्र.का.१/५९-६०.

३. इच्छाख्यः शाम्भवः प्रोक्तो ज्ञानं शाक्तस्तु भण्यते।
आणवस्तु क्रियारूपः फलभेदविवर्जितः।।
किन्त्वत्र पूर्वपूर्वः स्यात् प्राण एवोत्तरोत्तरे।
मृतदेह इवायं स्यात् पूर्वं पूर्वं विनोत्तरः।। पू.प्र.का.१/७०,७३.

**चितिशक्तेर्महिमा**—सर्वमप्येतन्माहात्म्यं चितिशक्तेरेव भगवत्या भुवनेश्वर्या-श्चकास्ति। यदाऽसौ स्वस्वरूपमनन्तभुवनेश्वरमनुगच्छति तदा शिवो ब्रह्मभावेन प्रथते। परमसौ यदा षट्त्रिंशत्तत्त्वमयविश्वरूपेण विलसति कञ्चुकमयमावरणमङ्गीकुरुते तदा स शिव एव पशुदशामवाप्नोति। पशुपाशनिकृन्तने अनुग्रहमयी गुरुशक्तिर्भूत्वा एषा शिवशक्तिं मायां विजित्य सन्ततिकष्टं विदूरीकृत्य अनन्तसहजामलनिरतिशय-सुखशान्तिप्रदानेन अस्मानुद्धरति।[१]

नैतावन्मात्रम्, अपितु गुरुशक्तिः शिष्यस्य मितप्रमातृतां कृत्रिमां गौणत्वेन संस्थाप्य स्वाभाविकीं परिपूर्णानन्दरूपतां प्रकाश्य संसारावस्थामपि शिवतामयीं कृत्वा जगदानन्दसुन्दरीं निजानन्दस्थितिं प्रबोधयति।[२]

यद्यपीह जगति भगवान् भास्करः प्रत्यक्षो महान् देव उपास्यते, यस्मिन् जाग्रति सर्वेऽपि रजन्यां सुप्ताः प्राणिनो जाग्रतीव, किन्तु ततोपि सुमहान् श्रीदेशिको गुरुर्यदीयाङ्घ्रिद्युतिः अज्ञानान्धतमसमतिचिरन्तनमपि विनाश्य चिदानन्दमयं सन्तं सर्वकारणं स्वात्ममहेश्वरम् स्वस्वरूपतया ग्राहयति।[३]

दैशिको हि उपदेशेन स्पर्शनदर्शनादिना वा अनुपायमार्गेण[४] अणून् शिवयतीति नूनं गुरुमूर्तिः शिवमूर्तिमपि जयति।[५]

---

१. स्वरूपमनुगामिन्या विलसद् - विश्वरूपया।
शिवोऽपि समतामेति पशुतां वा ययेच्छया।।
गुरुशक्तिर्जयत्येका मद्रूपप्रविकासिका।
स्वरूपगोपनव्यग्रा शिवशक्तिर्जिता यया।। पू.प्र.का.१/४,९.

२. नौमि तां जयतात् सैव यया साक्षात्कृता मया।
शिवैक्याख्यातिसंसारावस्थापीयं शिवात्मिका।। पू.प्र.का. १/१०.

३. अस्त्यस्मिन् महसां महानिधिरसौ देवो विवस्वान् महान्
यस्मिञ्जाग्रति जाग्रतीव रजनीसुप्ता इमे जन्मिनः।
किन्त्वेका महती ततो विजयते श्रीदैशिकाङ्घ्रिद्युति-
र्यद्‌भासाच्छुरितं चिरन्तनतमो हित्वैव जागर्ति सत्।। पू.प्र.का. १/११.

४. सकृद्‌देशनया वाऽथ सिद्धादीनां च दर्शनात्।
स्वयं विवेचनेनापि शिवतादात्म्यदर्शनात्।।
स्वल्पोपायममुं प्राहुरनुपायं महाजनाः। पू.प्र.का. १/२०४.

५. (क) सिद्धानां योगिनीनां च दर्शनं चरुभोजनम्।
कथनं संक्रमः शास्त्रे साधनं गुरुसेवनम्।।
इत्याद्यो निरुपायस्य संक्षेपोऽयं वरानने। उद्धृ,श्रीत.आ.वि.२/२.

(ख) सकृत्स्याद् देशना पश्चादनुपायत्वमुच्यते। श्रीत.आ., २/२

कियद् वा वर्ण्यतां शक्तेर्माहात्म्यम्।[१] भगवच्छक्तिपातपवित्रित एव कश्चिद्विजानाति; ''स्वातन्त्र्यशक्तिमाहात्म्यात् स्वात्मस्वरूपं प्रकाशते नान्यस्मादिति''। एतद्विज्ञानस्य महत् फलवत्त्वं यद् विनेयः आनन्दनिर्भरां दृष्टिं प्राप्य अज्ञानं तज्जन्यतापं चापनीय निभृतं नित्यसुखितामवाप्नोति।[२]

धन्यमीश्वराद्वयवादि शैवागमदर्शनं, यस्येयमद्भुताऽवधारणा- परमः शिवः क्रीडन् लीलया स्वात्मानं मायाप्रभृतिकञ्चुकषट्केन आवरणेन गोपयति अथ सांसारिकयात्रामनुभवति। पुनश्च तिरोधानलीलां पूरयितुं जीवरूपात्मनि स्वेच्छया स्वातन्त्र्यशक्त्या अनुग्रहकृत्याविष्करणेन भोगमोक्षदानेन शक्तिपातं वितरन् महार्थतां प्रकटयति।[३]

अनुग्रहप्राधान्येन धृतगुरुविग्रहः शिव एव महतो बन्धनाद् अणून् उद्धरति। तस्यास्य श्रीगुरोः[४] वाङ्मनोभ्यामतीतस्य परिभाषितुमशक्यस्य यद्यपि वाचा वर्णनं कर्तुं नैव शक्यते। अथापि श्रीगुरोर्या देशना अणुं शिवतां नयति तया गुरोर्माहात्म्यं सुतरां वर्ण्यत एव।[५]

---

१. शिवशक्तिरिति ह्येकं तत्त्वमाहुर्मनीषिणः। का.क.वि.चिद्वल्ली।

२. यस्त्विदं वेत्ति भगवच्छक्तिपात - पवित्रितः।
स्वातन्त्र्यात्स्वात्मरूपस्य प्रकाशो नान्यत इति॥
स स्वभाचन्द्रिकाध्वस्तध्वान्तो निर्मलचन्द्रमाः।
तमस्तापौ हन्ति दृशं विस्फार्यानन्दनिर्भराम्॥ पू.प्र.का. १/२०६-०७.

३. (क) न च मोचयितुं शक्ताः पशवः पाशबन्धनाः॥
स्वयमेव स्वमात्मानं यावद् वै नेक्षते शिवः। स्व.त. १०.३६२.

(ख) शक्तिपातवशाद् देवि नीयते सद्गुरुं प्रति। उद्ध, प.सा.वि., पृ. ८.

४. (क) इहाप्युक्तं मोक्षदः स्यात् स्वभ्यस्तज्ञानवानिति। मा.वि.वा. २/३२८.

(ख) यः पुनः सर्वतत्त्वानि वेत्त्येतानि यथार्थतः।
स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः॥ मा.वि.तं. २/१०.

(ग) गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत्।
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः॥ श्रीत.आ. ३/२२४.

५. गुरुदेवे गिरातीते गम्भीरे गतलक्षणे।
कथं गिरा परिच्छिन्नवाचिकेयं प्रवर्तताम्॥
अप्यणुं शिवयन्तीयं धन्या कापि कृपामयी।
गिरा पुनर्गुरोरेव वर्ण्यतेऽपि गुरुर्यया॥ पू.प्र.का. १/७-८.

यो हि विनेयस्य भेदमयीम् अभेदमयीं वा दृष्टिम्, अथ च विद्यामयीम् अविद्यामयीं वा प्रथां स्वोर्मिभूतां प्रबोधयेदसावेव सद्गुरुः, स च नितरां नमस्यः।[१]

अनुत्तरो महेश्वरो महामन्त्रमयीं[२] शक्तिमधिकृत्य नित्यसृष्टियुक्तश्चकास्ति। यद्यप्ययं न देशेन परिच्छिद्यते न वा कालकलया स्पृश्यते, सततं स्पन्दशक्त्या विजृम्भमाणोऽयं परवागात्मना मन्त्रवीर्येण इदन्तया स्फुरणस्वभावां सृष्टिं विधत्ते।[३]

प्रभोः स्वच्छन्दायाः स्वच्छायाश्चेच्छाशक्तेः कियद्वा माहात्म्यमुपगीयताम्। अस्याः शक्तेः प्रभावाद्भगवान् भैरवः स्वयम् एव वेत्ता वेद्यश्च सम्पद्यते। स्वामेव शक्तिम् अहमात्मरूपिणीं दर्शं दर्शं स्वयमसौ मोहदशामुपैति। एनया शक्त्या पुंस्त्वस्त्रीत्वादिसंकल्पनामात्मनि संघटयन्नसौ देवः भोक्तृतां भोग्यतां च बिभ्रद् विश्ववैभवमात्मनि प्रकटयन् स्वयमच्छोऽनाच्छन्नश्च देदीप्यते।[४]

---

१. भेदाभेदमयी दृष्टिर्विद्याविद्यामयी प्रथा।
नौमि तां श्रीगुरोर्मूर्तिं स्वोर्मिरिव यया कृता।। पू.प्र.का. १/१२.

२. (क) मोचयन्तिच संसाराद् योजयन्ति परे शिवे।
मननत्राणधर्मित्वात् तेन मन्त्रा इति स्मृताः।। ने० त० अ.२१.

(ख) मन्त्राणामचिन्त्यशक्तिता । प.क.सू. प्र.ख.सू.८.

३. (क) प्रतिबुद्धा हि ते मन्त्रा विमर्शैकस्वभावकाः।
स्वतन्त्रस्यैव चिद्धाम्नः स्वातन्त्र्यात् कर्तृतामयाः।।
यमाविशन्ति चाचार्यं तं तादात्म्यनिरूढितः।
स्वतन्त्रीकुर्वते यान्ति करणान्यपि कर्तृताम्।। श्रीत.आ. ३०/२,३.

(ख) परवाङ्मयमन्त्रात्मवीर्यसर्गमयः शिवः।,
स्ववीर्यघनतारूपेदन्ता- स्फुरणरूपया।।
युज्यते सततं सृष्ट्या स्वीयशक्तिविसृष्टया।
अदेशकाल - कलितस्पन्दात्मानुत्तराभिधः।। पू.प्र.का. १/१७-१८.

(ग) अहमिति संविद्रूपतया स्वरूपभूतं विश्वं यद् बहिर्भावेन अवभास्यते सैषा सृष्टिरित्युच्यते। तद्यथा; स्वरूपावस्थितमशेषं वेद्यवेदकप्रपञ्चं ततः स्वरूपाद् बहिर्भावेन निजयेच्छया बहिर्भावयन्नसौ ...... ।
ई.प्र.वि.वि., खं. १, पृ. ४.

४. (क) अकामतः सृजेत्सर्वं शक्त्या सर्वं चराचरम्। ने.तं., २१/५६.

(ख) आद्यैव शक्तिः स्पन्दनशीला बहिर्विषयोन्मुखी व्यापिनीभावेन सृष्टिव्यपदेशभाजनम्। म.न.प्र.वि. पृ. ४४.

(ग) वक्तव्यं किमु तत्र यत्र भगवान् वेत्तैव वेद्यो भवन्,
शक्तिं स्वामहमात्मिकां भगवती पश्यन् स्वयं मुह्यति।
पुंस्त्वस्त्रीत्वविकल्पनां सुघटयन् भोक्तैव भोग्योपि स-
न्नच्छन्नोपि विभाति विश्वविभवः स्वच्छन्दया स्वेच्छया।। पू.प्र.का.१/१९.

**संविदो वैभवम्**–संविदः सृष्टिधर्मिता शैवागमे विस्तरेण वर्ण्यते। संविद् यथा स्वयं प्रकाशते तथा स्वयमात्मानं विमृशति। विश्वमात्मतया धारयन्तीयं सृष्ट्यादिभूमिकां नयन्ती अभेदेन भेदाभेदेन भेदेन च प्रकाश्य विमृश्य च शुद्धचैतन्यरूपतामात्मनो न जहाति।[१]

शिवस्य शक्तिरियं संविद् इदम्मयान् भावान् पूर्वम् आभ्यन्तरतया कलयति अनन्तरं यद् बहिरप्यवभासयति सैषा सृष्टिरित्युच्यते, तदाकलनाच्च देवीयं सृष्टिकालीत्युच्यते यस्याः शाक्तोपायानुष्ठाने साधकैर्ध्यानं विधीयते।[२]

---

१. (क) संवित् तावत् प्रकाशते इति तावन्न केचिदपह्नुवते। सा तु संविद् यदि स्वात्ममात्रविश्रान्ता, अर्थस्य सा कथं प्रकाशः। स हि अर्थधर्म एव तथा स्यात्, ततश्चार्थप्रकाशस्तावत्येव पर्यवसितः, इति गलितो ग्राह्यग्राहकभावः। अतोऽर्थप्रकाशरूपां संविदमिच्छता बलादेवार्थोऽपि तद्रूपान्तर्गत एवाङ्गीकर्तव्यः। स चार्थप्रकाशो यद्यन्यश्चान्यश्च तन्न स्मरणमुपपन्नम्। इत्यत एक एवासौ। इत्येकत्वात् सर्वो वेद्यराशिस्तेन क्रोडीकृत इत्येतदप्यनिच्छताङ्गीकार्यम्। ई.प्र.वि., खं. १, पृ. १०७.

(ख) एष देवोऽनया देव्या नित्यं क्रीडारसोत्सुकः।
विचित्रान् सृष्टिसंहारान् विधत्ते युगपद् विभुः।। बो.प.द. ६.

(ग) तस्मादनुत्तरो देवः स्वाच्छन्द्यानुत्तरत्वतः।
विसर्गशक्तियुक्तत्वात् सम्पन्नो विश्वरूपकः।। श्रीत.आ. ३/१९५.

२. (क) प्रभुः सृष्टिकाले व्यवहारकाले च देहादीन् प्रमात्रीकुर्वन्नेवान्तर्भान्तमर्थराशिं बहिर्भासयतीति। ई.प्र.वि.वि. खं. २, पृ. ३१६.

(ख) निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने।। स्त.चि., ९.

(ग) तदेव ह्यनुत्तरं महाप्रकाशात्म अन्तःकृतबोधमयविश्वभावप्रसरम्, अनुत्तरत्वादेव निरतिशय-स्वातन्त्र्यैश्वर्यचमत्कारभराद् भेदं विकासयति।
प.त्री.वि., पृ. ३८.

(घ) पञ्चप्रकार - कृत्योक्तिशिवत्वान्निजकर्मणे।
प्रवृत्तस्य निमित्तानामपरेषां क्व मार्गणम्।। शि.दृ., १/१२.

(ङ) संवित् पूर्वमन्तरेव भावं कलयति। तं.सा. पृ. २९.

संविदेषा[१] प्रमाणप्रमेयाद्यनेकाकारतया आभासमाना भवन्त्यपि अखण्डतालक्षणामेकतां न जहाति। अवेद्यासौ न जातु संस्कार्यतां गच्छति।[२]

विश्वोत्तीर्णाप्यसौ संविद् स्वैश्वर्यबलाद् परादिशक्तिरूपेण विश्वरूपेण च स्फुरति।[३]

सेयं संविदेका भगवती अजडा, अतोऽन्यत् तदुल्लासितं सर्वमिदं शवस्थानीयं जडमेवास्ति। न चैषा केनापि अपह्नोतुं शक्यास्ते। न चेयमभ्यासविषया। न वात्र किञ्चिदातव्यम् अपसारयितव्यं वा भवति। केवलं संविदि यो मालिन्याभासः स एवापसार्यते।[४] न ह्यस्याः संविदः अवभासने कस्यापि प्रमाणस्य अपेक्षा

---

१. सूर्यं प्रमाणमित्याहुः सोमं मेयं प्रचक्षते।
अन्योन्यमवियुक्तौ तौ स्वतन्त्रावप्युभौ स्थितौ।। उद्धृ.श्रीत.आ. ४/१०१.

२. (क) ये त्वभ्यासपथेन संविदमिमां संस्कर्तुमभ्युद्यतास्
ते किं कुत्र कुतः कथं विदधतामित्यत्र संदिह्महे।। मा.वि.वा., २/४.

(ख) संविज्ज्ञेयेति शब्दोऽयं वन्ध्या मे जननीत्यदः।
वाक्यं स्मारयतीव स्वं स्वात्मसब्रह्मचारि यत्।। मा.वि.वा., २/१६४.

(ग) उच्छलन्त्यपि संवित्तिः कालक्रमविवर्जनात्।
उदितैव सती पूर्णा मातृमेयादिरूपिणी।। श्रीत.आ., ३/१२८.

(घ) अत एषा स्थिता संविदन्तर्बाह्योभयात्मना।
स्वयं निर्भास्य तत्रान्यद् भासयन्तीव भासते।। श्रीत.आ., ४/१४७.

(ङ) एकैव संविद् उपलब्धृरूपाऽहमिति स्फुरन्ती पारमार्थिकी, मायाशक्तिजनिततथाविधस्वभावपरामर्शाभावबलात् सुखाद्यनित्यवस्तु-वेदकत्वेन "अहं सुखी दुःखी च" इत्यादिना बुद्ध्याद्यवस्था-सामानाधिकरण्यम् उपगता सती, संविदः इति बहुवचनेन निर्दिष्टा। यदि पुनः सुखादिवेद्यवस्तुसम्बन्धात् सुखादिवत् संविदोऽपि अहम्प्रत्ययरूपाः परमार्थत एव बह्व्यः स्युः, तदा स्मृतिप्रत्यभिज्ञाद्यनुसन्धानं न स्यात् असति च तस्मिन् सर्वव्यवहारोच्छेदः प्रसक्तः। स्प.वि., पृ. २७.

३. विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः।
परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः।। प.प्रा. १.

४. (क) प.सा.वि., पृ. १५३.

(ख) न च संविदः स्फुरत्तामात्रसाररूपायाः अपह्नवः शक्यक्रियः इति यत्किञ्चिदेतत्। श्रीत..वि., खं. १, पृ. ६७.

(ग) अभ्यासश्च परे तत्त्वे शिवात्मनि स्वस्वभावे न सम्भवत्येव ...... संविद्रूपेतु न किञ्चिद् आदातव्यं नापसारणीयमिति कथमभ्यासः। श्रीत.वि., पृ. २४.

(घ) नैर्मल्यं संविदश्चेदं पूर्वाभ्यासवशादथो।
अनियन्त्रेश्वरेच्छात इत्येतच्चर्चयिष्यते।। श्रीत.आ., १/१८५.

भवति। यतो हि प्रमाणानि अपि संविदा एव भास्यन्ते अन्यथा तेषामस्तित्वमेव न स्यात्।[१]

संविदन्तर्वर्तिनी पराशक्तिः क्रमात्मानं कालमवभासयति। संविदः बहिर्मुखावभासनोन्मुखतायां सत्यां प्राथम्येन प्रमातृतामात्रमवभासते। तच्च प्रमाणप्रमेयवर्जितं भवति। तदिदं शून्यम् उच्छूनस्वभावमवतिष्ठते। अनन्तरं भेदांशावभासनोन्मुखतायां सत्यां प्राणस्पन्दः ऊर्मिरूपतया अवभासते। तदनन्तरं भाविन्यां बहिर्मुखावभासभूमौ प्रमाण-प्रमेयादि-प्रसरो भवति। इत्येष अभिप्रायो वर्तते-

''**प्राक् संवित् प्राणे परिणता**'' इति वाक्यस्य। नास्य परिणामवादपरकता आस्थेया।।[२]

संविदियं दुर्घटमपि घटयन्ती महेशानी मातृमानमेयाभासनकारिणी अहमात्मना सर्वत्र आभासे अनुस्यूता विमर्शशालिनी सर्वव्यवहारप्रतिष्ठाभूमिः विश्वोत्तीर्णापि विश्वमयी सर्वकारणकारणं विजयते। यथोक्तम्-

(क) एतदेव च दुर्घटकारि महेशानत्वं संवित्तत्त्वस्य, यत् तथा तथा पशुप्रमातृतया स्वर्गनरकादिभोगभोक्तापि सर्वानुभवितृतया संवित्स्वरूप एव।[३]

---

१. प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।
किं प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति।।

सर्वावभासकस्यास्य परापेक्षा न विद्यते।
निरपेक्षोऽस्त्यतः पूर्णः स्वतन्त्रः सर्वभासकः।।

न नियताकृतिस्तस्य देशो न नियतः प्रभोः।
यतो हि विश्वरूपत्वे नैयत्यं प्रतिबन्धकम्।। पू.प्र.का. १/३८-४०.

२. संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम्।
तन्मेयमात्मनः प्रोज्झ्य विविक्तं भासते नमः।।

तदेव शून्यरूपत्वं संविदः परिगीयते।
नेति नेति विमर्शेन योगिनां सा परा दशा।।

स एव खात्मा मेयेऽस्मिन् भेदिते स्वीक्रियोन्मुखः।
पतन्समुच्छलत्त्वेन प्राणस्पन्दोर्मिसंज्ञितः।।

तेनाहुः किल संवित्प्राक् प्राणे परिणता ..... । श्रीत.आ. ६/९-१२.

३. प.सा.वि., पृ. २३.

(ख) तेन संवित्तिकात्मैव मातृमानप्रमेयता।
गृह्णती स्वप्रकाशत्वं स्वभावादेव भासते।।[१]

(ग) अहन्तैव हि संविदो लक्षणम्।[२]

(घ) संविदप्यपरामर्शरूपा चेत्तदसावपि।
अभावेन जडेनाथ तुल्यैव प्राग्वदात्मनि।।
सैवं भूतात्मना स्वेनाप्यलब्धपरिनिष्ठितिः।
कथमन्यस्य भावस्य प्रतिष्ठास्पदतामियात्।।[३]

(ङ) सर्वमेतत् संविद्रूपतयैवावभासते न तु बाह्यतया।[४]

शिवशक्तिसामरस्यमयमीश्वराद्वयसिद्धान्तमनोज्ञं मङ्गलपद्यमिदमालोच्यताम्-

**कृत्वाधारधरां चमत्कृतिरसप्रोक्षाक्षणक्षालिता-**
**मात्तैर्मानसतः स्वभावकुसुमैः स्वामोदसन्दोहिभिः।**
**आनन्दामृतनिर्झरस्वहृदयानर्घार्घ - पात्रक्रमात्**
**त्वां देव्या सह देहदेवसदने देवार्चयेऽहर्निशम्।।**[५]

परमः शिवःस्वात्मा[६] अद्वयमयः सर्वेषां भावानां स्वभावभूत आस्ते। एकस्य चास्य स्वभावप्रसरभूताः सर्वे भावाः विलसन्ति। यदि तत्त्वतः एको भावो विज्ञायते तर्हि सुतरां सर्वे भावाः तत्त्वतः ज्ञातप्राया भवन्ति।[७]

---

१. मा.वि.वा., १/४३३.

२. ई.प्र.वि.वि., खं.-१, पृ. २६५.

३. अ.प्र.सि., ९,१०.

४. श्रीत.आ.वि., खं.-७, पृ. ७७.

५. त.सा., पृ. १८/१.

६. यदाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तेनात्मेति स उच्यते।। वा.प.५/३४.

७. एको भावः सर्वभावस्वभावः सर्वे भावा एकभावस्वभावाः।
एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः।।
उद्धृ, प.सा.वि., पृ. ५९.

परमेतादृशे भैरवीप्राणे परभैरवे कश्चिदेव सुकृती प्राप्तानुरागो देदीप्यते न बहवः।[१]

परा वागेव संविन्मयी परमेश्वरमवभासयन्ती विश्वमपि समवभासयति। न ह्यत्र किमपि अतत्त्वं नाम यत्परित्यागेन तत्त्वमार्गणा क्रियेत। यत्किमपि अतत्त्वम् यद्वा तत्त्वं तत्सर्वं हे भगवन्! त्वमेवासि इदमेव किल प्रत्यभिज्ञासम्मतं तत्त्वमास्ते। तत्त्वमिदम् अणुषु मार्गणेन नावाप्यते न वा महत्परिमाणेषु यदा तु श्रीगुरोरनुग्रहभाजनभूतः साधकः अन्वेषणकर्मणो विरतो भवति तदा तस्य स्वस्मिन्, अत्र, तत्र सर्वत्र च अद्वयमयः परमेश्वर एव भाति समः समन्तात्।[२]

**एतदुक्तं भवति;** परमः शिवः प्रकाशरूपो विद्यते। अस्य विमर्शात्मिका पारमेश्वरी शक्तिः स्वभावभूता परमेश्वरादभिन्ना आस्ते वह्नेर्दाहिकेव।

सेयं शक्तिः विश्वं गर्भीकृत्य परा कुण्डलिकाख्या अहन्तया बहिर्भावपरत्वे तु इदन्तया जगदवभासयति।[३] येयं परा कुण्डलिनी, सैषा वस्तुतः स्वात्मपरमेश्वरस्य

---

१. केतकीकुसुमसौरभे भृशं भृङ्ग एव रसिको न मक्षिका।
भैरवीयपरमाद्वयार्चने कोपि रज्यति न भेदमोहितः।। मा.वि.वा. २/१५१.

२. (क) स्वानन्दतस्त्रिभुवनं कवलं विधाय
स्वात्मानमप्यतितरां समदा ग्रसन्ती।
तृप्ता तथाप्यपरिखण्डितनित्यसिद्ध-
स्वातन्त्र्यपूर्णविभवा कृशमूर्तिरव्यात्।। अद्वयद्वादशिकानाम्नि शैवग्रन्थे

(ख) किन्त्वतत्त्वपरिवर्जनं मुहुस्
तत्त्वसंग्रहकथा वृथा बुधाः।
किन्त्वतत्त्वमथ तत्त्वमेव वा
तत् त्वमेव शिवतत्त्वमीदृशम्।। इति मम शिवस्तुतौ।

(ग) वयमेकां तावदनन्तचित्रतागर्भिणीं तां संविदात्मिकां गिरं संगिरामहे।
प.त्री.वि., पृ. १४९.

(घ) अन्विष्यमाणस्त्वमणौ न दृष्टो
महत्स्वरूपेऽपि च नैव लब्धः।
श्रान्त्यात्मनि स्वस्थितिमागतेन
तत्रापि चात्रापि समत्र लब्धः।। सं० स्वा.२१५.

(ङ) यथाग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्।। स्प.प्र., पृ. ३६.

३. पारमेशी बोधाख्या शक्तिर्विश्वं गर्भीकृत्य परा कुण्डलिका .....।
स्व.तं.उ., प. ४, पृ. १६१.

परमेश्वरता विद्यते।[1] अस्याः पराशक्तेः माहात्म्यं परात्रीशिकाग्रन्थे वर्णितमस्ति। एष ग्रन्थः रुद्रयामलग्रन्थादुद्धृतः उत्कृष्टतरसाधनोपायप्रतिपादकः पञ्चत्रिंशच्छ्लोकात्मकः अस्ति। किन्तु आद्यामुपास्यां शक्तिमिमां लक्षेषु कश्चिदेव परमेश्वरानुग्रहपूतहृदयकमलः सूक्ष्मतरविचारदक्षतीव्रधिषणो विद्वान् साधकः ज्ञातुं पूजितुं वा शक्तो भवति।[2] प्रमाणम्, प्रमेयम्, प्रमाता चेति यत् त्रिकोणम्, तदात्मको यो हि प्रपञ्चः, तदुत्तीर्णतया भगवतः चिदात्मनो महेश्वरस्य या स्थितिश्चकास्ति सा परा दशा जगदम्बा शक्तिरेव। इयमेव वाक्तत्त्वमित्युच्यते।

तत्र येयं परा वाक् तस्यास्तावद् रसमयी स्थितिर्भवति। वाच्यं स्वस्वरूपे निगीर्य आनन्दमयतया अवभासमाना परिपूर्णाहं - विमर्शमयी संविद् देवीयं यतः परा वाक् तत एवास्याः रसमयता चकास्ति।

या तु पश्यन्ती वाक्, तत्र वाच्यं सामान्येनोल्लसदपि वाचकेन सहाभेदं न जहाति न वा स्फुटतया भासते। अत्र च वाच्यं बुभुत्सितमिव तिष्ठति न बुद्धम्। ततश्चास्या बुभुत्सितार्थता इष्यते।

या मध्यमा वाक्, तत्र वाचकः किल अनेकविशेषणविशिष्टो भवति अथ च पृथग् वाच्यं विमृशति। परं तत् स्फुटतया नावभासयति। अर्थस्य अस्फुटत्वादेव अत्र शब्दस्य अर्थबोधकत्वेपि स्वरूपपरतैवेष्यते।

या तु वैखरी वाक्, तत्र अर्थपरता स्फुटतया भाति। विखराख्ये शरीरे भवा इयं वाक् वाच्यं स्फुटेन स्वरूपेण उद्रिक्तमिव अवभासयति। यथोक्तम्-

**कदाचिद् वाचकांशस्तु स्वरूपग्रस्तवाच्यकः।**
**निर्भासते कदाचित्तु सामान्योल्लासिवाच्यकः।**
**जातुचिन्निकटानन्त - विशेषणविशेषितः।**
**स्फुटस्वरूपवाच्यांशसमुद्रेकेण भासते।।**
**तेनार्थपरता जातु स्वरूपपरता तथा।**
**बुभुत्सितार्थता क्वापि क्वचिद् रसमयी दशा।।**[3]

---

१. पारमेशी च बोधाख्या शक्तिर्गर्भीकृताखिला।
परा कुण्डलिकाभिख्या स्फुरन्त्याप्नोति सत्वरम्।। पू.प्र.का.१/५७१.

२. ये तावत् प्रविवेकबन्ध्यहृदयास्तेभ्यः प्रणामो वरं
केऽप्यन्ये प्रविविश्चते न च गताः पारं धिगेताञ् जडान्।
यस्त्वन्यः प्रविमर्शसारपदवीसम्भावनासु स्थितो
लक्षैकोऽपि स कश्चिदेव सफलीकुर्वीत यत्नं मम।। प.त्री.वि., पृ. २८१.

३. मा.वि.वा., १/४२२-४२४.

तदेवं शक्तिशक्तिमतोः नित्यसामरस्यमयं यदनुत्तरं तत्त्वं तदेव परमः शिव इत्युच्यते। अस्यैव संविदिति प्रथितं नामधेयम्। संविदो यद् भानात्मकं स्वं रूपं विद्यते तदेव प्रकाश इत्याख्यायते। एतत् किल संविदो नैजं महः येनासौ सततं प्रकाशमानः स्वातन्त्र्योद्भावितं विश्वं प्रकाशरूपतावेशपूर्वकमवभासयति।[१] अन्यनिरपेक्षः स्वयमेवासौ तत्तद्भावरूपतयावभासते।[२] सततं प्रकाशमानस्य जगदपि निखिलमवभासयतः परमशिवस्य महिमा अचिन्त्यः किल।[३] संविदो ज्ञानात्मकता प्रकाशः क्रियात्मकता तु विमर्श इत्यभिधीयते।[४] सततमवभासमानायाः संविदः परिपूर्णो विमर्शः ''अहमिति''। यस्याः स्वयंप्रकटता चिद्रूपता तत्र स्वातन्त्र्यातिरिक्तं न किमपि हेतुः। इयमेव पारमार्थिकी ज्ञानशक्तिः क्रियाशक्तिश्च प्रभुम् अनुत्तरपदे स्थापयतः।[५]

**प्रकाशविमर्शयोरवियोज्यता**—विमर्शस्वभावः प्रकाश एव अनुत्तरपदवेदनीयः अखण्डैकरसः अद्वयमयः सर्वभावात्मना भासमानः सर्वात्मा पारमैश्वर्यवशाद् नीलसुखाद्याभासात्मना स्फुरणशीलः तेन तेन जगदात्मना विजृम्भमाणः प्रकाशते।[६]

यद्येष प्रकाशो न स्यात् तर्हि इदं प्रत्यक्षं प्रमाणम्, इदमनुमानम् एष आगम इत्येवमादिः प्रमाणानां प्रमाणता केनापि उपपादयितुं न शक्येत अतः प्रकाशस्य

---

१. यः प्रकाशः स एवायं प्रतिभाति तथा तथा।
नैव चान्यस्य कस्यापि स तु भात्येव केवलम्।। मा.वि.वा., १/८६.

२. तस्मात्स्वसंविदेवैषा स्वप्रकाशतया स्थिता।
मातृमानप्रमेयादिप्रपञ्चैः सावभासते।। मा.वि.वा., १/९०५.

३. तस्मात्प्रकाश एवासौ गीतो यः परमः शिवः।
स एवाचिन्त्यमहिमा स्वातन्त्र्योद्दामघूर्णितः।।
प्रकाशते तथा तैस्तैः स्वभावैरच्युतस्थितिः। मा.वि.वा., १/६९-७०.

४. (क) विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः। ई.प्र., १/८/११.
(ख) देवस्य क्रीडादिमयस्य शुद्धे पारमार्थिक्यौ ज्ञानक्रिये प्रकाशरूपता ज्ञानम्, तत्रैव स्वातन्त्र्यात्मा विमर्शः क्रिया। ई.प्र.वि., खं. १, पृ. ३३८.

५. प्रकाशोऽनन्यतो भावः स्वातन्त्र्योल्लासकेवलः।। अ.प्र.सि-९.

६. (क) अतः प्रकाशाधीना चेत् सत्तास्मिन् सार्वकालिकी।
नूनं प्रकाश एवास्ति योऽवच्छेद-विवर्जितः।। त.व.धा., १/१९.
(ख) एकस्यैवाखण्डस्य प्रकाशस्य तत्तदाभासात्मना स्फुरणात्, नीलादयो हि प्रकाशत्वात् प्रकाशात्मका एवेति किं तेन भेद्यम्।
श्रीत.आ.वि., २/२१.

प्रमाणप्रकाशकता अस्ति न तु प्रमाणप्रकाश्यता। प्रकाशात्मकं यज्ज्ञानं यश्चार्थः तयोः ज्ञानं निरपेक्षतया स्वयं प्रकाशते, अर्थस्तु न स्वयम्प्रकाशते। प्रकाशेन संलग्नः सन्नेव स स सर्वोऽप्यर्थः समवभासते, नैवं प्रकाशस्य अर्थसंलग्नतयैवावभासः शक्यते वक्तुमिति प्रकाशपरमार्थतैव वास्तविकी। अत एव आगमेषु प्रकाशस्य परमोपादेयत्वमास्थीयते।[१]

यत् किमपि अप्रकाशं तत्स्वयमेव न प्रथते तर्हि तत् स्वभावः आत्मा चैतन्यं वा भवितुं नार्हति। अतो न शून्यं, न प्राणः, न बुद्धिः, नेन्द्रियादिकं, न शरीरम्, नाप्यन्यन्नीलसुखादिकं स्वभावः, अपितु प्रकाश एव भावस्वभावः नितरामास्थेयः।[२]

सोऽयं संवित्प्रकाश एव विचित्रशक्तिसुनिर्भरः विश्वात्मा सर्वत्रावभासते। सर्वाकारत्वादेवासौ परिच्छिन्नाकारवर्जितत्वाद् निराकार इत्युच्यते। प्रकाशस्य जीवितभूतो विमर्श एव। निर्विमर्शः प्रकाशः अर्थोपरक्तः सन्नपि जड एव भवति। अत एव प्रतिबिम्बितमर्थमवभासयन्नपि दर्पणप्रकाशः स्फटिकप्रकाशो वा न चेतनः अपितु जड एव। आत्मप्रकाशोऽपि यदि स्फटिकादिवद् निर्विमर्श एव स्याज्जड एवासौ भवेन्न चेतनः। अयमेव स विशेषः येन ईश्वराद्वयवादः निर्विमर्शब्रह्मवादाद् भिद्यमानः पृथक् प्रस्थानभावमाकलयति।[३]

---

१. (क) तस्मादर्थस्य प्रकाशमानता नामात्मा- परमार्थरूपम्, न तु भिन्नः कश्चिदर्थः। अर्थस्य च प्रकाशमानता, अनुभवरूपता आत्मा, न तु प्रकाशमानताया अर्थात्मता। ई.प्र.वि.वि., खं.-२, पृ. ६९.

(ख) अतः प्रकाशाधीना चेत् सत्तास्मिन् सार्वकालिकी।
नूनं प्रकाश एवास्ति योऽवच्छेदविवर्जितः।। त.व.धा., १/१९

(ग) प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते।
अनपह्नवनीयत्वात् किं तस्मिन् मानकल्पनैः।। श्रीत.आ., १/५४.

(घ) प्रकाश एव भावानां स्वभावः सर्वसम्मतः।
स एव शिवशास्त्रेऽस्मिन्नुपादेयः परो मतः।। पू.प्र.का. १/२०.

२. अप्रकाशं च यत्किञ्चित् स्वयं न प्रथते हि तत्।
स्वभावत्वं कुतस्तस्य वस्तुतत्त्वमवस्तुनः।।
अभावः शून्यमेवाथ यदन्यदपि किञ्चन।
प्रकाशते न तत्सर्वं प्रकाशात्मतया विना।। पू.प्र.का.१/२१-२२.

३. (क) तस्मात्प्रकाश एवायं चित्रशक्तिसुनिर्भरः।
स्वयं विचित्ररूपेण भाति विश्वत्र विश्वतः।। मा.वि.वा., १/६०७.

(ख) इति सर्वत्र एवैकः प्रकाशः परमार्थतः।
सर्वाकारनिराकारस्वभावः स विराजते।। पू.प्र.का., १/३६.

(ग) स्वभावमवभासस्य विमर्शं विदुरन्यथा।
प्रकाशोऽर्थोपरक्तोपि स्फटिकादिजडोपमः।। ई.प्र.,का. १/५/११.

(घ) भानं चेत् स्यान्निर्विमर्शं च तत्तच्चेत् तद्रूपं तर्हि भेदो न योऽत्र।
भारूपायाहंविमर्शात्मकाय जीवायास्मै मे नमो वा शिवाय।।

न चास्य संवित्प्रकाशस्य देशकृतः कालकृतः, आकारकृतो वा भेदः सम्भवतीति विश्वात्मनोऽस्य अखण्डरूपता, एकता, नित्यता, चितिरूपता, स्पृहणीयता चास्थीयते।[१]

अहमात्मा प्रकाशः स्वतन्त्र आस्ते, इदमात्मानस्त्वर्थाः परतन्त्रा भवन्ति। मानप्राणान् वितन्वति अनुत्तरप्रकाशे प्रमाणापेक्षा नैवास्ति। निरपेक्षः प्रकाशः एव स्वतन्त्रः सर्वभासकः विश्वरूपः परमार्थतः समुल्लसति। विश्वभावस्वरूपोऽपि असौ स्वस्वभावाद् अनुत्तरस्वरूपाद् न च्युतो भवति।[२] संवित्तिः, संविद्, स्वसंवेदनम्, प्रकाशः, अनुत्तरः, शिवः, शक्तिः, चिद्, चितिरित्यादिकं नार्थान्तरं किञ्चित्।[३]

---

१. (क) भावाभावस्वरूपस्य विश्वस्य जगतः किल।
आत्मा स्वभावश्चैतन्यं तद्भिन्नं नहि किञ्चन।। पू.प्र.का. १/२५.

(ख) देशकालौ न चैवास्य भेदकौ भवितुं क्षमौ।
स्वप्रथां प्राप्नुतो यस्मादस्मादेवापि तावुभौ।। पू.प्र.का. १/२९.

२. (क) तदुक्तं परमेशेन श्रीमदुच्छुष्मभैरवे।
यावन्न वेदका एते तावद् वेद्याः कथं प्रिये।।

स्पन्दशास्त्रेपि सम्प्रोक्तं वसुगुप्तमहात्मना।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।। पू.प्र.का.१/२७-२८.

(ख) प्रकाशः स्वप्रकाशार्थं स्वस्मादन्यन्न किञ्चन।
अपेक्षते न चैवास्ति प्रकाशान्तरमेव च।। पू.प्र.का. १/३५.

(ग) प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।
किम्प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति।। पू.प्र.का. १/३८.

(घ) तस्मात् प्रकाश एवायं गीतो यः परमः शिवः।
स एवाचिन्त्यविभवः स्वातन्त्र्यरसनिर्भरः।। पू.प्र.का. १/४४.

तैस्तैः स्वभावभूतैस्तु भावैर्भाति तथा तथा।
विश्वभावस्वरूपोपि तिष्ठत्येवाच्युतस्थितिः।। पू.प्र.का. १/४५.

३. स्वप्रकाशात्मिका येयं संवित्तिः पारमार्थिकी।
तत्स्वसंवेदनं प्रोक्तं यतो विश्वव्यवस्थितिः।। पू.प्र.का . १/३३.

## प्रत्यभिज्ञा प्रकाशिका

अधिकारि-भेद-भिन्नानां विविधागमानां रहस्यात्मप्रकाशनपरा परा प्रत्यभिज्ञैव भगवती सारम्। सेयं श्रीमद्धिरीश्वरानुगृहीतैरित्थमाकलिता भवति-

**''सोहमस्मि शिवो विष्णुर्ललिता सास्मि वा स्वयम्।**

मनाक् पश्यन्तु-ममेव श्रीमतामपि स्वातन्त्र्यस्वभावोल्लसितानां विलसितमदः प्रोज्जृम्भणं यत्परमार्थत एकात्मानो वयं स्वोत्प्रेक्षिते मायापदे देहादिप्रथनेनात्यन्तं भिन्नाः स्मो भासमानाः।

सुहृदः!क्रीडाशीलै; शिवात्मभिर्भवद्धिरेव स्वाभिन्नमायाव्यामोहितैः संकुचिततया स्वपूर्णत्वाख्यातिरुपकल्प्यते-यदिदमाणवं मलमित्युच्यते।

माया, ततो लब्धजनिः कला, तस्याश्च जायमानं विद्या, (अशुद्ध) रागो, नियति; कला चेति चतुष्कम्इति मायादिषट्कं कञ्चुकमित्युच्यते। स्वात्म-महेश्वरः कञ्चुकषट्केन किञ्चित्कर्तृत्वादिकस्याधानं स्वात्मनि विधाय मालिन्यमुपगतः पशुर्भवति।

मायया संवृत्ते संकोचने स्वभिन्नतया देहादीनां यदवभासनं तदेव मायिकं मलमित्युच्यते। सुखादिजनकस्य धर्मादेः, यो हि संस्कारस्तत् कार्मम् मलमित्युच्यते।

तथा च आणवं, मायिकं कार्मं चेति मलत्रितयमेव बन्धः, यस्य तारतम्येन भवदभिन्ने स्वात्मन्येव सप्तविधाः प्रमातारः समुल्लसन्ति-शिवः, मन्त्रमहेश्वरः, मन्त्रेश्वरः, मन्त्रः, विज्ञानाकलः, प्रलयाकलः सकलश्चेति।

एतदुक्तं भवति-क्रीडाशीलः प्रकाशवपुर्भवदात्मा शिव एवं दुर्घटसम्पादनशक्तया स्वभावभूतस्वातन्त्र्यशक्त्या कञ्चुकषट्कपाशितो मलत्रयावृतः पशुत्वमुपगच्छतीति।

तथा च स्वेच्छयैव पशुत्वमापन्ना वयं सर्गात् सर्गमावर्तमाना बन्धमुपयाता दुःखाद् दुःखमनुव्रजन्तः क्लिश्यन्तश्च जिहासितदुःखात्यन्तिकैकान्तिकनिवृत्तिपुरःसरं निरवधिकनिरतिशयानन्दमलौकिकमिवावाप्तुं प्रयतामहे।

एतदर्थं च प्रवृत्तेषु शास्त्रेषु परमार्थतया प्रत्यभिज्ञासारमागममेव समुपदिशति निखिलानुग्रहपरायणः परमेश्वरः।

अनाद्यविच्छिन्नपारम्पर्येण किल अनाप्तानुक्तवचस्तात्पर्यं व्यातन्वानाः श्रीगुरवो विधृतेश्वरविग्रहा अनुग्रहैकस्वभावाः प्रत्यभिज्ञाशास्त्रं विशदयन्तो नित्यसिद्धां पूर्णताख्यां शिवतां प्रत्यभिज्ञापयन्तोऽनुग्राह्यचेतश्चमत्कुर्वन्तो विजयन्ते।

प्रकाशो नाम भवदात्मा प्रतिभासमानस्य वेद्यमात्रस्य स्वभावः। अर्थात् प्रकाश एव तेन-तेन रूपेण प्रथते स्वतन्त्र-स्वाभाव्यात्।

एकमेवैतज्ज्योतिः शिव इति वा शक्तिरिति वोच्यते, नार्थभेदः। शिवस्यैव मदभिन्न-भवदात्मनो नाम प्रकाशः, शक्तेस्तु शिवाभिन्नस्य संविदिति।

एवञ्च प्रकाशाख्यशिवस्य नित्या अवियोज्या शक्तिः संविद्भगवतीत्युच्यतां, सती संविद्भगवती वाऽऽनन्दप्रकाशमयीति नैतदर्थान्तरम्।

संवित्प्रकाशानुवेधरहितो न कश्चन वेद्यः प्रतिप्रकाशत इति वेद्यमात्रस्य प्रकाशसारत्वमिति प्रकाशस्यैव परमोपादेयत्वमागमेषु प्रतिपाद्यते।

एष च भवदात्मा प्रकाशः एक एव, तस्य स्वरूपतो विषयतो वा भेदनासम्भवात्। यदि हि स्वरूपतो भिद्येत प्रकाशान्तरात् प्रकाशस्तर्हि अन्यतरस्य अप्रकाशमानत्वमकामेनापि स्वीकर्तव्यमिति प्रकाशमानता नोपपद्येतेति स्वप्रकाशोऽयमेकः।

नापि विषयकृतो भेदः सम्भवति। यतो हि वराका विषयाः स्वमपि अजानाना घटनीलादयो, नितरामन्योन्यावगमसामर्थ्यशून्याः कथंकारं प्रकाशं भवन्तं भेत्तुं शक्नुयुः।

प्रकाशकृतान्योन्यभेदैर्विषयैः प्रकाशभेदाभ्युपगमे तु कथमिवान्योन्याश्रयदोषपङ्क-प्रक्षालनं सम्भवेत्।

तथा चायं समुदितार्थः- योऽयं प्रतिभासमानो वेद्यवर्गः स सर्वोपि भवतः संविदात्मनोऽभिन्नः सन्नेव भासत इति यदिदं विश्वप्रकाशनं, तन्नातिरिच्यते भवदात्मप्रकाशादिति विश्वप्रकाशोपि शिवप्रकाश एव।

यच्चेदं मुख्यकर्तृत्वहानाद् भेदावभासनं तदपि संविद्भित्तिसंलग्नं सदेवेति नातिरिच्यते संवित्स्वरूपाद् भवतः।

एवञ्च स्वातन्त्र्येण विश्वात्मना भासमाने भवति-इदम् इत्थम् ईदृशमित्येवं परिच्छिन्नता न सम्भवति। यदुक्तं शिवस्तुतौ-

**नासीदृशस्त्वं नच तादृशस्त्वं**
**त्वं कीदृशोऽसीत्यनुयोग-शून्यः।**
**त्वं यादृशोऽसीत्यपि नैव वक्तुं**
**योग्योऽसि, शम्भो! त्वमसि त्वमेव।। इति।** [१]

---

१. सं० स्वा० २१५.

सा चैषा संविन्नान्यदपेक्षते प्रकाशयितुम् , स्वप्रकाशत्वाद् , संविदन्तराभावाच्च। देशकाल-क्रमाक्रमप्रथनप्रकाशके देशकालादिकलाभिरनास्पृष्टे भवदात्मनि परिच्छेदविवर्जितत्वाद् व्यापकत्वम् अनादिनिधनत्वान्नित्यत्वं, विश्वाकारतया परिच्छिन्नाकारवर्जितत्वं, परानपेक्षतया निरपेक्षस्वातन्त्र्यं च चकास्ति।

यश्चायं सर्वत्र स्वयन्त्वेनाप्रतिहतप्रकाशानुवेध: अहं स्वयमस्मि, त्वं स्वयमसि, अयं स्वयमस्ति, भवान् स्वयमस्तीति- सेयमनुक्षणं स्वपरामर्शनात्मा विमर्शाख्या अवियोज्या संविद्भगवती स्वातन्त्र्याख्या भवदभिन्ना शक्ति:, सविमर्शे स्वात्ममहेश्वरे मयीव भवत्यपि बिम्बं विनैव स्वाभिन्नमप्यन्योन्यं भिन्नतया स्वाभिन्नतया च वेद्यराशिं प्रतिबिम्बतया भासयतीति स्वातन्त्र्यवादिनां सामरस्यरूपा पूर्णता नैजं स्वभावभूतम् । तस्य च प्रत्यभिज्ञया स्वरूपोल्लासनाद् द्वैतस्यापि स्वात्मकतया द्वितीयाभावाद् कुतो भयम्? बन्धो वा?- इति वयमिव भवन्तोऽपि श्रीगुरुकृपाप्रध्वस्ताखिलध्वा-न्ता: सद्य एव स्वात्मनि श्रीगुरौ परमेश्वरे सच्चिदानन्दैक्यपरामर्शशीला अनुपायेन शैव-शाक्ताणवोपायेन वा चमत्कृता: कृतकृत्या अनुग्रहैकरूपा: जीवन्मुक्ता गुरवो भवेयु:।

एषा किल आगम-मर्यादा यद्गुरोरवाप्तशक्तिपात: सहजाममलां स्वपूर्णतारूपां शिवतां मत्वैव समवाप्तप्रत्यभिज्ञो माहैश्वर्यमुपगतो विकल्पकल्लोलिनमविकल्पमानन्द -सागरमात्मानमविकृतं पश्यन् मुहुर्मुहु: हृष्यति।

सोऽयमागम: संवित्स्वभाव: सर्वस्यात्मेति परिच्छिन्नेन देशकालनीलादिवेद्येन नैवाकलनीय इति स्वयं परामर्शनीयमेवैतदनुत्तरं धाम-

**अथेतिसंस्पर्श-विहीनतत्त्वे तदात्मके तत्प्रतिपादके च।**
**सदैकरूपेण विजृम्भमाणे प्रारम्भपर्यन्तकथाकथं स्यात्।।** [१]

श्रीप्रत्यभिज्ञादर्शनं नाम पूर्णताधायकं परमपुरुषार्थसाधनकम् अनुभवपथारूढं हृदयावर्जकं दर्शनीयतमं शास्त्रम्।

परमेश्वरानुग्रहपवित्रित: कश्चिदेव उपदेशपात्रतासमवाप्तिपुर:सरं परमेश्वराकारं सद्गुरुमुपसर्पति। अथ च प्राप्तोपदेशोऽनुभूत-चिदानन्दैकघनस्वरूप: प्रहीणपशुस्वभाव: परानन्दचिच्चमत्कार-विस्फारेण प्रकाशमान: साधको निखिलं जगदाभासयति।

**परमाद्वैतवाद:**

निखिलमिदं जगत् स्वात्ममहेश्वरादेव निर्भासते, स्वात्मन्येव विश्राम्यति, स्वात्ममहेश्वरेच्छयैव च प्रकाशते। स्वात्ममहेश्वर एव प्रकाशमानस्य विश्ववेद्यस्यात्मा। महेश्वरो ह्येष विश्वस्मिन् आनाच्छदितस्वरूप: स्वेच्छयैव स्वानधिकमपि विश्वमधिकमिव प्रत्येति।

---

१. पू.प्र.का. २/६१९.

## अभेदेपि शिवेच्छया भेदावभासनम्

किञ्च भावानां स्वात्ममहेश्वराभिन्नसंविदमन्तरेण सत्त्वासत्त्वादिप्रतिष्ठानानुपपत्त्या संविद्विश्रान्तत्वमेवाभ्युपेयम्। तत एव चैषां तदभिन्नप्रकाशमानत्वम् अर्थात् तदनतिरिक्तत्वेऽपि ततोऽतिरिच्यमानत्वं स्वातन्त्र्यादेव निर्भासते।

ततश्च सकलोऽयं वेद्यप्रपञ्चः स्वात्ममहेश्वराभिन्नसंविद्रूपमदभिन्नो भवन् भातीत्यतो विश्वं भातीत्यहं भामि, अहं भामीति विश्वं भाति-तदेवं स्वात्मप्रकाशो विश्वप्रकाशः स्वरूप एवेति लेशतोऽपि द्वैतानङ्गीकारात् स्वातन्त्र्यवादापरनामधेयः परमाद्वैतवाद एव हृदयमावर्जयन् विजयते।

## विश्वबीजं शक्तिः–

यथा हि न्यग्रोधबीजे शक्तिरूपेण महाद्रुमो विराजमान आस्ते एवमेव स्वात्ममहेश्वरे निर्भासमानं निखिलमिदं विश्वं शक्तिरूपेण विद्यमानमाभाति। यदुक्तं पारमेश्वरे-

**शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।**
**शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांश्च महेश्वरः।।इति।** [१]

विश्वोत्तीर्णोऽप्ययं जडविलक्षणः स्वात्ममहेश्वरः स्वातन्त्र्यशक्त्या शिवादि-धरान्तं विश्वरूपं भजते। यदुक्तं महेश्वरस्तोत्रे-

**शिवादिपृथ्व्यन्तसमस्तविश्वरूपेण चैकोऽपि विभासि यत्त्वम्।** [२]

अयमात्ममहेश्वरो न निष्क्रियो निर्गुणः शान्तो मुकुरवज्जडकल्पः, प्रत्युत प्रकाशविमर्शमयः संविद्रूपः प्रतिक्षणमुच्छलच्चैतन्यस्वभावो गर्भीकृत-विचित्रतनुकरणभुवनसन्तानः प्रमातृप्रमाणप्रमेयस्वरूपः प्रकाशमानतासारश्चकास्ति। यदुक्तम्-

**अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।**
**महेश्वरत्वं संवित्त्वं तदत्यक्षद् घटादिवद्।।इति।** [३]

## विश्वमयोपि विश्वोत्तीर्णः शिवः–

यथा हि स्फटिकमणिरेकक; नानाविधनीलाद्युपाधिवैचित्र्येण वैचित्र्यमादधानोपि नो जहाति स्फटिकतां, तथा चिदेकघनः स्वात्ममहेश्वरः एककोऽपि स्वातन्त्र्येण स्वस्मिन्नमले देवमनुष्यपश्वादिवैचित्र्यं स्वात्माभेदेन धारयन्नपि ततोऽपि समुत्तीर्णः नित्यनिरतिशयानन्द - चिद्घनस्वभावः अहमित्येवं स्वरसतः स्फुरन् निरवच्छिन्नमेकमात्मानं प्रत्यवमृशति।

---

१. स्प० का० वि० ३. २. पू० प्र० का० १/१०७,

३. श्रीत० आ० १, पृ० १९२

**बन्धमोक्षमयी क्रीडा–**

एष स्वात्ममहेश्वरो निजरूपगोपनक्रीडाशील: स्वतन्त्रो भगवान् पूर्णताऽख्यात्यवभासनपुर:सरं स्वात्मानमेव देहादिपरिमितप्रमातृतापन्नं विधाय, निजरूपप्रच्छादनद्वारा बन्धं विदधाति, पुनश्च स्वेच्छयैव स्वात्मज्ञानप्रकाशक्रमेण देहादिप्रमातृताबन्धनिवारणपुर:सरं स्वं मोचयतीति बन्धमोक्षचित्रां क्रीडां प्रतनोतितराम्।

स्वभावादेव देवदेव एष तां तां विचित्रामवस्थामापन्न: स्वरूपरूप: सन् अनुभवितृरूपेण प्रयतमान आस्ते इदमेवोच्यते प्रभो: स्वातन्त्र्यमिति।

तथा च देहाद्यभिमानसंकुचित: स्वात्मा बद्ध इव स्वस्वरूपज्ञानाभिव्यक्त्या तु मुक्त इव भवति वस्तुतस्तु न बन्धो न वा मोक्ष:।

एवं चाहमेव शिव आनन्दघन: स्वपरप्रकाश: प्रकाशविमर्शस्वभावो भारूपोस्मि भासमान:।

तदुक्तं महामहोपाध्यायैराचार्यरामेश्वरझामहानुभावै:-

**शिवोऽहमानन्दघनो महेश: स्वयंप्रकाशश्च परप्रकाश:।**
**परंनिजान्नैव हि किञ्चिदन्यत् स्वयं परं सर्वमिदं यतोऽहम्।।** [१]

त्यागग्रहराहित्येन नित्यनिरतिशयानन्दपरमपुरुषार्थाधायकमिदं परमाद्वैतमित्युच्यते-

**एतद्धि परमाद्वैतमत्र त्यागग्रहौ न हि।** [२]

**परमेश्वरस्वातन्त्र्यात् प्रमातृप्रमेयप्रसर:**

स्वातन्त्र्यवाद: प्रत्यभिज्ञादार्शनिकानां सिद्धान्तो विजयते किल। परमेश्वरो भगवान् स्वस्वातन्त्र्यादेव प्रमातृरूपतया प्रमेयरूपतया च प्रकाशते। तत्र प्रमातार: रुद्रमारभ्य स्थावरपर्यन्तमापाततो भेदेन प्रतिभासमाना अपि परमार्थतो भगवद्रूपा एकात्मान एव भवन्ति। आन्तरं सुखादिकं बाह्यं नीलादिकं वा प्रमेयजातं वस्तुतो भगवद्रूपमपि तत: परस्परतश्च अतिरिक्ततया भासमानं भवति।[३]

---

१. पू.प्र.का. १/२७३.

२. पू.प्र.का. १/२५२.

३. (क) ई० प्र० वि० वि० अ.१, वि.१, पृ. ९.

(ख) आगमस्तु नामान्तर: शब्दनरूपो द्रढीयस्तमविमर्शात्मा चित्स्वभावस्य ईश्वरस्य अन्तरङ्ग एव व्यापार: प्रत्यक्षादेरपि जीवितकल्प:।

ई.प्र.वि., ३/२०, पृ. ८०.

भासमानानां भावानां सत्त्वमसत्त्वं वा संविद्विश्रान्तिं विना नोपपत्तिमञ्चति। सर्व एव भावाः संविद्विश्रान्ताः सन्तो भवन्ति प्रकाशमानाः। तदेवं संविदभेद एव भावानां प्रकाशमानता। प्रकाशसंविदोश्चाभेदः प्रथते। यथोक्तम्-

**सैव सर्वेषु शास्त्रेषु संविदित्यभिधीयते।**
**अर्थप्रकाशरूपा हि संवित् सर्वस्य सम्मता।।इति।**[१]

## प्रकाशस्य विमर्शाऽविनाभावः –

संविदात्मनि प्रकाशमहेश्वरे विश्राम्यन्तः सर्वेऽमी भावाः संविदनधिकवृत्तयो भवन्ति। सोऽयं प्रकाशो विमर्शविरही न भवति। विमर्शो नाम परमेश्वरस्य तदभिन्ना इच्छा, न त्वन्या काचित्। अनयैवेच्छया महेश्वरो रुद्रादिप्रमातृवर्गं नीलसुखादिप्रमेयवर्गं चावभासयति। एतस्यैव परमेश्वरस्य अशिव-सांसारिकमोहापवरकस्य भोगापवर्गप्रदत्वमिति अस्यैव स्वात्ममहेश्वरस्य भक्तिर्युज्यते नान्यस्य।[२] यस्तु आत्मभिन्नं यं कञ्चनं देवमुपास्ते स नूनं जडमेवोपास्ते। यदुक्तं श्रीगुरुभिः-

**उपासतेपि ये चान्यं देवं यं कञ्चनापि तु।**
**स देवोऽप्यहमेवास्ति न चेद् देवो जडो भवेत्।।**[३]

## परमेश्वरस्य स्पन्दनात्मा वृत्तिः स्वच्छा स्वच्छन्दा च

एष प्रकाश एव भासमानानां भावानां स्वभावआस्ते। संविदभेदं विना भावानां प्रकाशमानताऽभावात्। संविदमतिरिच्य नीलादिभावानां प्रकाशनं तथैव न सम्भवति, यथा दर्पणप्रतिबिम्बितानां ग्रामनगरादीनां दर्पणव्यतिरेकेण प्रतिभासमानता। यथा दर्पणस्य स्वच्छता भवति तथैव प्रकाशाभिधस्य महेश्वरस्यापि संवित्स्वभावस्य। एतावांस्तु विशेषो यद् दर्पणेन स्वस्मिन् प्रतिबिम्बितस्य ग्रामनगरादेर्विमर्शनं न विधीयते किन्तु स्वात्ममहेश्वरेण प्रकाशेन तु नीलसुखादीनां प्रकाशनं यत् क्रियते तस्य विमर्शनमपि विधीयते। अतः स्वच्छोऽसौ प्रकाशः स्वच्छन्दोऽप्यास्ते। न चास्य कालपरिच्छेदनं सम्भवति, कालस्यापि संविल्लग्नतयैव प्रकाशमानत्वात्। अत एव शश्वत्पदमुपादीयते। **एतदुक्तं भवति** - भगवतः प्रकाशमहेश्वरस्य स्वरूपस्पन्दनरूपा वृत्तिः कालापरिच्छिन्नतया शश्वदित्युच्यते। स्वरूपान्यथाभावस्य अस्वीकाराद् अच्छन्नासौ भवति। अथासौ अधिकनिर्भासनमिव सहमाना भवति अतः स्वच्छा भवति। विमर्शशालितया स्वच्छन्दा भवति। एतादृशवृत्तिशाली भगवान् भैरवः प्रत्यभिज्ञातः सन् अशिवरूपसांसारिकमोहमपनयति, अथ च आनन्दसारमयभोगापवर्गवितरणेन

---

१. पू.प्र.का. १/३२.

२. ई.प्र.वि.वि., १/१/पृ. ७.

३. सं.स्वा. २/७.

भक्तजनमनुगृह्णाति। अतः परमेश्वरः स्वात्ममहेश्वर एव शरण्य आस्ते, नान्यः।

एष भगवान् स्वातन्त्र्यशक्तिमहिम्ना विभिन्नप्रमातृरूपतया, विभिन्नप्रमेयरूपतया च भासते। अत एव तृणमिदं मम प्रतिभासते इत्येषा अनुभूतिर्भवति। ''तृणमिदम्'' इत्यत्र यौ प्रकाशविमर्शौ तौ तृणांशादुत्तीर्णौ संविद्भागम् अवलम्बेते। तदिदं स्वातन्त्र्ये विश्रमणं सुस्पष्टमाभाति। एतावता विच्छिन्नानां विमर्शानां कामं भवतु इदमात्मता, पर्यन्ततस्तु तेषाम् अखण्डविमर्शरूपतैव इष्यते। स चाविच्छिन्नो विमर्शो भवति-अहमिति। स एष किलाहंविमर्श एव शब्दनमित्युच्यते। यदुक्तम्-

**इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।**
**या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्।।इति।**[1]

अस्या एव नामधेयं भवति परा शक्तिरिति। अनुत्तरशिवाद् अस्याः शक्तेर्नास्ति कश्चिद् भेदः। यदुच्यते-

वक्ति स्वरूपं विमृशतीति व्युत्पत्त्या इयमेव ''परा वाक्'' इत्युच्यते। अस्याः त्रयः अवयवाः प्रसिध्यन्ति पश्यन्ती, मध्यमा, वैखरीति। अत एवास्याः ''त्रयी'' इत्यभिधानं प्रथते।

एतस्यां वाचि परिदृश्यमानं वाङ्मयं प्रमितिलक्षणपरामर्शरूपसंवेदनानुविद्धतया शब्दैकशरीरं विश्वं निर्भरितं भवति। यच्च पश्यन्त्यां विकासोन्मुखं भवति, मध्यमायां विकसद् भवति, वैखर्यां तु पृथक्तया स्फुटं परामृष्टं लब्धविकासं भवति।

ततश्च शब्दैकशरीरता शब्दार्थयोरास्ते। एतावान् महिमा शब्दनशब्दप्रमाणस्य। प्रसिद्धिमूलकस्य चागमरूपशब्दप्रमाणस्य अशेषलोकयात्रानिर्वाहकत्वं सुतरामुपपद्यते। संविद्रूपे प्राणितकल्पं शब्दनात्म विमर्शरूपत्वं किल असांकेतिकमास्ते। तदेतत् संकेतकृतानां शब्दान्तराणां, तदुपजीविनां च विकल्पान्तराणां, भित्तिरूपं नितरां श्लाघ्यमास्थीयते।[2]

सविमर्शः शिव आत्मनः सकाशात् स्वस्मिन्नेव स्वया इच्छया भेदात्मना अशेषान् शुद्धाशुद्धमिश्ररूपान् लोकान्, प्रमातृन्, प्रमेयाणि चावभासयति। अयमेव किल तदीयान् कार्यकारणभाव-क्रियाकारकभाववैचित्र्यादीन् परस्परसम्बन्धान् अवभासयति। अथ समेषामप्येषां पारमार्थिकः स्वभावोऽयमेव शिवो नान्यः। संविदात्मकतया[3] तिष्ठन्नच्युत एवासौ विचित्रप्रमातृप्रमेयात्मना संविद्रूपानधिकेनापि

---

१. अ.प्र.सि.का. १५.

२. पू.प्र.का. १/१४०.

३. काप्यवस्था न ते सास्ति यस्यां संविन्न वर्तते।
तेन चिद्घनमेव त्वां योगिनः पर्युपासते ।। स्प० प्र० टी० -१४.

संविद्रूपाधिकतया तेन तेन निर्भासमानवपुषा प्रकाशते अथ तथा तथा विमृशतीति नात्र कालपरिच्छेदः, नापि स्वरूपातिरेकः। एनमेव शिवं परमहंसाः प्रधानप्रमातृतया आत्मसात्कुर्वाणाः मायाप्रमातृभावाभिमानं त्यजन्तो जयन्ति।[१]

अद्वैताचार्यास्तत्रभवन्तो मधुसूदनसरस्वतीपादा अपि मायाकल्पितमातृतां स्फुटमाहुः।[२]

## प्रत्यभिज्ञास्वरूपम्

एष स्वात्ममहेश्वर; स्वस्वरूपतया प्रत्यभिज्ञातः पूर्णाहन्तया परिगृहीतः पूर्णतारूपपरमार्थलाभाय कल्पते। अथ केयं प्रत्यभिज्ञेति चेद् ? उच्यते- प्रतीपम् आभिमुख्येन ज्ञानं प्रत्यभिज्ञा। ज्ञातस्यापि विस्मृतस्येव प्रच्छादितस्येव पुनः आभिमुख्येन यज्ज्ञानं तत्प्रत्यभिज्ञेत्युच्यते। नात्र स्मर्यमाणतया अस्फुटमिव ज्ञानं भवति। किन्तु सुस्पष्टं ज्ञानमुदेति स एवायमिति। यत् पूर्वं भातं यच्चाधुना भासमानं तयोर्द्वयोरपि अनुसन्धानयोः स्थिरस्य वस्तुनो व्यक्तेर्वा ज्ञातताऽत्र प्रतिभासते। सोऽयं देवदत्तः, अयमसौ मयाद्य प्रत्यभिज्ञात इत्येवमादिः प्रत्यभिज्ञा खलु सुस्पष्टज्ञानात्मिका संशयविपर्ययादिवर्जिता चकास्ति।

प्रकृतदर्शने यो ह्यात्मा सततं भासमानः समेषां, स कामं भवेन्मोहावृतः, किन्तु तद्विषये स्वरूपभूते गुरुशास्त्रपरमेश्वरानुग्रहेण पुनराभिमुख्येन यज्ज्ञानमुदेति ''सोहम्'', ''शिवोऽहम्'' इत्येवमादिरूपं, तदेव ''प्रत्यभिज्ञा'' इत्युच्यते। अस्याश्च प्रत्यभिज्ञाया उपायो भवति समस्तसम्पदवाप्तिः। यथोक्तम्-

**समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि–इति।**[३]

अथ कथं समस्तसम्पदवाप्तिः प्रत्यभिज्ञाया उपाय इति चेदुच्यते। समस्तस्य नीलसुखादेः वेद्यप्रपञ्चस्य या सम्पद् सिद्धिः, तस्याः समस्तसम्पदो या सम्यगवाप्तिः अचलविमर्शोपारोहरूपा सैव पूर्णताप्रत्यभिज्ञाया उपाय आस्ते इति।

## माया स्वातन्त्र्यशक्त्या नातिरिच्यते-

माहेश्वरं यत्स्वातन्त्र्यं तदीया पूर्णतैव प्रत्यभिज्ञायमाना परमार्थसम्पत्तये प्रकल्पते। स्वातन्त्र्यस्यैवापरं वपुर्माया। सेयं दुर्घटमपि सुघटयति। यदुक्तं-

**दुर्घटं घटयन्तीयं सम्भावयन्त्यसम्भवम्।**
**अवितर्क्या प्रभोः शक्तिः सृजन्तीदन्तयाप्यहम्।।**[४]

---

१. ई.प्र.वि.वि. १/१/७.,  २. अ० सि०,मं.१.
३. ई.प्र.वि.वि., १/१.,  ४. पू.प्र.का. १/१४०

एनयैव शक्त्या प्रकाशवपुः परमेश्वरः स्वरूपमनाच्छादितमपि आच्छादितमिवावभासयति। तत्र योऽयमनाच्छादनांशः, तत्प्रधानतायां सदाशिवरूपता ईश्वररूपता वा समावेशदशा समुल्लसति। यस्त्वस्य प्रभोः आच्छदनांशोऽवभासः तत्प्रधानतायां मायोद्रेकात् संसारिदशा प्रसरति। अस्यां दशायां नीलसुखादिवेद्यभेदेन सह वेदकभेदोपि मायाप्रमातृतामन्योन्यविलक्षणामुपपादयन् विलसति। तत्रायं विवेकः- नीलसुखादिः प्रकाशं नीलसुखादिरूपत्वे निमज्जयति येन नीलमिदमिति सुखमिदमिति वा प्रकाशः परिमितीभवति। देहप्राणमनोबुद्ध्यादौ तु निमग्नः सोऽहमिति प्रकाशः परिमितः सन् रुद्रक्षेत्रज्ञादिनानाप्रमातृरूपेण प्रतिप्रकाशते। एवंच यदिदं द्विधा परिमितीकरणं तदेव संसारोत्थापकं मोहनं नाम व्यापारमामनन्ति मायाया आगमिनः।

नीलमिदमिति सुखमिदमिति वा यो विमर्शः स एव प्रकाशस्य परमार्थस्वभावः। तथा च विमर्शस्वभावे यस्मिन् सम्यक्तया अर्थसार्थः प्रतिबध्यते स प्रकाशः प्रमातेत्युच्यते। सोऽयं प्रमाता स्वप्रकाशः नित्यविमर्शमयश्चास्ते। स च विमर्शोऽनन्याधीनोऽहमात्मा शब्दनशब्दितः संविदि प्राणस्थानीयो भवति। शब्दनञ्चैतत् संकेतनैरपेक्ष्येण सहजपरामर्शोचितं भवति। एतदेव संकेतकृतानां शब्दान्तराणां, तदुपजीविनां विकल्पान्तराणां, तद्विकल्पविकल्पनीयतया सृष्टानाम् आभासान्तराणां च भित्तिकल्पमवभासते। परमार्थतः सर्वत्र प्रतिष्ठास्थानभूतं शब्दनप्राणं संवेदनमेवेति निश्चप्रचम्। एतदेव किल मायाशक्त्या शून्यप्राणशरीरादौ समारोप्यमाणं संकुचितमित्युच्यते। स्वपरव्यवहारश्चैतन्मूलक एव। यदुक्तम्-

**यद्यप्यर्थस्थितिः प्राणपुर्यष्टकनियन्त्रिते।**
**जीवे निरुद्धा तत्रापि परमात्मनि सा स्थिता।।**
**प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्तितः।** [१]

## प्रकाशप्ररूपणं द्विधा

प्रकाशाभिधः स्वात्ममहेश्वरः द्विधा भाति-पुराणप्रकाशः आरोपितप्रकाशश्चेति। आरोपितप्रकाशभावो देहादिः अपूर्वप्रकाश इत्युच्यते। न चायमसति पुराणप्रकाशे परमार्थप्रमातरि व्यवहर्तुं कथंचित् शक्यते। परमार्थप्रमाता परमेश्वरस्तु न कथंचिदपूर्वप्रकाशः। एतदभिन्ना एव सर्वे प्रमातारो भवन्ति।

**यदुक्तं–**

**स्वातन्त्र्यं निरपेक्षन्तु संविदः केवलं परम्।**
**आपेक्षिकं स्वरादौ तत् स्यादन्यत्रापि मायिके।।** [२]

**अथ विचार्यते-** इदं नीलमिति या प्रमा उदेति तत्र किं करणम्? कश्चातिशयः?

१. तु०, सास्फुरत्ता... हृदयंपरेष्ठिनः:- ई० प्र० का० १/४५,

२. पू.प्र.का., १/४८२

को वा तत्तद्विशेषः? इति। प्रमा नाम वस्तुनः परिच्छेदः। अत एवोच्यते-परिच्छेदो हि पाण्डित्यमिति। यस्मिन्नर्थक्रियायोग्यता भवति, तदेव वस्तुपदवाच्यं भवति। सा चेयमर्थक्रिया मितेन प्रमात्रा सह व्यवहारिणमर्थिनं मितप्रमातारं विना न सम्भाव्यते। अर्थक्रिया तद्योग्यता चेत्युभयं बाह्यतायामेव विश्राम्यति।

अथ केयं बाह्यता? यदि उच्यते पूर्णप्रमातुः व्यतिरिक्ततैव बाह्यता तर्हि प्रकाशरूपात् परप्रमातुः व्यतिरिक्ततारूपाया बाह्यतायाः स्वीकारे तस्याः प्रकाशभिन्नत्वेन अप्रकाशत्वं प्रसज्येत। नह्यप्रकाशस्य अर्थक्रियायोग्यता सम्भवति।

**अत्रोच्यते**, प्रमातरि किल प्रकाशमानता बाह्यता चेत्युभयं संघटते। प्रकाशमानतायाः संघटना पारमार्थिक-प्रमातृ-रूपाभेदेन उपपद्यते। शिव-सदाशिव-ईश्वरतत्त्वमधिशयानाः किल पारमार्थिकप्रमातारो भवन्ति। मायीयप्रमात्रभेदेन तु बाह्यतायाः संघटना उपपद्यते। देहेन्द्रियमनोधीप्राणशून्यप्रमातारो मायीया भवन्ति।

**एतदुक्तं भवति–** प्रमात्रा नीलस्य यत्प्रकाशनं भवति तत् परमार्थप्रमातरि अहमित्येवं परिस्फुरति। सदाशिवभूमौ इदमंशास्फुटतया अहमिदमित्येवं स्फुरति। ईश्वरभूमौ तु इदमंशस्य स्फुटतया अहमिदमित्येवं तद् विस्फुरितं भवति। सोऽयमवभासो परमार्थप्रमातरि ज्ञानशक्तिमात्रात्मा भवति। यथा च दर्पणात् तत्प्रतिबिम्बितनीलादेर्न पृथक्त्वं तथैव ईश्वरपर्यन्तासु भूमिषु अहन्तामपेक्षमाणा इदन्ता पृथक्तां नार्हति। या तु विद्याभूमिः तत्र अहन्तापेक्षया इदन्तायाः पृथक्त्वोल्लासे सत्यपि अपृथक्तयैव परिस्फुरणं भवति। तत्र दृष्टान्तो भवति-चैतन्यापेक्षया देहस्य पृथक्त्वोल्लासे सत्यपि अपृथक्तया विस्फुरणम्। तथा च विद्याभूमिपर्यन्तं प्रमातरि प्रकाशमानता-तादात्म्यमवतिष्ठते। अन्यत्र तु बाह्यतया प्रकाशमानता भवति। उभयत्रापि प्रकाशस्य जीवितं विमर्श एव शब्दनाख्यो नान्यः। बोधः, संवेदनम्, संविदिति वा काममुच्यतां, सर्वमप्येतत् प्रकाशस्वातन्त्र्यवपुरेव। स्वातन्त्र्यं नाम इच्छाप्रसरस्य अविघातः। यदुक्तम्- ''इच्छानभिघात ऐश्वर्यम्'' इति।[१]

## स्वातन्त्र्यमहिमा-

शिवस्य प्रभोः अप्रतिघातिस्वेच्छाविकासविश्रान्तत्वं प्रसिध्यति।[२] स्वातन्त्र्यमहिम्नैव परमेश्वरः स्वयम्प्रकाशते परात्मना वा प्रकाशते इति अवच्छेदनेनास्य प्रकाशमानता युज्यते। परप्रमातरि या स्वयं निर्भासना, या च निर्भासमानस्य

---

१. न्या.वा.ता.टी., पृ० ५१

२. ईश्वरमशेषतापप्रशमनममृतद्रवं सदा वन्दे।
अप्रातिघातिस्वेच्छाविकासविश्रान्तममृतकरमौलिम्।।

नीलादेर्निर्भासना एतदुभयक्रियाशालिनि संविदिति बोध इति संवेदनमिति वा शब्दः सम्प्रवर्तते। तत्र "अवभासते" इति भागमात्रप्रतीतिः, "विमृशामि" इति तु समस्तांशस्फुरणमित्युच्यते।

एवञ्च प्रकाशस्वातन्त्र्ये अवभासो धर्मतया भासते, विमर्शस्तु धर्मितयेति विमर्शनं शब्दनशब्दशब्दितम् उत्कृष्यते। इयांस्तु विशेषोऽत्रावधारणीयः-स्वविषयको यो विमर्शः, "इदं नीलमि" त्येवम्-भिन्नविषयकश्च यो विमर्शः, उभयविधोऽप्यसौ प्रमातर्येव विश्राम्यति। यथा च राज्ञः स्वातन्त्र्यम्- स्वयं युध्यते, परान् वा योधयति तथा संविदः स्वातन्त्र्यं- "स्वयं निर्भासते नीलादिकं निर्भासयतीति वा न नोपपद्यते। स्वातन्त्र्यं चैतत्[1] चितिरिति प्रत्यवमर्श इति आमर्श इति विमर्श इति हृदयमिति शब्दनमिति वाऽभिधीयते। यदुक्तम्-

**चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता।**
**सा स्फुरत्ता तथोन्मेषः स्पन्दोऽहमिति चोच्यते।।** [2]

तामेनां शरण्यां प्रकाशस्वभावभूतां शब्दनात्मिकां विमर्शशक्तिम् अभिनवगुप्तपादपद्येन स्तुवन् शरणीकरवाणि-

**सर्वत्र भावपटलेन विजृम्भमाण-**
**विच्छेदशून्यपरमार्थ - चमत्कृतिर्या।**
**तां पूर्णवृत्त्यहमितिप्रथनस्वभावां**
**स्वात्मस्थितिं स्वरसतः प्रणमामि देवीम्।।** [3]

## श्रीशुद्धाध्वपञ्चकम्

अनुत्तरमूर्तिर्भगवान् महेश्वरः सदा प्रियया स्वरूपभूतया स्वातन्त्र्यभगवत्या देव्या जुष्टो राजते। सेयं देवी पञ्चधा आत्मानं विभजते- चिद्, आनन्दः, एषणा (इच्छा) ज्ञानं क्रिया चेति। जगत्सिसृक्षुर्भगवान् आसु एकैकामाश्रित्य आत्मानमेव यासु पञ्चसु दशासु अवतारयति ताः पञ्च शुद्धाध्वानो भवन्ति। यथा चित्प्राधान्येन शिवः, आनन्दप्राधान्येन शक्तिः, इच्छाप्राधान्येन सदाशिवः, ज्ञानप्राधान्येन ईश्वरः, क्रियाप्राधान्येन तु शुद्धविद्या इत्येवमाख्यां पञ्चसंख्याकामङ्गीकुरुते भगवान् महेश्वरः।

षट्त्रिंशत्-तत्त्वसन्दोहे विश्वोत्तीर्णस्य महेश्वरस्य षट्त्रिंशत्तत्त्व-मयविश्वरूपतापीति सुस्पष्टप्रतिपत्त्यर्थं प्रत्येकतत्त्वस्वरूपं सुतरां विवेचितमाभाति।

---

१. एकार्थो भिन्नश्रुतिः शब्दः पर्यायः। ई.प्र.वि., २/३/१३.

२. पू.प्र.का. १/३७३.

३. अभिनव.स्तुतिः ई.प्र.वि.वि. १/३/७.

अन्यत्रापि आकरग्रन्थेषु षट्त्रिंशत्तत्त्वस्वरूपविषये बहु विवेचितम्। तत्र साधकस्य यत्र कुत्रापि तत्त्वे स्थितिर्भवति सर्वत्रासौ स्वात्ममहेश्वरतामेवात्मनोऽनुभवितुमर्हति श्रीशिवगुरुभिरनुगृहीतश्चेदसौ। तत्र को हेतुरिति चेद्! उच्यते- भगवान् महेश्वरः स्वातन्त्र्यशक्त्या समाश्लिष्टो राजते। चिद्घनसंवित्स्वभावोऽप्येष क्रीडारसोत्सुकः युज्यते सततं सृष्ट्या स्वात्मशक्तिविसृष्टया। यद्यपि भगवान् सर्वथा अक्रमो विलसति अथापि भगवति क्रमो नास्त्येवेति वक्तुं न शक्यते। यथोक्तं महामाहेश्वरैर्महामहोपाध्यायैः श्रीगुरुभिः-

**सर्वथैवाक्रमेऽप्यस्मिन् क्रमो नास्त्येव नो यतः।**
**ऋते क्रमावभासन्तु सिध्येदक्रमतापि नो।।इति।**[१]

सोऽयं महेश्वरो देवः वस्तुतः क्रमरहितोऽपि विश्वसृष्टौ आभासनमात्रसारेण परमार्थिककार्य- कारणभावेन क्रममप्युद्भाव्य वस्तुतोऽनाख्योऽपि अच्छया स्वेच्छया स्वात्मभित्तावेव शिवादितत्त्वाभिख्याम् अवभासयति। परमसौ नोज्झति षट्त्रिंशत्तत्त्वमयकुलस्वरूपपरामर्शनात् स्वचमत्कारविमर्शसारामनुत्तरामानन्द-चिन्मयीमवस्थां प्रियां स्वाम्।

अत एवावधातव्यमेतन्नितरां - यदयमनुत्तरमूर्तिः परमेश्वरः प्रकाशात्मा, स च प्रकाशः विमर्श-स्वभावः। विमर्शश्च न परिमितः किन्तु सृष्टौ विश्वाकारेण, स्थितौ विश्वप्रकाशेन, संहृतौ तु स्वात्मसात्करणात्मना संहरणेन पूर्णाहन्ताचमत्कारात्मकः अकृत्रिमाहम्-विस्फुरणात्मकत्वादपरिमितः परप्रमाता।

सोऽयं विमर्शः विभिन्नाभिर्विलक्षणाभिराख्याभिः प्रथते किलागमेषु। यथा-चित्, चैतन्यम्, स्वरसोदिता, परा वाक्, स्वातन्त्र्यम्, कर्तृत्वम्, स्फुरत्ता, सारः, हृदयम्, स्पन्दः, परमात्मनो मुख्यमैश्वर्यञ्चेति।

तथा च प्रकाशात्मा परमेश्वरः विमर्शात्मिकया पारमेश्वर्या शक्त्या शिवादि-धरणीप्रान्तेन जगदात्मना प्रस्फुरति प्रकाशते च। परमेश्वरस्य विश्वात्मना प्रस्फुरणमेव पारमार्थिकं कर्तृत्वम्, तत्स्फुरणात्मना प्रकाश्यमानं विश्वमपि भावस्वभावात् प्रकाशात्मनो नैवातिरिच्यते। तत एवेयमुक्तिः प्रसरति ''नाशिवं विद्यते क्वचित्'' इति।

एवञ्च अकारादिर्हकारान्तो यो वर्णसमूहः गर्भीकृतसमस्तविश्वस्तन्मयोऽनन्य-मुखप्रेक्षित्वस्वातन्त्र्यविश्रान्तिरूपः पराहन्तापरामर्शस्तत्सारः परमेश्वर एव षट्त्रिंशत्-तत्त्वात्मना प्रथते तद्यथा- शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, बुद्धिः, अहंकारः, मनः,

---

१. विषयानुक्रमणिका (पू०प्र०) श्लोक-३.

श्रोत्रम् , त्वक्, चक्षुः, जिह्वा, घ्राणम्, वाक्, पाणिः, पादः, पायुः, उपस्थः, शब्दः, स्पर्शः, रूपम् , रसः, गन्धः, आकाशः, वायुः, वह्निः, सलिलं, भूमिश्चेति।

साधकैर्गम्यते सिद्धैश्चाद्यते इति षट्त्रिंशत्- तत्त्वमयः सर्वोऽपि प्रपञ्चः अध्वशब्देन परिगीयते। यदुक्तम्-

**गमनेनादनेनापि प्रोच्यतेऽध्वाऽत्र शासने।इति।** [१]

यद्यपि समस्तोऽप्यध्वा परभैरवाभेदवृत्तिमानेवास्ति तथापि पशोः पाशनायासौ कल्पते। तत्र शिवात् प्रभृति विद्यापर्यन्तं यस्तत्त्वनिचयः स ''शुद्धाध्वा'' इति गीयते। तत्र प्रथमः शुद्धोऽध्वा शिवः। स च चित्प्रधानः निजेच्छया जगत्स्रष्टुं प्रथमं यत् स्पन्दते महेश्वरः तच्छीलः। यदुक्तम्

**यदयमनुत्तरमूर्तिर्निजेच्छया निखिलमिदं जगत्स्रष्टुम्।**
**पस्पन्दे स स्पन्दः प्रथमं शिवतत्त्वमुच्यते तज्ज्ञैः।।** [२]

अथ तस्यैव स्वस्वातन्त्र्यमाहात्म्यात् योऽयं परामर्शः अहमिति आनन्दप्रधानः तच्छक्तितत्त्वम्, अप्रतिघातिस्वेच्छाविकासविश्रान्तत्वात्।

सेयं शक्तिः निजनिलीनस्य निखिलस्य जगतः किल बीजभूतमास्ते। यदुक्तम्

**इच्छा सैव स्वच्छा संततसमवायिनी सती शक्तिः।**
**सचराचरस्य जगतो बीजं निखिलस्य निजनिलीनस्य।।** [३]

**नादानुषक्तो बिन्दुः विश्वस्पन्दनहेतुः–**

यदा तु परमेश्वर; शुद्धचिन्मयाधिकरणे एव अहमित्यंश इदमंशमुल्लासयति तदा तस्य तन्मात्रे चित्रकल्पे विश्वे इदमंशस्य स्फुटता नाभाति। सेयम् इच्छाशक्तिप्राधान्येन भाविनः समस्तभावराशेः या विभासयिषा तल्लक्षणं क्रीडामातन्वतो महेश्वरस्य सदाशिवभूमिः। यदुक्तम्

**स्वेच्छाशक्त्युद्गीर्णं जगदात्मतया समाच्छाद्य।**
**निवसन्स एव निखिलानुग्रहनिरतः सदाशिवोऽभिहितः।।** [४]

महामाहेश्वरेण क्षेमराजेनापि प्रोक्तम्-

**सदेवाङ्कुरायमाणमिदं जगत् स्वात्मनाहन्तयाच्छाद्य स्थितं रूपं सदाशितत्त्वम्-इति।**

---

१. पू.प्र.का. २/१५.
२. ष.त्रि.त.स.- का.१.
३. ष.त्रि.त.स.- का.२.
४. ष.त्रि.त.स.- का.३.

अथ ज्ञानशक्तेर्माहात्म्याद् शुद्धसंविन्मात्राधिकरणे विलसतो विश्वस्य क्रमावभासनेन इदमंशस्य यद्यपि स्फुटता परामृश्यते अथापि अहमंशे तस्याभिषेचनेन परमेश्वरः ईश्वरदशामधिश्रयति। यदुक्तम्

**विश्वं पश्चात् पश्यन्निदन्तया निखिलमीश्वरो जातः।** [१]

क्षेमराजेनाप्युक्तम्

**अङ्कुरितं जगदहन्तयावृत्त्य स्थितमीश्वरतत्त्वम् इति।**

श्रीशितिकण्ठाचार्येण नादस्य सदाशिवरूपता बिन्दोस्तु ईश्वररूपता प्रतिपादिता यथा च शब्दरूपः नान्तरीयकः अर्थः प्राणभूत आस्ते तथैव प्रकाशैकवपुषः सदाशिवस्य नादस्वरूपस्य ईश्वरोऽपि बिन्द्वाख्यो नान्तरीयकः विमर्शः। प्रख्योपाख्ययोः, चिदानन्दयोः, प्राणापानयोः, पुम्प्रकृत्योः, शब्दार्थयोः, अग्नीषोमयोरिव च नादबिन्दुभूतयोः अनुषक्तता जागर्ति। युग्मीभावेन नादानुषक्तो बिन्दुः विश्वस्पन्दनस्य हेतुर्जागर्ति। सोऽयमिच्छापूर्वकः चेतनकर्तृकश्च ऐश्वरः सर्ग आगमसिद्धान्तं प्रद्योतयति।

प्ररूढभेदस्य इदन्तांशस्य समधृततुलापुटन्यायेन अहमंशस्फुरणायान्तु शुद्धविद्यातत्त्वमाभासते। अत्र सम्पूर्णं विश्वं स्फुटतरं परामृश्यते इतीयं क्रियाशक्तिप्रधाना शुद्धविद्यापि नमस्या। अत्र इदन्तायाः, अहन्तायाश्च परस्परमभेदात्मिका वृत्तिराभाति। यदुक्तम् -

**सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः।इति।** [२]

**अहन्तेदन्तयोरैक्य - प्रतिपत्तिः शुद्धविद्या।।इति च।**

यदिदं शिवादि-विद्यान्तं तत्त्वपञ्चकं तत् शुद्धाध्वशब्देन गीयते।

एतदनन्तरं मायातत्त्वं प्रथते। तेन स्वस्वरूपेषु भावेषु भेदप्रथनं विधीयते। मायातः कला, कलातश्च तत्त्वविस्तरो भवति। मायाप्रभृति पृथिव्यन्ततत्त्वं भेदप्राधान्याविष्करणेन अशुद्धाध्वेति गीयते। परं शिवादिपञ्चदशासु शुद्धस्वातन्त्र्यमेव तत्तद्वैचित्र्येण प्रस्फुरतीति शुद्धमध्वानं स्वात्ममहेश्वरं समाविशन् कृतार्थतामनुभवामि।

अत्यन्तं स्फीततया आगमिकैराचार्यैः षट्त्रिंशत्तत्त्वानाम् अवधारणां विहितवद्भिः स्वात्ममहेश्वरस्य कर्तुमकर्तुमन्यथाकर्तुं सम्पूर्णं सामर्थ्यं विवेचितमाभाति। भोक्तृभोग्यात्मता चराचरात्मकता चास्यैव स्वात्मनो महेश्वरस्येति ईश्वराद्वयवादः शैवागम-सम्मतो विजयते।

श्रीपरशिवादुपदिश्यमानमात्मज्ञानमनादि, यया श्रुतिपरम्परया सम्प्राप्तमस्माकं

---

१. ष.त.स.- का.४.　　२. ष.त.स.- का./४

संसारिणामनादिभूतमज्ञानमुन्मूल्य सदाशिवत्यस्मान् सा श्रुतिर्द्विविधा वैदिकी तान्त्रिकी च। तत्र वेदो निगमशब्देन तन्त्रन्तु आगमशब्देन शब्द्यते तार्तीया धारा अवैदिकीति। त्रितयी सेयं धारा शास्त्रपुराणकाव्यादिमुखेन निरवच्छिन्नं गतिशीलं संस्कृतवाङ्मयं[१] गरिम्णा संवर्धयति। धर्मार्थकाममोक्षानभिलक्ष्य प्रवृत्ते वाङ्मयेस्मिन् प्राधान्यमध्यात्मविद्याया:। दर्शनशास्त्रमित्यपरं नामधेयमस्या:। नवनवोन्मेषशालिन्यस्मिन् प्राधान्यमद्वैतसिद्धान्तस्य। सोयं नैगमदर्शने ''मायावाद'' इत्यावेद्यते, आगमदर्शने ''ईश्वराद्वय'' नाम्ना प्रथते, अवैदिकदर्शने तु ''शून्याद्वैतम्'' ''विज्ञानाद्वैतम्'' इति च नामधेयं धत्ते।

मायावादे परमं तत्त्वं ब्रह्म, तच्च निर्गुणं निष्क्रियं निर्विमर्शमविकारि विद्यते। तद्विषयिणी तदाश्रिता वा माया मिथ्याभूतं प्रपञ्चं विसृजन्ती चैतन्यमाच्छादयतीव। जगतो ब्रह्मविवर्तरूपता मायापरिणामरूपता च।

ईश्वराद्वयवादे तु परशिव: परमं तत्त्वम्। स च ज्ञानशक्तिमानिव क्रियाशक्तिमानपि स्वतन्त्र: सविमर्शश्चकास्ति। प्रकाशात्मनि शिवे विमर्शमयी किलानन्दशक्ति: स्वभावभूता अभेदेन, भेदाभेदेन भेदेन वा जगत: सर्गस्थिति- ध्वंसमनारतमुल्लासयति चिदानन्दैषणाज्ञानक्रियाशक्तिसुनिर्भरा। स्वातन्त्र्यशक्त्या सततमवियुज्यमानस्य शिवस्य विश्वमयता विश्वोत्तीर्णता च युगपच्चकास्ति। विश्वमयतादशायां स्वातन्त्र्यशक्तेरेवापरं नाम विलसति ''माया''। सा च अभेदेऽपि भेदोद्भावनं विधत्ते।

शून्यपर्यवसितं विज्ञानपर्यवसितं वाऽद्वैतं स्थैर्यविधुरं प्रतिषिद्धसत्त्वं चोद्भाष्यते।

तदेवं द्विविधं अश्रौतम् अद्वैतं श्रौतं चाद्वैतं प्रस्थानभेदमण्डितमधिकारिवैचित्र्यानुप्राणितं विमृश्यते।

भारतीयदर्शनेषु अद्वयवाद एव प्रमुख:। स च चतुर्विधोऽत्र निरूप्यते।

१. विज्ञानाद्वयवाद: २. शून्याद्वयवाद:

३. ब्रह्माद्वयवाद: ४. ईश्वराद्वयवादश्चेति।

समाप्तोऽयम् महामहोपाध्यायानामाचार्य-रामेश्वरझामहाशयानां कृपाभाजनेन डॉ० कमलेशझाशर्मणा विरचित: **सप्रमेयमैतिह्यं प्रत्यभिज्ञाश्रिय:** इतिनामधेय: प्रथमो विमर्श:।



---

१. ध्वनिर्वर्णा:पदं वाक्यमित्येतद् वाङ्मयं मतम् ॥ अ० पु.३३७/१.

## अथ द्वितीयो विमर्शः

# ।। द्वयं सौगतमद्वयम् ।।

**सौगतप्रस्थानानि-**

तत्र बौद्धदर्शने चत्वारि प्रस्थानानि हीनयान-महायानयोः विभाजितानि राजन्ते। तानि सौत्रान्तिक- वैभाषिक-योगाचार-माध्यमिक-संज्ञकानि सन्ति। तत्र **सौत्रान्तिक-वैभाषिक**-प्रस्थानयोः बाह्यार्थ-सत्त्वं स्वीक्रियते। ग्राह्य-ग्राहकमयं जगत्, तत्र ग्राहकं ज्ञानपदवाच्यम्भवति तत्तु प्रत्यक्षम्, ग्राह्यन्तु विषयपदवाच्यम् ज्ञानेन अनुमेयम्भवतीति सौत्रान्तिकप्रस्थाने स्वीक्रियते। वैभाषिकप्रस्थाने तु ग्राहकं ग्राह्यञ्चैतदुभयं प्रत्यक्षमेवेति स्वीक्रियते। योगाचार-प्रस्थाने ज्ञानमेव सदङ्गीक्रियते विषयस्तु ज्ञानव्यतिरेकेण सन्न भवतीति स्वीक्रियते। अथ **माध्यमिकप्रस्थाने** किमपि वस्तु न वस्तुसत् स्वीक्रियते। सर्वशून्यतावादिनि अस्मिन् प्रस्थाने शून्यमेव पारमार्थिकं, तद्-व्यतिरिक्ततया प्रतीयमानं तु सर्वं काल्पनिकमेव। शून्यमिदं चतुष्कोटिविनिर्मुक्तं भवति-

**न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।**
**चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः।।इति।** [१]

पारमार्थिके शून्येऽस्मिन् सर्वं ग्राह्यं संवृत्याख्यया अनादिवासनया समारोपितमाभाति।

योगाचारप्रस्थाने तु विज्ञानमेवैकं सदिति स्वीक्रियते। विज्ञानव्यतिरेकेण कस्यापि ग्राह्यस्यसत्त्वं नाभिप्रेयते।।

**अर्थक्रियाकारित्वं सत्त्वम्-**

एवञ्च चतुर्षु सौगतप्रस्थानेषु या सत्ता स्वीक्रियते सा किंस्वरूपेति परिप्रश्ने जाग्रति अर्थक्रियाकारित्वमेव सत्त्वमिति अविशेषेण बौद्धैः स्वीक्रियते। अथ किमिदम् अर्थक्रियाकारित्वमिति जिज्ञासायामुच्यते अर्थो नाम कार्यम्, क्रिया नाम उत्पत्तिः, कारित्वन्तु उपधायकत्वम्। एवञ्च कार्योत्पादकत्वरूपमर्थक्रियाकारित्वमेव [२] सत्तापदवाच्यम् भवति। इदं च सत्त्वं स्थिरे वस्तुनि यतो न सम्भवति ततः कार्योत्पादकं सर्वमपि क्षणिकमिष्यते। सौत्रान्तिके वैभाषिके च प्रस्थाने सर्वस्यास्तित्वं स्वीक्रियते इति पारमार्थिकम् एकविधमेव सत्त्वमभ्युपगम्यते।

**द्विविधं सत्त्वम्-**

योगाचारप्रस्थाने विज्ञानमात्रास्तित्वं स्वीक्रियते परमार्थतः तत्रैव च संवृत्या कल्पितं नानाविधं ग्राह्यम्। अतोऽत्र द्विविधं सत्त्वमिष्यते-पारमार्थिकं सांवृतं चेति। माध्यमिकप्रस्थाने तु परमार्थभूतस्य शून्यस्य चतुष्कोटिविनिर्मुक्तत्वमिष्यते।

---

१. ज्ञा० सा० स० २८.  २. अर्थक्रियासमर्थं यत् तत् सत्। प्र.वा. १-२.

शून्यव्यतिरेकेण भासमानेषु विषयेषु सांवृतं सत्त्वमभ्युपेयते। स्वभाव:[१] सत्त्वमिति पर्याय:। तथा च शून्यवादे पारमार्थिकं सांवृतं चेति स्वभावद्वयस्य प्रवर्तकाचार्या: श्रीनागार्जुनपादा भवन्ति। एषां डिण्डिमो घोष:- ''बुद्धानां धर्मदेशना लोकसंवृतिसत्यं परमार्थसत्यं चाश्रित्यैव प्रवर्तते'' इति।[२]

## भावानां निःस्वभावता-

माध्यमिकप्रस्थाने तत्त्वं नाम अस्तिनास्तिकोटिद्वयसमुत्तीर्णं निर्विकल्पकं भवति।[३] तदिदं तत्त्वं शून्यता-निःस्वभावता-निर्विकल्पकता-प्रभृतिशब्दैर्व्यपदिश्यते। वस्तुतस्तु शून्यतापि तत्त्वपदव्यपदेश्या न भवति। यथोक्तम्-

**शून्यमिति न वक्तव्यमशून्यमिति वा भवेत्।**
**उभयं नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते।।**[४]

आचार्यो महामतिरप्याह- यदि स्वभावतो भावा भवेयु: प्रत्याख्यायापि हेतुप्रत्ययं भवेयु:, न चैवं भवन्ति, तस्मान्निःस्वभावा:, निःस्वभावत्वाच्छून्या इत्यभिधीयन्ते।'' इति।

## सापेक्षता पदार्थानाम्-

एतन्नये प्रमाण-प्रमेय-वर्गयो: विभक्तानां पदार्थानां सापेक्षता निवारयितुं न शक्यते। न हि पदार्था: स्वतन्त्रा: निरपेक्षा:, स्थिरा: ध्रुवा वा इष्यन्ते। यदुक्तम्-

**अथ ते प्रमाणसिद्ध्या प्रमेयसिद्धि:, प्रमेयसिद्ध्या च।**
**भवति प्रमाणसिद्धिर्नास्त्युभयस्यापि ते सिद्धि: ।।इति।**[५]

प्रतीत्यसमुत्पादनयेन प्रमाणप्रमेयवर्गस्य निःस्वभावताप्रतिपादनमुखेन शून्यता सिध्यति। ज्ञानस्य विषयभूतं ज्ञेयं द्विविधम् - स्वलक्षणम्, सामान्यलक्षणं चेति। यथा प्रत्यक्षे स्वलक्षणतया गृहीतोऽग्नि: प्रथमक्षणे ग्राह्यो भवति, क्षणान्तरेषु स्वलक्षणतया अध्यवसेयो भवति। एवम् अनुमाने सामान्यलक्षणतया गृहीतोऽग्नि: प्रथमक्षणे ग्राह्यो भवति, क्षणान्तरेषु स्वलक्षणतया अध्यवसेयो भवति। तदिदं ग्रहणम्, अध्यवसानञ्च परस्परं प्रतीत्य भवत:। प्रतीत्यसमुत्पन्नत्वादेव द्वयो: शून्यता इष्यते। अत्र नये सर्ववादिभिरङ्गीकृतानां पदार्थानां कार्यकारण-प्रमाणप्रमेय-ज्ञानज्ञेय-जन्ममरण-

---

१. अकृत्रिमो भाव: स्वभाव इति माध्यमिका:। प्र.प.स्व.प.

२. येऽनयोर्न विजानन्ति विभागं सत्ययोर्द्वयो:।
ते तत्त्वं न विजानन्ति गम्भीरं बुद्धशासने।। मा.का. ४९४.

३. स्वभावं परभावं च भावं चाभावमेव च।
ये पश्यन्ति न पश्यन्ति ते तत्त्वं बुद्धशासने।। मा.का. २७०/३६९.

४. मा.का., ४४४.   ५. वि.व्या. ४७.

संसारनिर्वाणादीनां न निरपेक्षता अपितु सापेक्षता इष्यते। तन्नयेन भेददृष्टेरपाकरणेन द्वैतबुद्धेस्तिरस्कारेण च सापेक्षताप्रतिपादनमुखेन अभेदबुद्धिः समाद्रियते। फलतः तत्त्वं प्रकाशते। सेयं शून्यतैव परमार्थभूता मूलकारणं विद्यते। अतश्च बौद्धानामभिप्रायः अभावाद् भावोत्पत्तिरिति। यथा विनष्टाद् बीजाद् अङ्कुरोत्पत्तिर्भवति। तथा चानुमानाकारः सम्पद्यते; निखिलकार्यभावा अभावकारणकाः कार्यत्वाद् बीजध्वंसोत्तरोत्पन्नाङ्कुरादिवदिति।

**त्रेधा विज्ञानसन्ततिः -** योगाचारप्रस्थाने क्षणिकविज्ञानवादः प्रथते। ये किल बाह्यार्थाः ते ज्ञानस्य विज्ञप्तेर्वाऽऽकारभूता भवन्ति। नहि विज्ञानातिरिक्तं ज्ञेयं सदित्यत्र किमपि प्रमाणमुपलभ्यते। एवञ्च नदीजलधारेव अविच्छेदवर्तिनी क्षणिकविज्ञानसन्ततिरेव पारमार्थिकीति योगाचाराणां राद्धान्तः। सा चेयं विज्ञानसन्ततिस्त्रिविधा भवति- प्रवृत्तिविज्ञानं, मनोविज्ञानम्, आलयविज्ञानञ्चेति।

**अष्टावस्थाप्रभेदा विज्ञानस्य-** प्रकारान्तरेण एकस्यैव विज्ञानस्य अष्टौ अवस्थाभेदाः प्रतिपाद्यन्ते। तद्यथा -चक्षुर्विज्ञानादिकानि सप्त प्रवृत्तिविज्ञानानि आलयविज्ञानं चेति। प्राथमिकानाम् सप्तानां प्रवृत्तिविज्ञानानाम् उत्पत्तिः अष्टमाद् आलयविज्ञानाद् भवति।

अत्रेदमवधेयम्-ज्ञेयभूताः पदार्थाः द्विधा विभाज्यन्ते संस्कृतधर्माः, असंस्कृतधर्माश्चेति। यतो द्विधा विभाजितानाम् सर्वेषां धर्माणां कारणभूतं विज्ञानम् कार्येषु अनुस्यूतमिव भवति तत एव विज्ञानस्य अन्वर्था संज्ञा प्रथते - आलयविज्ञानमिति। तदुक्तम्-

**सर्वधर्मा हि आलीना विज्ञानं तेषु तत् तथा।**
**अन्योन्यफलभावेन हेतुभावेन सर्वदा।। इति।**[१]

**संस्कृतपदार्थानां त्रिविधदुःखरूपता-** विज्ञानाद्वयवादस्य सम्यगवबोधार्थं बुद्धभगवता कृतानां देशनानां सारतत्त्वज्ञानं नितरामपेक्ष्यते। तद्यथा - विभिन्नैः कारणकलापैः येषां पदार्थानामुत्पत्तिः भवति ते संस्कृतपदार्था इत्यभिधीयन्ते। ते च क्षणिका भवन्ति। प्रतिक्षणमुत्पद्यमानाः सन्तः विनाशशीला भवन्ति, अतश्चानित्या भवन्ति। प्रतिक्षणमुत्पादविनाशशीलानामेषां स्थिरता, कूटस्थता नित्यता वा दूरापेता भवति। एषु अनित्येषु पदार्थेषु या अनादिकालाद् नित्यत्वबुद्धिः प्रवर्तमाना आस्ते सैव प्राणिनां दुःखित्वे हेतुर्भवति। अथ संस्कृतपदार्थेषु पौनःपुन्येन कृतः अनित्यत्वभावनाभ्यासः अनादिप्रवृत्तामपि नित्यत्वबुद्धिं विनिहन्ति। तदिदं सूत्रितं-सर्वं संस्कृतमनित्यमिति।

निर्वाणमार्गवर्जितानां समेषामेषां संस्कृत- पदार्थानां प्रतिकूलवेदनीयतया दुःखरूपताऽवसीयते। दुःखं चैतत् त्रिविधम्भवति - दुःखदुःखता, परिणामदुःखता, संस्कारदुःखता चेति।

---

१. अ० ध० सू० २१.

प्रथमप्रकारके दुःखे नरकभोगः, बुभुक्षापिपासादिप्रभवा पीडा, ताडन-पीडनादिः, जन्ममृत्युजराव्याध्यादिकं च परिगण्यते।

द्वितीयप्रकारके दुःखे भौतिकानि ऐन्द्रियसुखानि परिगण्यन्ते ये परिणामे दुःखं जनयन्ति।

तृतीयप्रकारके दुःखे संस्कारात्मकं दुःखं परिगणितं भवति। यद्यपि इदं दुःखं प्राणिमात्रमभिव्याप्नोति। तथापि अतिसूक्ष्मस्यास्य दुःखस्य सर्वप्राणिबुद्धि- वेद्यता न भवति। अक्षिपक्ष्मनिविष्टं लोम बाधकं सत् प्रतिकूलवेदनीयतया प्रतीतिगोचरोऽपि भवति तदेव हस्ततलप्रक्षिप्तं मनागपि न दुःखा-करोति। तद्वत् संस्कारदुःखं सामान्यजनदुःखवेदनीयं न भवति परम् आर्यचित्तमेवादो बाधते प्रतीतिगोचरतां च व्रजति। तदिदं सूत्रितम्- सर्वं सास्रवं दुःखमिति।

सर्वे धर्माः पदार्थपदवाच्या अनात्मका भवन्ति। बाह्यसंज्ञकाः आभ्यन्तरं राजमाना वा सर्वे भावाः निःस्वभावा एव भान्ति।

**आत्मनो विषयस्य च द्वैविध्यम् -** आत्मा तावद् द्विविधः-पुद्गलात्मा, धर्मात्मा च। तदीयो विषयोपि द्विविध;-पुद्गलात्मदृष्टिः,धर्मात्मदृष्टिश्चेति। जीवविषयिणी सत्त्वदृष्टिः पुद्गलात्म-दृष्टिरित्युच्यते। पुद्गलान्यपदार्थ-विषयिणी सत्त्वदृष्टिस्तु धर्मात्मदृष्टिरित्युच्यते। द्विप्रकारयोरेनयोर्दृष्ट्योः यदज्ञानं तदेव भवचक्रस्य बीजमित्यभिधीयते। भावनायामेनयोर्दृष्ट्योः विषयनिषेधमुखेन निषेधो विधीयते। तत्र पुद्गलात्मदृष्टिः प्रमाणैरपसार्यते। ततश्च आत्मनः = पुरुषस्य व्यावहारिकं सत्त्वमभ्युपेयते, न तु पारमार्थिकम्। धर्मात्मदृष्टिस्तु धर्मनैरात्म्येन प्रतिषिध्यते। तदिदं सूत्रितम्- सर्वे धर्मा अनात्मका इति।

अथ अज्ञानादिक्लेशकर्मदुःखादिभ्यः प्रकाशमाने आत्यन्तिके मोक्षे निर्वाणपदं प्रयुज्यते। शान्तिमयं निर्वाणमेतत् मुक्ति-विमुक्ति-निरोध-मोक्षादिशब्दैरभिलप्यते। अजरममरमभयमक्षयमलौकिकं शान्तं विमलं च निर्वाणं द्विविधोपायसाध्यं भवति। हीनयानं महायानञ्चेति द्विविधोऽभ्युपायः। प्रत्येकं पुनर्द्विधा। बुद्धत्वप्राप्तिस्तु अध्यात्मविद्यायाः त्रिपिटकस्य, महायानसूत्रादिशास्त्राणाञ्च श्रवणमननद्वारा अनुष्ठीयमानेन योगाभ्यासेन भवति। तदिदं सूत्रितम्- **निर्वाणं शान्तमिति।**

**निर्विकल्पमद्वयविज्ञानं सदपि न स्थिरम् -** विज्ञानमेवाद्वयं सदिति योगाचारप्रस्थाने समाद्रियते। तच्च क्षणिकं, न तु स्थिरम्, मायावाद्यभिप्रेतं स्वातन्त्र्यवाद्यभिप्रेतं वा। तथाहि व्याप्तिरेषा स्मर्यते- यत् सत् तत् क्षणिकम् इति। कामं भिद्यन्तामालयविज्ञानात् प्रवृत्तिविज्ञानानि, किन्तु मूलविज्ञानन्त्वेकमेव स्वीक्रियते। तदपि निर्विकल्पकम्। यदुक्तम्-

**द्वयग्राहविसंयुक्तं लोकोत्तरमनुत्तमम्।**
**निर्विकल्पं मलापेतं ज्ञानं स लभते पुनः।।**[१]

सर्वोपि विकल्पात्मकः प्रपञ्चः, अस्यैव मूलविज्ञानस्य परिणामभूत आस्ते। स्वयमर्था असन्त एव प्रतिभान्ति। अतो विज्ञप्तिमात्रता सिध्यति। यथोक्तम्-

**विज्ञानपरिणामोऽयं विकल्पो यद् विकल्प्यते।**
**तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम्।।**
**सर्वबीजं हि विज्ञानं परिणामस्तथा तथा।**
**यात्यन्योन्यवशाद् येन विकल्पः स स जायते।।**[२]

विज्ञानवादिनां विकल्पात्मकः प्रपञ्चः विज्ञानस्य परिणामो यदास्ते स न प्रधानवादिनामिव तात्त्विकोऽन्यथाभावरूपः। प्रत्युत कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणाम इत्येवं पारिभाषिकः।

मूलभूतमद्वयविज्ञानन्तु निर्विकल्पस्वरूपं शान्तं तत्त्वमित्यभिधीयते। यदुक्तम्-

**अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।**
**निर्विकल्पमनानार्थमेतत् तत्त्वस्य लक्षणम्।।इति।**[३]

**सांवृतिकत्वमर्थानाम्-** योगाचारप्रस्थाने प्रतिभासमानानां विज्ञप्तेः निरन्वयपरिणामभूतानां[४] घटादीनामर्थानां त्रिषु धातुषु विभाजनं विधीयते। ते च कामधातुः, रूपधातुः, अरूपधातुश्चेति। संवृतिसंज्ञया अविद्यया कल्पितत्वात् त्रैधातुकस्य अर्थस्य सांवृतिकत्वम्, आविद्यकत्वम् अज्ञानमूलकत्वं चाभिधीयते। यदुक्तम्-

"समन्ताद् वृतिः संवृतिः, अज्ञानं हि समन्तात् सर्वपदार्थतत्त्वावच्छादनात् संवृतिरित्युच्यते।" इति।[५]

**आत्मख्यातिवादिनो बौद्धाः-** बौद्धाः आत्मख्यातिं स्वीकुर्वते। तथा चानुमानाकारस्तेषाम्- विमतं रजतं बुद्धिरूपं सम्प्रयोगमन्तरेण अपरोक्षत्वाद् बुद्धिवत्। अत्रेयं जिज्ञासा जागर्ति चित्तचैत्या हि किल चतुर्विधान् हेतून् प्रतीत्य उत्पद्यन्ते

१. म.या. सूत्रालं. २८.

२. त्रि० शा०, १७-१८.

३. मध्यमकवृत्ति, प्रक. २४.

४. संसृज्यन्ते न विद्यन्ते स्वतोऽर्थाः पारमार्थिकाः।
रूपमेकमनेकञ्च तेषु बुद्धेरुपप्लवः।। इति। प्र.वा.१/८.

५. आचार्य चन्द्रकीर्तेरियमुक्तिः।

इत्येवमभ्युपगमो बौद्धानां विद्यते। ख्यातिस्थले योऽयं रजताकारोदयः स सहकारिप्रत्ययाद् आलोकादेर्न सम्भवति। स्पष्टतामात्रं प्रत्येव सहकारिप्रत्ययस्य हेतुत्वोपगमात्। यश्च अधिपतिप्रत्ययः चक्षुरादिस्वरूपः तस्यापि रजताकारोदये न हेतुत्वं शक्यतेऽङ्गीकर्तुम्। अधिपति- प्रत्ययस्य विषयनियममात्रं प्रति हेतुत्वोपगमात्। यस्तु समनन्तरप्रत्ययः पूर्वज्ञानस्वरूपः तस्यापि रजताकारोदये हेतुत्वं स्वीकर्तुं न शक्यते। न ह्येष नियमः सजातीयज्ञानानन्तरमेव सजातीयभ्रमोदयो भवतीति। विजातीयघटज्ञानानन्तरमपि विजातीयरजतभ्रमोदयदर्शनात्। अथ च आलम्बनप्रत्ययः = बाह्योऽर्थः तस्य रजताकारोदये हेतुता सम्भवतीत्यपि वक्तुं नैव शक्यते। विज्ञप्तिमात्रतावादिनां बाह्यार्थानङ्गीकारात्। तदेवं न सहकारिप्रत्ययात्, नाधिपतिप्रत्ययात्, न समनन्तरप्रत्ययात् नापि आलम्बनप्रत्ययात् रजताकारोदयो यतः ततश्च विज्ञानाद् रजताकारोदय इति हि रिक्तं वच आभातीति। अत्रोच्यते- संस्कारसामर्थ्याद् विज्ञानस्य रजताकारोदयो भवतीति। परं विचार्यताम्, योयं विज्ञानसंस्कारः स स्थायी वा अस्थायी वेष्यते। 'यदि स्थायी तर्हि सर्वं क्षणिकमिति सिद्धान्तहानिः। यदि अस्थायी तर्हि क्षणविनाशिनः कथं पूर्ववृत्तित्वं कथं वा कारणत्वं सम्भवेदिति। अथ च क्षणिकत्वेपि विज्ञप्तिभिन्नस्य संस्कारस्यापि ज्ञेयत्वोपगमात् विज्ञानमात्रताहानिः प्रसज्येत। एतद्दूषणमपाकर्तुं विज्ञप्तिमात्रतावादिनामेतत् समाधानं जागर्ति; ज्ञानसन्ततिः अनादिसिद्धा विद्यते ततश्च कदाचिदपि पूर्वं यद् रजतज्ञानमुत्पन्नं तदेव संस्कारः न तु ततोतिरिक्तः। एवञ्च नोक्तदूषणं सम्भवति। एतदपि अवधेयं यद् व्रीहिबीजम् विजातीयेन अङ्कुरादिव्यवधानेन कदाचित् कालान्तरे सजातीयं बीजान्तरं यथा उत्पादयति तथैव रजतज्ञानसंस्कारोपि कामं विजातीयैः अनेकज्ञानैः व्यवहितः सन् कदाचित् कालान्तरे सजातीयं रजतज्ञानान्तरमुत्पादयेत् तुल्यन्यायेनेति न काचिदनुपपत्तिः। अथवा पूर्वरजतज्ञानजन्यज्ञानसन्तान एव संस्कारोऽभ्युपेयो, न त्वन्यः। एवञ्च पूर्वबीजजन्यो योऽङ्कुरादिसन्तानः तस्माद् उत्तरबीजोत्पत्तिरनुमन्यताम्। तद्वदेव पूर्वरजतज्ञान-जन्यज्ञानसन्तानरूपात् संस्काराद् उत्तररजतज्ञानोत्पत्तिरनुमन्तव्या। यच्च पूर्वरजतज्ञानं तदुत्पत्तौ ततोपि पूर्वं यद् रजतज्ञानमुत्पन्नमासीत् तस्य हेतुत्वमेष्टव्यम्। एवञ्च अनादिसंस्कारप्रापिता रजतविज्ञप्तिरेव सती। सैव तु भ्रान्त्या बहिर्वदवभासते, न तु बाह्यार्थः सद्भूतः कश्चिदिति।

किन्तु स्थिरात्मवादिनां कृते नैतद् विज्ञप्त्यद्वैतं न वा तत्पोषिकात्मख्यातिः सन्तोषमावहति। तथाहि भ्रमस्थले यदलौकिकं रजतं भासते। तद् लौकिकरजतवदुत्पद्यमानमिष्यते? अनुत्पद्यमानं वा?। उत्पद्यते इति चेद् ? उत्पत्तौ को हेतुः, बाह्यार्थः इति चेद् ? नैवं शक्यते वक्तुम्, तस्य स्वयमेवास्वीकरणात्। अथोच्यते अलौकिकरजतोत्पत्तौ हेतुर्ज्ञानमिति।

अत्रेयं जिज्ञासा भवति हेतुभूतं ज्ञानं विशुद्धम् इष्यते जन्यं वा। नाद्यः विशुद्धज्ञानस्य

मोक्षरूपत्वाभ्युपगमात्। दुष्टकारणजन्यज्ञानात् रजतम् उत्पद्यते इत्येवम् अन्त्यः विकल्पोऽपि न साधुः। तथाहि - रजतं जनकप्रतीत्या गृह्यते अन्यया वा। न प्रथमः। जन्य-जनकयोः क्षणिकत्वाभ्युपगमात् भिन्नकालिकत्वेन अपरोक्षतया रजत-प्रतीतेः अभावप्रसंगात्। नाऽपि द्वितीयः। तथाहि- अन्यप्रतीतिरपि न तावद् अदुष्टकारणजन्या रजतग्राहिणी, अतिप्रसङ्गात्। दुष्टकारणजन्याऽपि यदि रजतजन्या तदा रजतस्यार्थक्रियाकारित्वेन सत्त्वे सति बाह्यार्थोऽङ्गीकार्यः स्यात्। रजताजन्यत्वे तु न रजतं तद्विषयः स्यात्। ज्ञानाकारार्थको हेतुर्विषय इत्यङ्गीकारात्। तस्मादात्मख्यातिपक्षे रजतमेव न प्रतीयेत। अतः ख्यातिविषये आत्मख्यातिः या बौद्धैः स्वीक्रियते सा युक्तिं नाश्लिष्यति समीचीनाम् इति शम्।

अथ विचार्यते येन हेतुना भावानां क्षणिकत्वं प्रसाध्यते तद् युक्तिसङ्गतमस्ति न वेति। सौगतैः अनुमानप्रमाणेन भावानां क्षणिकत्वं प्रमीयते। तथा चाऽनुमानाकारः - "सर्वे भावाः क्षणिकाः अर्थक्रियाकारित्वाद् व्यतिरेके शशविषाणवत्" इति। स्थायिनः अर्थक्रिया तु नोपपद्यते। परं स्थिरात्मवादिनां कृते अयमभ्युपगमः सन्तोषं नाऽऽवहति। क्षणिकवादिनां मते अर्थक्रियायाः दुरुपपादत्वात्। यदि उच्यते स्थायी एव पदार्थः निमित्तसंयोगाद् अन्यथाभूतः सन् अर्थक्रियापूर्वकं कार्यम् उत्पादयितुं समर्थो भवति, न तु क्षणिकः पदार्थः।

तर्हि विचार्यताम्- योयं स्थायी पदार्थः स एकं कार्यम् उत्पादयति उताहो युगपदनेकानि उत क्रमेण वा अनेकानि। प्रथमे द्वितीये च विकल्पे पदार्थस्य स्थायित्वकल्पनं निष्फलं, क्षणिकस्यैव पदार्थस्य सकृत् कार्योत्पादने सामर्थ्यविरहाऽभावात्। नाऽपि तृतीयः विकल्पः स्वारसिकः, समर्थस्य क्षेपायोगात्। एवञ्च भावानाम् एकस्मिन्नेव क्षणे अर्थक्रियाकारित्वलक्षणत्वम् इत्येवं योऽभ्युपगमः सौगतनये स नो युज्यते। तथाहि- का नाम अर्थक्रिया इति प्रश्ने सौगतैः क्षणिकवादिभिः अस्य प्रश्नस्य समाधानं कर्तुं नैव शक्यते। यतो हि अत्र विकल्पद्वयं प्रसरति। संविदां स्वगोचरज्ञानजननम् अर्थक्रिया इति प्रथमो विकल्पः। अथ संविदां क्षणान्तरोत्पादनम् इति द्वितीयो विकल्पः। तत्र प्रथमे विकल्पे पुनः विकल्पत्रयं प्रसरति। तत्र प्रथमः कल्पः स्वसन्ताने तज्जननम्" इति। द्वितीयः कल्पस्तु- "पुरुषान्तरसन्ताने तज्जननमिति"। अथ तृतीयः कल्पः "सर्वज्ञसन्ताने तज्जननमिति"। नाद्यः संविदां स्वप्रकाशत्वेन तदसम्भवात्। अस्तु तर्हि द्वितीयः देवदत्तसंवेदनं हि स्वप्रकाशमपि यज्ञदत्तसंवेदनस्य सविषयत्वाज्जनकं भविष्यतीति। तदसत्। न तावत् प्रत्यक्षज्ञानस्य विषयतया जनकमिति शक्यं वक्तुम्। न हि पुरुषान्तरज्ञानं पुरुषान्तरप्रत्यक्षतया क्वचिद् दृष्टम्। नाप्यनुमानज्ञानस्य विषयतया जनकं सिद्धान्ते प्रत्यक्षज्ञानमेव विषयजन्यमित्यङ्गीकारात्। ननु तर्हि तृतीयोऽस्तु सर्वज्ञस्य हि प्रत्यक्षज्ञानं

सर्वपुरुषगतसंवेदनानि विषयीकुर्वत् तैर्जन्यते। मैवम्। तथा सति सोपप्लवैः संसारिसंवेदनैरीश्वरसंवेदनमप्युपप्लुतं स्यात्।[१]

**सौगतोपदेशसारः -** भगवता बुद्धेन या देशनाः कृताः तासां सारतत्त्वं तदीयेषु चतुर्षु सूत्रेषु अन्तर्भावितं भवति। तानि च सूत्राणि सन्ति-

**१. सर्वं संस्कृतमनित्यम्।**

**२. सर्वं सास्रवं दुःखम्।**

**३. सर्वे धर्मा अनात्मकाः।**

**४. निर्वाणं शान्तमिति।**

तत्र यत् **सर्वं संस्कृतमनित्यमिति** प्रथमं सूत्रम्,तदर्थो विमृश्यते। विविधैः कारणैः सम्भूय ये पदार्थाः उत्पाद्यन्ते ते संस्कृतपदार्था इत्युच्यन्ते। ते यतो हि क्षणिका भवन्ति अर्थात् प्रतिक्षणमुत्पद्यमानाः सन्तः विनाशशीला भवन्ति अतः अनित्या इत्युच्यन्ते। एते पदार्थाः क्षणम् उत्पादिनो भङ्गुराश्च भवन्ति। अतो नैते स्थिरा भवन्ति न नित्या न वा कूटस्थाः। प्राणिनां यद् दुःखं तत्र हेतुरयमेव यदेषामनादिकालाद् अनित्येषु संस्कृतपदार्थेषु प्रवर्तमाना नित्यत्वबुद्धिः। सैषा बुद्धिः प्रतिपक्षभावना-बलेनोन्मूलयितुं शक्या। संस्कृतपदार्थेषु या अनित्यत्वभावना तदभ्यासेन अनादिकालात् प्रवर्तमानापि नित्यत्वबुद्धिर्विलयं प्रयाति। आनुषङ्गिकानि अपि प्रयोजनानि प्रतिपक्षभावनायाः बौद्धदर्शनेषु प्रतिपादितानि सन्ति। तद्यथा-

**१. विषयावलम्बिनी वासना तनुतां याति।**

**२. मरणानुस्मृतिरुदेति पौनःपुन्येन।**

**३. कुशलेषु प्रवृत्तिर्भवति।**

**४. सद्धर्मसाक्षात्कारात्मिका बोधिरुदेति।**

भगवतो बुद्धस्य उपदेशेषु प्रधानतम एष उपदेशो येयं संस्कृतपदार्थेषु अनित्यता नाम। यथोक्तं तेनैव- सर्वेषु प्रतीकेषु गजप्रतीको यथा श्रेष्ठः संज्ञासु सर्वासु चानित्यसंज्ञा तथैवोत्तमा इति।

द्वितीयं सूत्रम्- **सर्वं सास्रवं दुःखमिति।** तस्यायमर्थः- निर्वाणमार्ग-वर्जिताः सर्वे संस्कृताः पदार्थाः दुःखस्वरूपा भवन्ति, प्रतिकूलवेदनीयत्वात्। तथा चोक्तं- या काचिद् वेदना तद्दुःखमिति। दुःखं चैतत् त्रिविधम् - दुःखदुःखता, परिणामदुःखता, संस्कारदुःखता चेति। तत्र प्रथमं नरकेषु शीतोष्णताप्रतीतिः। प्रेतलोकेषु बुभुक्षापिपासादीनामुदयः। प्रबलैर्दुर्बलस्य बाधः, भारोद्वहनम्। ताडनम्, पीडनम्, घातः,

---

१. वि.प्र.सं., पृ. ७९.

बन्धः, जन्म, मृत्युः, जरा, व्याधिः, परवैभवासहनम्, मृत्युनिमित्तदर्शनादिकं च।

द्वितीयं दुःखम्- सुखानन्तरं पुनर्दुःखानुभूतिः। भौतिकानि सुखानि परिणामदुःखानि भवन्ति।

तृतीयं दुःखम् - सकलप्राणिव्याप्यं संस्कारदुःखम्। अतिसूक्ष्ममिदं दुःखं सर्वेषां बुद्धिगोचरो न भवति। यथा हस्ततलक्षिप्तं लोम न दुःखयति नापि प्रतीतिगोचरो भवति, अक्षिपक्ष्मनिविष्टन्तु तदेव लोम बाधते प्रतीतिगोचरश्च भवति। तद्वदिदं दुःखम् आर्यचित्तमेव बाधते तत्रैव च प्रतीतिगोचरो भवति।

तृतीयं सूत्रम् - **सर्वे धर्मा अनात्मका** इति। तस्य चायमर्थः - बाह्य आध्यात्मिको वा सर्वो भावः अनात्मकः = निःस्वभावो भवति। अयमाशयः- आत्मा द्विविधः - पुद्गलात्मा, धर्मात्मा च। तदीयो विषयोपि द्विविधः प्रथमा पुद्गलात्मदृष्टिः, द्वितीया धर्मात्मदृष्टिः। जीवविषये या सत्त्वदृष्टिः सा पुद्गलात्मदृष्टिरित्युच्यते। या तु पुद्गलान्यपदार्थेषु सत्तादृष्टिः सा धर्मात्मदृष्टिरित्युच्यते। द्विप्रकारयोरेनयोर्दृष्ट्योः यदज्ञानम् तदेव भवचक्रस्य बीजमित्याख्यायते। द्वयी अपीयं दृष्टिः विषयनिषेधपुरःसरं भावनायां निषिध्यते।

तत्र पुद्गलात्मदृष्टिः प्रमाणैरपसार्यते। ततश्च आत्मनः = पुरुषस्य व्यावहारिकं सत्त्वमभ्युपेयते न तु पारमार्थिकम्। धर्मात्मदृष्टिस्तु धर्मनैरात्म्येन प्रतिषिध्यते।

चतुर्थं सूत्रम् - **निर्वाणं शान्तमिति।** तत्र अज्ञानादिक्लेशकर्मदुःखादिभ्यो यः आत्यन्तिकः मोक्षः स निर्वाणमित्युच्यते। तच्च शान्तिस्वरूपम्। मुक्तिः, विमुक्तिः, निरोधो मोक्षो निर्वाणमिति पर्यायाः। तदेतद् निर्वाणम् - अजरम् अमरम् अक्षयं विमलं शान्तम् अलौकिकम् अभयपदमिति चाख्यायते।

निर्वाणस्यास्य द्विविध उपायो भवति- १. प्रादेशिकयानापरपर्यायं हीनयानम्, २. अनुत्तरापरपर्यायं महायानञ्च। प्रथमं द्विविधम् - (क) सोपधिशेषनिर्वाणम्, (ख) निरुपधिशेषनिर्वाणञ्चेति।

द्वितीयमपि द्विविधम्। (क) निरुपधिशेषनिर्वाणम्, (ख) सोपधिशेषनिर्वाणं चेति।

अध्यात्मविद्यायाः; त्रिपिटकस्य; महायानसूत्रादिशास्त्राणां च श्रवणमननाभ्यां क्रियमाणो योगाभ्यासः बुद्धत्वं प्रयच्छति।।

**परिणामो निरन्वयः-** सोऽयं विज्ञप्तिपरिणामभूतः प्रपञ्चो यतः क्षणिकः अत एव त्रैधातुकोऽयमर्थो मायोपम इत्यभिधीयते। यदुक्तम्-

**मायोपमान् पश्यति सर्वधातून्**

**मायोपमान् वीक्ष्य स सर्वधर्मान्।** इति।[१]

प्रधानवादिनां परिणामः सान्वय इष्यते विज्ञानवादिनान्तु निरन्वयः। यथोक्तं धर्मकीर्तिना

**संसृज्यन्ते न विद्यन्ते स्वतोऽर्थाः पारमार्थिकाः।**
**रूपमेकमनेकञ्च तेषु बुद्धेरुपप्लवः ।।**[२]

प्रधानवादिनां परिणामः तात्त्विकोऽन्यथाभावरूपो भवति। विज्ञानवादिनान्तु "कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणामः इति लक्षणलक्षितः परिणाम इष्यते।

सत्त्वासत्त्वनिर्वाहाय विज्ञानवादिभिः त्रिविधा सत्ता अङ्गीक्रियते-

१. परिकल्पिता, २. परतन्त्रा, ३. परिनिष्पन्ना चेति।

**अभेदो नीलतद्धियोः -** विज्ञानवादिमते विषयविज्ञानयोरभेदःअभ्युपेयते। तत्र च हेतुरुच्यते सहोपलम्भ- नियमः। विषयविज्ञानयोर्नियामकसम्बन्धाभावाद् अभेद एव तयोर्युज्यते। यदुक्तम्-

**सहोपलम्भनियमादभेदो नीलतद्धियोः।**
**अन्यच्चेत्संविदो नीलं न तद्भासेत संविदि।।**
**भासते चेत् कुतः सर्वं न भासेतैकसंविदि।**
**नियामकं न सम्बन्धं पश्यामो नीलतद्धियोः।।** इति।[३]

संविज्जनकत्वस्य नियामकसम्बन्धत्वं वक्तुं न शक्यते। तथा सति इन्द्रियस्यापि संविज्जनकत्वेन विषयत्वं प्रसज्येत।

ननु अहमिदं जानामि इत्येवं ज्ञातृज्ञेयज्ञानानि विविक्तस्वरूपाणि परस्परं सम्बद्धानि अनुभूयन्ते इति कथमुच्यते विषयविज्ञानयोः न कश्चन नियामकः सम्बन्धो भवितुमर्हतीति।

**तत्रोच्यते-** ज्ञातृज्ञेयज्ञानानां क्षणिकत्वाभ्युपगमात् सम्बन्धो नोपपत्तिमर्हति। स्थायित्वे सत्येव ज्ञातृज्ञेययोः जिज्ञासान्तरोत्पन्नज्ञानक्रियाद्वारा सम्बन्धो युक्तिसमन्वितो भवेत्। क्षणिकयोस्तु तयोः सम्बन्धो भवितुं नार्हति।

ततश्च क्षणिकविज्ञानवादिनामेषोऽभ्युपगम इष्यते- प्रथमं तावद् अहमिति, इदमिति, जानामीति ज्ञानत्रयं तत्तदाकारोपप्लुतं क्रमेणोत्पद्यते।तदनन्तरं प्रथमद्वितीयज्ञानाख्यवासनावासितात् तृतीयज्ञानात् तदनुरूपम् आकारत्रयोपप्लुतं ज्ञानान्तरमुत्पन्नं भवतीति। तदेवं क्षणिकज्ञानमेव विषयाकारतां व्रजति। तथा च ज्ञानं

---

१. म.या.सूत्रा.३०.,  २. प्र.वा. १-८.  ३. उद्धृ.वि.प्र.सं., पृ. ७५.

क्षणिकं तदेव च विषयाकारेण परिणमते अन्यथा ज्ञानज्ञेययोः सम्बन्धानिरूपणात् ज्ञेयं न प्रतीयेत। यथा च नीलज्ञानं,(कर्तृ) नीलं तस्य पीतादिव्यावृत्तिं च बोधयति तथा वर्तमानतया अवभासमानं ज्ञानं स्वस्य भूतभविष्यत्कालद्वयसम्बन्धव्यावृत्तिमपि बोधयेत्। एवञ्च ज्ञानस्य क्षणिकत्वं प्रत्यक्षसिद्धं भवति।[१]

तदेतद् विज्ञानमेव आत्मा इति विज्ञानवादिनां मतम्। क्षणिकविज्ञानव्यतिरिक्तवस्तुनः सद्भावम् अनुभवविरुद्धम् इमे मन्वते यथा ज्वालायां क्षणमवतिष्ठमानायाम् अपि सन्ततविज्ञानोदयसादृश्यात् सैवेयं ज्वाला इति प्रत्यभिज्ञा उपपद्यते। तथैव विज्ञानानामपि। तेषामेव च हेतुफलसन्तानमात्रादेव कर्मज्ञानबन्धमोक्षादिसिद्धिर्भवति।

एष विज्ञानवादः प्रस्थानद्वये विभज्यते :

१. मैत्रेयासङ्गोपज्ञं वसुबन्धुना समुपबृंहितम्।

२. अर्वाचीनं प्रस्थानं दिङ्नागोपज्ञं धर्मकीर्तिना कृतोपबृंहणम्।

अस्मिन् विज्ञानवादे सर्वप्रस्थान-निर्विशेषेण बाह्यार्थस्यासम्भवं सिद्धवत्-कृत्य विज्ञानमेव परमार्थसत् तत्त्वं वासनावशाद् विविधबाह्यपदार्थाकारेण प्रतिभासते इत्येष सिद्धान्तो निर्विवादः।

**विज्ञानाद्वयवादस्य विशेषाः–**

१. विज्ञानं मूलत एकम् अथ च सद् भवति किन्तु क्षणिकम्।

२. विज्ञप्तिः परमार्थसती, प्रपञ्चस्तु व्यावहारिकः सन्।

३. विज्ञप्तेः निरन्वयपरिणामात्मकः प्रपञ्चः।

४. बाह्यार्थस्य विज्ञप्तिं विना न कापि सत्ता भवति।

५. विज्ञप्तावेव ग्राह्यग्राहकभावाभ्युपगमात् स्वप्रकाशत्वमिष्यते।

६. ग्राह्यग्राहकाकारपरिणामनिवृत्तिरेव मोक्षः।

७. प्रपञ्चस्य सांवृतिकी सत्ताभ्युपेया।

८. वासनासहकृतं विज्ञानं जगत् सृजति।

९. भ्रान्तिरेवात्र अविद्या न तु भ्रान्तिहेतुभूता।

१०. विज्ञानस्यैवात्र अर्थाकारः परिणाम इष्यते न चात्र वृत्तिरूपः परिणाम इष्यते।

---

१. वि.प्र.सं., पृ. ७५.

११. परिकल्पिता, परतन्त्रा, परिनिष्पन्ना चेति सत्तात्रैविध्यमिष्यते।

१२. विज्ञप्तिरेव ग्राह्यग्राहकाकारा स्वसदृशाकारान् बाह्यघटादीन् स्वापेक्षया भिन्नान् कल्पयति।

१३. चित्तं मनः विज्ञप्तिः विज्ञानं चेति पर्यायाः सन्ति।

१४. चित्तस्य कृते प्रयुक्ताः शब्दा भवन्ति- तथता, सत्यता, धर्मधातुः, निर्वाणम्, समता, अद्वयम्, शून्यता चेति।

१५. तत्त्वं प्रपञ्चरहितमद्वयं विद्यते।

१६. तत्त्वं ग्राह्यग्राहकादिद्वैतशून्यं विद्यते।

१७. प्रज्ञा-पारमिता ज्ञानमद्वयं सा तथागतः। इति दिङ्नागः।

१८. निर्विकल्पं लोकोत्तरं परमार्थसद् भवति।

१९. अद्वयतत्त्वम् अनभिलाप्यं विद्यते।

२०. **न सन्न चासन्न तथा न चान्यथा न जायते व्येति न चावहीयते। न वर्धते नापि विशुद्ध्यते पुनर्विशुद्ध्यते तत्परमार्थलक्षणम्।।** [१]

२१. क्षणिकं सद्विज्ञानं क्षणिकत्वादभिन्नम् भवति।

२२. षड्विज्ञानातिरिक्तमालयविज्ञानं योगाचारसम्मतम्।

२३. ब्रह्माद्वैतवादे यदात्मेति उच्यते, विज्ञानाद्वयवादे तदेव आलयविज्ञानमित्युच्यते।

२४. नैरात्म्यं नाम प्रभास्वरं बोधिचित्तं निःस्वभावं निरालम्बं सर्वशून्यं निरालयं प्रपञ्चसमतिक्रान्तं तत्त्वम्।

२५. नैरात्म्यशब्देन पञ्चस्कन्धादिविशिष्टपुद्गल एव विज्ञानवादे निराक्रियते।

२६. परिनिष्पन्नस्य निरुक्तिरियं वर्तते-

**अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते।**
**वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते।।इति।** [२]

२७. बाह्यार्थो निराक्रियते। यथोक्तम्-
बाह्यं न विद्यते दृश्यम् इति। [३]

---

१. म० या० सू० शा०, ६/१.

२. माण्डू० का., ४/७५.

३. लं० सू०, १०/४/४२.

२८. **विज्ञानपरिणामोऽयं विकल्पो यद् विकल्प्यते।**
**तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम्।। इति।**[१]

२९. ग्राह्यग्राहकौ विज्ञानप्रतिबिम्बभूतौ भवतः।

३०. आत्मख्यातिपक्षः विज्ञानवादिसम्मतः।

३१. मनसः अनिन्द्रियत्वम्।

३२. स्वलक्षणविषयं प्रत्यक्षम्, सामान्यविषयमनुमानम् इति प्रमाणद्वयमनुमन्यते।

३३. शून्यतातत्त्वं माध्यमिके स्वीक्रियते। विज्ञानवादे तु स्वयंसिद्धविज्ञप्तिमात्रतैव सत्यता-इति स्वीक्रियते।

३४. सम्बन्धनिरासाद्वैतो विज्ञानाद्वयवादसम्मतः अविरोधाद्वैतस्तु शून्यवादसम्मतः।

३५. विज्ञानस्य साकारता अभ्युपेयते।

**दर्शनप्रस्थानेषु प्रमाणसंख्यामतभेदः-** अथ प्रमेयसिद्धिः प्रमाणाद्धि इति नयेन सर्वैरेव दार्शनिकैः प्रमाणमङ्गीक्रियते। तत्त्वस्वरूपसंख्यादिविषये तु एषां विमतिर्भवति। तद्यथा-

१. प्रत्यक्षमेकमेव प्रमाणम्-इति-चार्वाकाः।

२. प्रत्यक्षमनुमानं च द्वे प्रमाणे इति बौद्धा आर्हताश्च।

३. प्रत्यक्षमनुमानमाप्तवचनानि त्रीणि प्रमाणानि इति सांख्याः पातञ्जलाश्च।

४. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति नैयायिकाः।

५. प्रत्यक्षानुमानोपमानशब्दार्थापत्तयश्च पञ्च प्रमाणानीति प्राभाकराः।

६. प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयश्चेति षट् प्रमाणानि इति कौमारिलाः।

७. सम्भवम् ऐतिह्यं चेति अष्टौ प्रमाणानि इति पौराणिकाः।

८. चेष्टासहितं प्रमाणनवकमिति तान्त्रिकाः।

तदेवं बौद्धनये सर्वप्रमेयव्यापि प्रमाणं द्विविधं स्वीक्रियते-

**प्रत्यक्षमनुमानं च प्रमाणं हि द्विलक्षणम्।**
**प्रमेयं तत्र सिद्धं हि न प्रमाणान्तरं भवेत्।।इति।**

**शून्यमेव परमार्थ इति माध्यमिकाः-** शून्यवादिनः शून्यमेव आत्मतत्त्वमिति स्वीकुर्वन्ति सुषुप्तौ विज्ञानस्यापि अदर्शनात्। न च तत्र विज्ञानप्रवाहः स्वीकार्यः, तथा सति विषयावभासप्रसक्तेः। नहि ज्ञानं निर्विषयं कदापि भाति। यदुक्तम्-

---

१. वि० शा०- १७.

जाग्रत्स्वप्नज्ञानानामेव सालम्बनत्वं न सौषुप्तिकज्ञानानामिति चेद् न। विशेषाभावात्। विमतं सालम्बनं प्रत्ययत्वात् संमतवत्। उत्थितस्य सौषुप्तविषयस्मृत्यभावनियमान्न स विषय इति चेत् तर्हि नियमेनास्मर्यमाणत्वादेव तच्च ज्ञानमपि मा भूत्। न च शून्ये विवदितव्यम्। यथा सविकल्पकः स्वविषयविपरीतनिर्विकल्पकजन्यस्तथा सत्प्रत्ययोऽपि स्वविपरीतप्रत्ययजन्य इत्यभ्युपेयत्वात्। एवं चोत्थाने सति जायमानस्याहमस्मीति सत्प्रत्ययस्य समनन्तरपूर्वप्रत्ययलक्षणकारणरहितस्य वास्तवत्वायोगाच्छून्यमेव तत्त्वमिति।

शून्यवादिनः जगदुपादानं शून्यमिति अभ्युपगच्छन्ति। तथा च तन्मते अनुमानाकारः सम्पद्यते- सर्वं कार्यमभावपुरःसरं योग्यत्वे सति अनुपलभ्यमानपूर्वावस्थत्वाद् व्यतिरेके परपरिकल्पितात्मवदिति। किन्तु नैतत् साधु, यतो हि घटस्य पूर्वावस्थाभूता मृत् प्रत्यक्षेणोपलभ्यत एवेति हेतोरसिद्धिदूषणग्रस्तत्वात्।

शून्यवादी ब्रूते-शून्यमेव संवृतिबलाद् रजतादिभ्रममुत्पादयति। यदिदमध्यासलक्षणमुच्यते - परत्र पूर्वदृष्टावभासोऽध्यास इति। नासौ परशब्देन सद्रूपाधिष्ठानमङ्गीकुरुते। केशोण्ड्रक-गन्धर्वनगरादिभ्रमस्य निरधिष्ठानस्य सर्ववादिसम्मतत्वात्। न सर्प इत्याप्तवाक्यस्य बाधकस्य निरवधिकस्यापि सम्भवात्।

किन्तु विचारे सति शून्यवादिनामुक्तिः युक्तिं नानुसरति। अङ्गुल्या अपाङ्गावष्टम्भे सति वेष्टिता नेत्ररश्मय एव केशोण्ड्रकाधिष्ठानभूता भवन्ति। अथ चाकाश एव गन्धर्वनगराधिष्ठानभूतो भवतीति न कस्यापि भ्रमस्य निरधिष्ठानत्वं शक्यते वक्तुम्। यदि प्रतीतिमात्रं निरधिष्ठानमेव भ्रमो भवतीत्युच्यते तदा शून्यज्ञानमपि भ्रमकोटिप्रविष्टं स्यात्। तथात्वे च शून्यासिद्धिः स्यात्। ज्ञानज्ञेय- भ्रमयोरन्योन्याधिष्ठानत्वे अधिष्ठानस्य पूर्व-भावित्वेन अन्योन्याश्रयस्य दुर्वारत्वात्। अथोच्यते बीजाङ्कुरन्यायेन ज्ञानज्ञेयव्यक्तीनां परम्पराभ्युपगमेपि बीजाङ्कुर - प्रवाहानुगतमृद्वद् ज्ञानज्ञेयप्रवाहानुगतस्य स्थायिनः कस्यचिद् अभ्युपगन्तव्यत्वात्। तदनभ्युपगमे वा अदृष्टकल्पनायामन्धपरम्परापत्तेः। अतः साधूक्तम् - न सर्प इत्याप्तवाक्यबाधस्यापि, किं तु रज्जुरित्येतत्पर्यन्तत्वेन सावधिकत्वात्। किमपि च नास्ति वृथा त्वं विभेषीत्येवंरूपबाधेऽपि चेत्युक्तस्य पुरोदेशस्यैवावधित्वात्। जगत्कारणत्वेन परैरुच्यमानं प्रधानं नास्तीत्यादिबाधेऽपि संप्रतिपन्न- जगत्कारणमात्रस्यावधित्वात्। यत्रापि मायाविनिर्मितहस्त्यश्वरथादावन्यत्र वा निरधिष्ठानभ्रमं निरवधिकबाधं च शङ्कसे तत्रापि भ्रमबाधयोः साधकं साक्षिचैतन्यमेवाधिष्ठानमवधिश्च स्यात्। न च तदपि बाध्यम्। तद्बाधस्य साधकाभावात्। अन्यस्य च सर्वस्य जडत्वात्। न च शून्यस्याधिष्ठानत्वम्। अध्यस्यमानेष्वनुगम्य-मानाभावात्। भावे वा भ्रान्तिकाले शून्यं रजतमिति प्रतीयाद् न त्विदं रजतमिति।

इदमिति प्रतीयमानमेव शून्यमिति चेत् तर्हि नाममात्रे विवादः। नापि शून्यस्यावधित्वं सर्वबाधे तदप्रतीतेः। प्रतीतौ वा चैतन्यमेव शून्यनाम्नाऽभिधीयते। इति।[१]

बौद्धनये योऽयं राद्धान्तः नैरात्म्यवादस्य, तस्य मूलम् उपनिषत्सु एव प्राप्यते।

**न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः।इति।**[२]

**अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः।**
**यत्कार्मिणो न प्रवेदयन्ति रागात् तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते।।इति।**[३]

**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।**
**नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति।। इति।**[४]

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतःकृतेन।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।।इति।**[५]

च श्रुत्या हिंसापराणां श्रौतकर्मणां न नित्यपुरुषार्थफलत्वं न वा अगर्हिततत्वमिति साधु प्रतिपाद्यते।

अथ च- **हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः।। इति।**[६]

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः।। इति**[७]

च श्रुत्या निर्गुण-निर्विकल्प-ब्रह्मतत्त्वमुपनिषदि यत् प्रतिपाद्यते तदेव मुख्यं स्रोतः मध्यममार्गस्य नैरात्म्यवादस्य चेति।

एवं च औपनिषद आत्मवादः निर्गुणपारम्येण यद्वद् अद्वैतवेदान्तदर्शने प्रथते तद्वद् नैरात्म्यसंज्ञया अनात्मसंज्ञया वा शून्याद्वैतदर्शने निरूप्यते।

उपक्रमोपसंहारादि - षड्विधतात्पर्यलिङ्गैः मायावादे "**सत्यं ज्ञानमनन्तं ब्रह्म,**

---

१. वि.प्र.सं., पृ. ४१-४२.

२. ना., १२/३.

३. मुण्डको० १/२/९.

४. तदेव, १/२/१०.

५. तदेव, १/२/१२.

६. तदेव, २/२/९.

७. तदेव, ३/१/८.

**सदेव सोम्येदमग्र आसीत्, यतो वा इमानि भूतानि जायन्ते। तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः, तत्त्वमसि, अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्म, अतोऽन्यदार्तम्, नेह नानास्ति किञ्चन-इत्यादि** श्रुतिप्रामाण्येन वेदान्तानाम् अद्वैते ब्रह्मणि तात्पर्यं निर्धार्यते। नित्यं निर्गुणं निर्विकारं स्वप्रकाशं शाश्वतं ब्रह्मैव परमार्थवस्तु विद्यते। तदेव अविद्याशबलं जगत्कारणत्वेनावकल्पते। एवञ्चैतन्मते दृश्यं जगत् प्रति ब्रह्म स्वप्रधानतया विवर्तकारणं भवति, स्वोपाधि-माया प्राधान्येन तु उपादानकारणं भवति। सेयं माया अज्ञानम्, अविद्या, प्रकृतिः, अजेत्येवमादिभिः शब्दैः तत्र तत्र व्यवह्रियते। यथाह भगवती श्रुतिः- **मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् अविद्यायामन्तरे वर्तमानाः। दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता,[१] अविद्यायामन्तरे वर्तमानाः,[२] अविद्यायां बहुधा वर्तमाना[३], एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य,[४] अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते,[५] त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति।[६] तेषामसौ विरजो ब्रह्मलोको न येषु जिह्मनृतं न माया।[७]**

एवञ्चाद्वैतब्रह्मवादे ब्रह्मैवैकं वस्तु आत्मपदवाच्यं परमार्थसद् विद्यते। तच्च ब्रह्म वाङ्मनसातीतं विद्यते।

## नैरात्म्यशब्दार्थः

सौगतमतेऽपि आत्मतत्त्वमनिर्वचनीयमेव स्वीक्रियते। तच्चाव्याकृतं विद्यते न त्वभावरूपम्। आत्मदीपा भवत आत्मशरणाः, नान्यदीपा नान्यशरणाः, आत्मानं गवेषयध्वम्, आत्मा हि आत्मनो नाथः, को हि नाथः परः स्यात्। ब्रह्मभूतेनात्मना इति च तथागतोक्तेः सुस्पष्टं प्रतीयते यद् इन्द्रियग्रामात् परः कश्चित् प्रत्यात्मवेद्योऽनिर्वचनीयस्वरूपः दुर्दर्शः, दुरवबोधः, बुधजनवेदनीयः आत्मा विद्यते इति।

अथ यद्येवं तर्हि निरात्मता अनात्मता वा शब्दः सौगते दर्शने कथम् आद्रियते। एतस्मिन् प्रश्ने जाग्रति एतत्समाधानं भवति।

भगवान् व्यासः ब्रह्मभूतस्य जीवस्य कृते निरात्मवान् इति पदं प्रयुङ्क्ते। तथाहि-

---

१. कठोप० १/२/४.
२. कठोप० १/२/५.
३. मुण्डको० १/२/९.
४. मुण्डको० २/१/१०.
५. ईशा० ९.
६. प्रश्नोप० ६/८.
७. प्रश्नोप० १/१६.

**''अमृताच्चामृतं प्राप्तः शान्तीभूतो निरात्मवान्।**
**ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो निरामयः।।''[१]**

अत्र निरात्मशब्दस्य कः अर्थः अभिप्रेतो भवितुमर्हति। दार्शनिकाः सर्वे अनात्मनि आत्मप्रत्ययं निवार्य आत्मनि आत्मप्रत्ययं द्रढयन्ति। एतदेव आत्मानात्मविवेकशब्देन अभिधीयते। विशेषतः प्रत्यभिज्ञादार्शनिकास्तु स्वात्ममहेश्वर एव षट्त्रिंशत्- तत्त्वात्मक-विश्वस्वरूपः अथ च विश्वोतीर्णोऽपि विद्यते इति अङ्गीकुर्वन्ति। मायाप्रभृतिकञ्चुकषट्कप्रभावात् एष स्वात्मैव महेश्वरः जीवरूपतां बद्धरूपतां संसारितां च गच्छति। पाशितस्यास्य स्वाभाविक्यः पञ्च शक्तयः संकुचिताः भवन्ति। शिवस्य इमाः पञ्च शक्तयः सन्ति- (१) सर्वज्ञत्वं, (२) सर्वकर्तृत्वं, (३) नित्यत्वं, (४) पूर्णत्वम्, (५) व्यापकत्वञ्चेति। सर्वं जानामि, सर्वं करोमि, त्रयोऽपि कालाः नित्ये मयि भासन्ते, सर्वे देशाः मयि एव भासन्ते, अथ च नाऽहं रिक्तः अस्मि अपितु पूर्णोस्मि इत्येवं स्वाभाविकानामपि शक्तीनां मायापरिग्रहवशाद् जीवतां गतस्य मम इव भवतोऽपि क्वचिदेव (न तु सर्वत्र) देहेन्द्रियादौ अहन्ता-प्रतीतिर्जायते। सेयम् अहन्ता इदन्ता-पर्यवसायिनी मितमातृता भवति। शैवागमे क्षुद्राहन्ताशब्देन एषा उच्यते। यः श्रीगुरुशास्त्रकृपया क्षुद्राहन्तां परित्यजति, पूर्णाहन्ताम् अधितिष्ठति स एव दुःखानि संसारितां च परित्यज्य शाश्वतीं नित्यसुखिताम् अवैति पूर्णतां चाश्नुते। औपनिषदो ब्रह्मवादोपि ''प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि - इति महावाक्यैः ''सर्वं खल्विदं ब्रह्मेति अखण्डामात्मदृष्टिमेवातनुते। एतस्मिन्नेवार्थे यथा महाभारतकृता 'निरात्मवान्' इत्येष शब्दः सादरं प्रयुज्यते। न च एतावता केनचित् भगवान् व्यासः अपमान्यते प्रत्युत बहु सम्मान्यते। एवमेव भगवता बुद्धेन नैरात्म्यम्, अनात्मताम्, एतत् पर्यायभूतम् अन्यं वा यं कञ्चन शब्दं प्रयुञ्जता क्षुद्रात्मता मितात्मता वा प्रतिषिध्यते न तु सर्वप्रतीतिसाक्षिभूतः स्मृत्यपोहनशक्तिमान् सर्वव्यवहारसहिष्णुः आत्मा प्रतिषिध्यते।

अतएवोक्तं- भदन्तचन्द्रकीर्तिना-

**''सत्कायदृष्टिप्रभवानशेषान्**
**क्लेशांश्च दोषांश्च धिया विपश्यन्।**
**आत्मानमस्याविषयं च बुद्ध्वा**
**योगी करोत्यात्मनिषेधमेव।।''[२]**

---

१. तु. म०भा० शा०प० १९९/२३.

२. म० अव० ६/१२०.

**द्विविधं नैरात्म्यम् -** तदिदं नैरात्म्यं द्विविधं भवति- (१) पुद्गलनैरात्म्यम्, (२) धर्मनैरात्म्यञ्च। तत्र पुद्गलनैरात्म्यं नाम सत्कायदृष्टिनिवर्तनम्। धर्मनैरात्म्यन्तु धर्माणां निःस्वभावत्वपरमेव।

**अस्तीति शाश्वतग्राहो नास्तीत्युच्छेददर्शनम्।**
**तस्मादस्तित्वनास्तित्वे नाश्रीयेत विचक्षणः।।**[1]

इति नयेन मध्यममार्गे कस्यापि लोकसिद्धस्य शास्त्रसिद्धस्य वा पदार्थस्य वर्णनम् अस्तित्वमुखेन नास्तित्वमुखेन वा कर्तुं न शक्यते। अभिनिवेशत्याग एवात्र परमार्थः। अत एव विस्पष्टम् आत्मनोस्तित्वं नास्तित्वं वा भगवता बुद्धेन न देशितम्।

शून्यपदाभिधेयमद्वैतं तत्त्वं चतुष्कोटिविनिर्मुक्तं भाति।

**सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।**
**न क्वचित् कस्यचित् कश्चिद् धर्मो बुद्धेन देशितः।।**[2]

**अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः।**
**भावानां ते न पश्यन्ति द्रष्टव्योपशमं शिवम्।।**[3]

**आत्मा नास्ति न चानात्मा नात्माऽनात्मा न कश्चन।**
**निःस्वभावा हि ते भावा निर्वाणमिव देशिताः।।**[4]

**आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम्।**
**बुद्धैर्नात्मा न चाऽनात्मा कश्चिदित्यपि देशितम्।।**[5]

**निवृत्तमभिधालभ्यं निवृत्ते चित्तगोचरे।**
**अनुत्पन्ना निरुद्धा हि निर्वाणमिव धर्मता।।**[6]

**अद्वितीयं शिवद्वारं कुदृष्टीनां भयङ्करम्।**
**विषयः सर्वबुद्धानामिति नैरात्म्यमुच्यते।।**[7]

---

१. मा.का., १५/८.

२. मा.का., २५/२४.

३. मा.का., ५/८.

४. शू० स० २.

५. मा.का., १८/६.

६. मा.का., १८/७.

७. ना., १२/३.

**संस्कारमात्रं जगदेव बुध्वा निरात्मकं दुःखविरूढ़िमात्रम्।**
**विहाय यानर्थमयात्मदृष्टिर्महात्मदृष्टिं श्रयते महार्थाम्।।**[१]

शून्यवादनये विज्ञप्तिर्यदालम्बनं भवति तत्सर्वं प्रतीत्यसमुत्पन्नत्वात् सर्वथा शून्यम्। सर्वशून्यतायामस्य समादरो दृश्यते। अतश्च व्यपदिश्यमानः आत्मा, व्यपदिश्यमाना आत्मनो धर्मा वा वस्तुतः शून्या एव। निःस्वभावदेशनाप्रसङ्गे क्रमपाटवमवलोक्यताम्-

**वारणं प्रागपुण्यस्य मध्ये वारणमात्मनः।**
**सर्वस्य वारणं पश्चाद् यो जानीते स बुद्धिमान्।।**[२]

**इदमत्रावधेयम्–** लोकव्यवहार-सिद्धानां पदार्थानां कार्यकारणवर्गयोः समावेशो भवति। यथा रामः पिता विद्यते लवस्तु पुत्रः। अतश्च लोके रामलवयोः कार्यकारणभावो भवति। शास्त्रं त्वत्र साधु विवेचयति। तद् यथा - यो हि रामः स काममुच्यतां पिता किन्तु सति विमर्शे रामः ध्रुवं न विद्यते पिता। स तु लवस्य पिता चेद्, दशरथस्य पुत्रः अस्ति। यश्च लवः रामस्य पुत्रः अस्ति सोपि कस्यचित् पिता विद्यते। एवं च यथा पितृव्यवहारः पुत्रव्यवहारनिरपेक्षो न भवति तथैव पुत्रव्यवहारोपि पितृव्यवहारनिरपेक्षो न भवति। इदमेकमुदाहरणम्। किमपि कारणतयाभ्युपगम्यमानं वस्तु कार्यतयाभ्युपगम्यमानाद् वस्तुनः स्वतन्त्रं निरपेक्षं पृथग् वस्तु न भवति। एवं किमपि कार्यतयाभ्युपगम्यमानं वस्तु कारणतयाभ्युपगम्यमानाद् वस्तुनः स्वतन्त्रं निरपेक्षं पृथग् वस्तु न भवतीति निश्चप्रचम्। ततश्च इदं प्रतिपादितं भवति यत् किमपि वस्तु स्वभावतः कारणं न भवति अथवा किमपि वस्तु स्वभावतः कार्यं न भवति। तथा चायं निष्कर्षः- स्वभावतः स्थितिर्या व्यवहारकाले कारणस्य कार्यस्य च स्वतन्त्रतया स्वीक्रियते सैव लोकव्यवहारतः "अशून्यता" इत्युच्यते। तत्त्वविवेचनतत्परैः इयम् अशून्यता न स्वभावतो वर्तते इत्येतद् वक्तुमेव अशून्यता- विपरीतार्थकः शून्यताशब्दः प्रयुज्यते।

यथाह आचार्यः- यदि स्वभावतो भावा भवेयुः, प्रत्याख्यायापि हेतुप्रत्ययं भवेयुः, न चैवं भवन्ति तस्मान्निःस्वभावाः, निःस्वभावत्वाच्छून्या इत्यभिधीयन्ते। इति। तदेवं यद् यत् सापेक्षं तस्य कोपि ध्रुवः स्वभावो नास्ति। एतदेवोच्यते तस्य निःस्वभावता सैव शास्त्रे "शून्यता"-शब्देनाभिधीयते। इत्येषा कथा लोके सिद्धानां पदार्थानां विषये। अपरे पदार्थाः शास्त्रे प्रसिद्धाः सन्ति येषां समावेशः प्रमाणप्रमेयवर्गयोः अभिप्रेयते। विचारे क्रियमाणे प्रमाणप्रमेयवर्गयोर्निपतितानां पदार्थानामपि निरपेक्षभावो

१. च०श० १२/१३.

२. म०या०सू०शा० १४/२७.

नैव सिध्यति। यथा प्रमाणं साधनापरपर्यायभूतं स्वतः सिद्धं भवितुं नार्हति। साध्यं वस्तु येन साध्यते तत्किल साधनमित्युच्यते। तदेवं परमुखापेक्षं साधनं स्वतन्त्रं निरपेक्षं वा भवितुं नार्हति। साध्यं तु साधनेन विना नैव सिध्यतीति तदपि न स्वतन्त्रं निरपेक्षं वा भवितुमर्हति। यदुच्यते- "**प्रमेयसिद्धिः प्रमाणाद्धि**" इति।[१]

किञ्च यत्साधनसंज्ञां लभते तदेव साध्यसंज्ञामपि लभते। नेत्राभ्यां परस्परं पिबतोः प्रिययोः नेत्रेन्द्रिये ये भवतः तयोः युगपदेव साधनत्वं साध्यत्वं वा केनापि न शक्यते निषेद्धुम्। यथाह तत्र भवान् वात्स्यायनः- "**प्रत्यक्षादीनि प्रमाणानि उपलब्धिसाधनत्वात्, प्रमेयं चोपलब्धिविषयत्वात्। एवं बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्, उपलब्धिविषयत्वात् प्रमेयम्**" इति।[२]

**सापेक्षःकिल प्रमाणप्रमेयभावः**— एतदुक्तम्भवति- स्वतो भिन्नेन प्रमाणेन सिद्धिं प्राप्नुवत् प्रमेयं यथा सापेक्षम्भवति तथा स्वतोभिन्नेन प्रमेयेण स्वं नाम (प्रमाणम्) लभमानं प्रमाणमपि सापेक्षमेव भवति। ततश्च यथाव्यवहारं स्वीकृतस्य प्रमाणस्य प्रमेयस्य च या निःस्वभावता सैव "शून्यता" इत्याख्यायते।

शून्यवादी पदार्थानां स्वातन्त्र्ये, निरपेक्षत्वे, स्थिरत्वे ध्रुवत्वे वा आग्रहविरही भवति। तदित्थं लोके व्यवहारेण प्रायेण ये पदार्थाः सस्वभावाः प्रतीयन्ते, तेषां निःस्वभावताप्रतिपादनं शून्यवादे युक्त्या विधीयते। यथोक्तम्-

(क) "**ये हि प्रतीत्यसमुत्पन्ना भावास्ते न सस्वभावा भवन्ति। यदि हि स्वभावतो भावा भवेयुः, प्रत्याख्यायापि हेतुप्रत्ययं भवेयुरिति।**"[३] इति।

(ख) "**न वयं व्यवहारसत्यं प्रत्याख्याय व्यवहारसत्यमनभ्युपगम्य कथयामः शून्याः सर्वभावा**" इति।[४]

(ग) "**अथ ते प्रमाणसिद्ध्या प्रमेयसिद्धिः, प्रमेयसिद्ध्या च।
भवति प्रमाणसिद्धिः, नास्त्युभयस्यापि ते सिद्धिः।।**"[५] इति।

सर्वेष्वपि शास्त्रेषु अभ्युपगतानां तत्त्वानां विवेचनाय प्रवृत्तः शून्यताभिधानो नयः सापेक्षवादं मध्यमं मार्गं प्रथयति। अस्मिन्नये एतदभ्युपगम्यते यत् - लोकसिद्धानां

---

१. च० श० १२/१४.

२. सां० का० ३.

३. न्या.सू.वा. भा० २/१/१६.

४. वि० व्या० २२.

५. वि० व्या० २८.

शास्त्रसिद्धानां च पदार्थसार्थानां यद् वर्गीकरणं भवति कार्यकारणतया, प्रमाणप्रमेयतया, ज्ञानज्ञेयतया, जन्ममरणतया, संसार-निर्वाणतया वा तन्निरपेक्षं नास्ति किन्तु सापेक्षमेव विलसतीति। एतावता लोकस्य शास्त्रस्य च भेददृष्टिः दूरीक्रियते अथ च सापेक्षताप्रतिपादनमुखेन अभेदबुद्धिः दृढ़ीक्रियते। उत्सार्यमाणायां भेदबुद्धौ सुप्रतिष्ठायां चाभेदबुद्धौ तत्त्वप्रकाशनं जायते।

मोक्षमात्रे तृष्णावतामाग्रहिणां तत्त्वचिन्तकानामपि लोकसुखं मितम्, मोक्षे सुखममितं कल्पयतां न वीतरागित्वमनुमन्यते शून्यवादः। यथोक्तम्-

**शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः।**
**येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे।।इति।**[१]

**निर्वास्याप्यनुपादानो निर्वाणं मे भविष्यति।**
**इति येषां ग्रहस्तेषाम् उपादानमहाग्रहः।।इति च।**[२]

सर्वमिदमात्मशून्यमिति शून्यवादिनां माध्यमिकबौद्धानां पर्यन्ततस्तु समेषां सौगतानां राद्धान्तः।

## वैभाषिकमतम्-

तत्र यदिदं सर्वं वस्तु तद् द्विधा विभज्यते बाह्यम् अबाह्यं चेति। बाह्यन्तावद् भूतभौतिकम्, अबाह्यन्तु चित्तचैत्तमित्यभिधीयते। उभयमपीदं बाह्याबाह्यम् तत्त्वम्, तदीयं ज्ञानमपि तात्त्विकं विद्यते। सर्वमपीदं भूतभौतिकं चित्तचैत्तं च द्विधा प्रकारान्तरेणापि विभज्यते। ज्ञानरूपं, ज्ञेयरूपं चेति। तत्र बाह्यं ज्ञेयं परमाणुपुञ्जमात्रं विद्यते। अत एवैषां संघातवादसिद्धान्त इत्याख्यायते। नात्र अवयवी अतिरिक्तः न्यायराद्धान्त इव स्वीक्रियते। भूतभौतिकचित्तचैत्तधर्मास्तु बहवो भवन्ति, परं तेषां पञ्च राशयो भवन्ति ये पञ्च स्कन्धा इत्युच्यन्ते। तत्र सर्वं भूतभौतिकं रूपस्कन्ध इत्युच्यते। चित्तं विज्ञानस्कन्ध इत्याख्यायते। चैत्तेषु सुखदुःखोपेक्षात्मका वेदना भवन्ति तत्समूहो वेदनास्कन्ध इत्यभिधीयते। विषयगत - दृश्यादृश्यलक्षणा ये बोधास्तत्समूहः संज्ञास्कन्ध इत्यभिधीयते। याश्च सर्वाश्चित्तवृत्तयः जातिजरास्थित्यनित्यतादयश्च धर्मविशेषाः यद्यपि रूपचित्तचैत्तधर्मेषु कृताधिकारा भवन्ति तथापि तेभ्यः पृथगुच्यमानाः संस्कारस्कन्धशब्देनाख्यायन्ते। सर्वेऽप्येते धर्मा निरन्तरं प्रतीत्यसमुत्पादनियमेन प्रतिक्षणं परिवर्तनशीलाः सद्रूपाश्च भवन्ति। ततश्चायं व्यवहारोऽनुगतो भवति- अतीतं रूपम्। अनागतं रूपम्, प्रत्युत्पन्नं रूपम् इति अतीतं चित्तम्, अनागतं चित्तम्, प्रत्युत्पन्नं चित्तमिति वा। समेषामेषां धर्माणां भूतभौतिकचित्तचैत्तानाम् ज्ञानं प्रत्यक्षेण भवतीति। ज्ञानज्ञेययोर्विभाजिताः सर्वेऽमी धर्माः आत्मशून्या भवन्तीति वैभाषिकाः बाह्यार्थप्रत्यक्षवादिनोऽङ्गीकुर्वते। व्याकुर्वते चैतत्सर्वं वितत्य आचार्यवसुबन्धवः अभिधर्मकोशे।

---

१. वि० व्या० ४७.

२. उद्धृत. सा०सु० २३ वर्ष, २ अङ्कः,वै.सं. २०२५.

**सौत्रान्तिकमतम्–** ये तु अर्थविनिश्चयादिसूत्रप्रमाणकाः सौत्रान्तिकाः तन्मतेपि ज्ञानज्ञेयात्मनां सर्वेषां पदार्थानां प्रतीत्यसमुत्पन्नत्वं क्षणिकत्वं, व्यवहारयोग्यत्वञ्च स्वीक्रियते। बाह्यार्थाः परमाणुपुञ्जरूपाः, चित्तचैत्ताः पदार्थाः प्रत्यक्षाः, एतन्नये स्वीक्रियन्ते। बाह्यविषयहेतुकाः साकारज्ञानस्य परिणामाः प्रत्यक्षाः बाह्यविषयाः प्रत्यक्षप्रतिभासजनकत्वेन अनुमेया एवेति अभ्युपगम्यते।

वैभाषिकैः सौत्रान्तिकैश्च बाह्यार्थाः ज्ञानाकारात् पृथक् स्वीक्रियन्ते इति सर्वास्तित्ववादिनौ उभावपीमौ वैभाषिक-सौत्रान्तिकौ उच्येते।

**योगाचारमतम्-** योगाचारास्तु विज्ञप्तिमात्रतावादिनो भवन्ति। एकमेव तत्त्वं विज्ञप्तिः, तस्या एव तु पर्यायशब्दा भवन्ति चित्तं, ज्ञानम्, विज्ञानम्, मन इति वा। विज्ञप्तेरेव ज्ञानं ज्ञेयं चेति अवस्थाद्वयी भवति। ज्ञानं ग्राहकमुच्यते ज्ञेयन्तु ग्राह्यम्। एतन्मते ज्ञानात् पृथग् बाह्यं न स्वीक्रियते तदिदं विज्ञानाद्वैतं प्रथते योगाचारबौद्धानाम्।

**माध्यमिकमतम्–** शून्यवादिनस्तु शून्याद्वैतं सिद्धान्तयन्ति। भारतीयदर्शनानां चरमो विकासः शून्यवादे- इति हि एतेषामभिमतम्। कथमिति चेदुच्यते- भूतभौतिकचित्तचैत्तसंज्ञक- वस्तूनां विभागद्वयम् भवति- विज्ञप्तिः आलम्बनञ्चेति। लोके द्वयोरनयोः पृथक् स्थितिरवगाह्यते। वैभाषिक-सौत्रान्तिकप्रस्थानयोरपि उभयं पृथक्स्थिति कामं स्वीक्रियते परम् आत्मशून्यमुभयमपि विज्ञप्त्यालम्बनमिति प्रस्थानद्वयेऽभ्युपगम्यते। योगाचारप्रस्थाने निरालम्बना विज्ञप्तिरेवैकं तत्त्वम् स्वीक्रियते। विज्ञप्तिरप्येषा आत्मशून्येति च। शून्यवादिनये आलम्बनमिव विज्ञप्तिरपि यत् प्रतीत्य समुत्पद्यते ततः सर्वथा शून्यमेव विजृम्भते। यथा च व्यवहारे आत्मस्वीकारः, तथा सर्वधर्मस्वीकारोपि परं तत्त्वचर्चायां तु व्यवहारे अप्रत्याख्यातानामपि आत्मतद्धर्माणां प्रत्याख्यानं विधाय सर्वमेव शून्यमिति शून्याद्वैतं प्रतिष्ठापितं भवति।

समाप्तोऽयं महामहोपाध्यायानामाचार्य- रामेश्वरझामहाशयानां कृपाभाजनेन डॉ० कमलेशझाशर्मणा विरचितो **''द्वयं सौगतमद्वयम्''** इति नामधेयो द्वितीयो विमर्शः।



श्रीदुर्गा-देव्यै नमो नमः

।।अथ तृतीयो विमर्शः।।

# अद्वयद्वयसद्वपुः शिवः

**स्वेच्छावभासिताशेष - लोकयात्रात्मनेनमः।**
**शिवाय शश्वदच्छन्न - स्वच्छस्वच्छन्दवृत्तये।।**

**नृत्यद्भिर्भवभूमिकाभिरनिशं रङ्गेऽत्र भूतैः सह**
**कालोऽयंदुरतिक्रमोस्ति सकलैःसिद्धैःसुरैर्योगिभिः।**
**यःकालं कलनामयं स्वजनितं जानाति कालाधिपः**
**कालातीतवपुर्विभुर्विजयते रामेश्वरो योगिराट्।।**

**वेदतन्त्र - सामाम्नातमद्वयद्वयमद्भुतम्।**
**सत्स्वरूपं विजयते विमर्शस्तत्र भेदकृत्।।**

**निर्विमर्शं परं ब्रह्म जगन्मिथ्येति वादिनाम्।**
**विमर्शप्राणितो भाति प्रकाशो विश्ववादिनाम्।।**

अथ पूर्वं मायावाद: निविश्यते यत्र अनादिभूतापि माया मिथ्याभूतं जगत् सृजन्ती चैतन्यमाच्छादयतीव। अनन्तरं स्वातन्त्र्यवादमूलक: ईश्वराद्वयवाद: सन्निविश्यते यत्र भगवत: शिवस्य या तदभिन्ना आनन्दशक्ति: तदेव स्वातन्त्र्यमित्युच्यते। शिव: अनेनैव स्वातन्त्र्येण विश्वमयो भवति। अथ च एनेनैव स्वातन्त्र्येण विश्वोत्तीर्णो भवति। ततश्च विश्वमयतादशायां स्वातन्त्र्यस्यैव अपरं नामधेयं माया या शिवस्वभावभूता न तु तुच्छाऽनिर्वचनीया वा। अनयोर्वादयो: दर्शनेषु नितरां प्रतिष्ठितयो: ते ते विशेषा: श्रीगुरुशास्त्रकृपया अत्र प्रतिबिम्बिता: सन्ति। धीधनै: श्रद्धालुभि: प्रस्थानभेदमाकलयद्भि: ते ते विशेषाश्चीयन्ताम् आत्मनो मुख्यमैश्वर्यञ्च प्रत्यभिज्ञायताम्।

## श्रुतिर्द्वेधा–

वैदिकी तान्त्रिकी चेति द्वेधा विस्फुरन्ती चिन्मयी श्रुतिरनादिपरमेश्वरात् प्रभवन्ती[1] कस्य वा सुकृतिनो न नमस्या सदा सर्वार्थविधानकर्त्री सुशिवा कल्याणी माता।

---

१. संस्कृत वाङ्मय का बृहद् इतिहास : कुलार्णवत० -२/१४०
हारीतस्मृति:-श्रुतिर्द्विविधा वैदिकी तान्त्रिकी च । उद्धृ० -म० स्मृ०-२१९
पुरोवाक् पृ० - १६, सम्पादकीयम् - २४.

सामान्यरूपेण निगमशब्दो वेदवस्तुनि[१] प्रयुज्यते, आगमशब्दस्तु[२] तन्त्रवस्तुनि। निगमस्येव आगमस्यापि साहित्यं प्राधान्येन परमपुरुषार्थप्रतिपादनाय[३] प्रवृत्तं परिलक्ष्यते। अनाद्यज्ञानमूलाद् बन्धाद् जीवस्य मुक्तिस्तु ज्ञानादेवेति निगमागमानां पार्यन्तिकः सिद्धान्तो नाविदिततमः प्रेक्षकाणाम्।

**वेदशब्दव्युत्पत्तिः–**

**वेत्ति =** जानाति अनेन धर्मार्थकाममोक्षोपायान् इति वेदः इत्येवं ज्ञानार्थकाद् विद्-धातोः अदादिपठिताद् लुग्विकरणात् करणव्युत्पत्तिर्वेदशब्दः।

**वेदनम् =** सत्ता = अस्तित्वम्, वेदः इत्येवं सत्तार्थकाद् विद्धातोः दिवादिपठिताद् श्यन्विकरणाद् भावव्युत्पत्तिर्वेदशब्दः।

**विन्दति =** लभते अनेन धर्मादिचतुर्वर्गानिति वेदः इत्येवं लाभार्थकाद् विद्धातोस्तुदादिपठितात् करणव्युत्पत्तिर्वेदशब्दः।

**विन्ते =** विचारयति अनेन जगतः सृष्ट्यादिप्रक्रियां जीवब्रह्मणोरैक्यावबोध-प्रयोजनिकामिति वेदः इत्येवं विचारणार्थकाद् विद्धातोः रुधादिपठितात् करणव्युत्पत्ति-र्वेदशब्दः।

सत्ता-ज्ञान-लाभ-विचारार्थकेभ्यो विद्धातुभ्यो निष्पन्नस्य वेदशब्दराशेरपि वेदपरमतात्पर्यभूतस्य ब्रह्मण इव सच्चिदानन्दमयता वरीवर्ति । अत एव ओमिति एतदक्षरम्,[४] ओमिति ब्रह्म,[५] एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम,[६] इत्याद्याः श्रुतयः 'गिरामस्म्येकमक्षरम्'[७] इत्याद्याः स्मृतयश्च स्वरसतः सङ्गच्छन्ते।

**सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।**
**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।**[८]

---

१. द्रष्टव्यम् , श्रीम. भा. म. पु. - १/१/३ निगमकल्पतरोर्गलितं फलम्।
२. संस्कृत साहित्य का बृहद् इतिहास, तन्त्रागम खण्ड-उद्धृत-पृ०सं०-२पुरोवाक्-
(क) आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः।
-त० वै० -आचार्यवाचस्पतिमिश्रः।
(ख) श्रीत०आ० - ३५/१-२ (द्रष्टव्यम्)।
३. वे० प० पृ०सं०-१.
'धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः'।
४. छान्दो० - १/१/१.
५. तैत्तिरी० - १/८.
६. कठो० - १/२/१६.
७. श्रीम० भ० गी० - १०/२५.
८. म० स्मृ० - १/२१.

वेदयते = आख्याति अनेन नामकर्मादिकमिति वेदः इत्येवम् आख्यानार्थकाद् विद्-धातोरपि चुरादिपठितात् करणव्युत्पत्तिर्वेदशब्दः निष्पद्यते।

## अपौरुषेयो वेदः–

वेदः शिवः शिवो वेदः, वेदो नारायणः साक्षात् इत्यादिवचनान्यपि वेदब्रह्मणोः नित्यशब्दार्थयोः तादात्म्यं प्रतिपादयन्ति।

ईश्वराः स्वयमुद्भूताः...........तस्मान्महर्षयः इति वायुपुराणवचनात्[१] साक्षात्कृतधर्मभिर्महर्षिभिः कल्पादौ पूर्वकल्पत एव विद्यमानस्य वेदस्य साक्षात्कारो विहित इति निश्चीयते। भृगुवसिष्ठादीनां काले वेदशब्दराशौ शाखाप्रशाखाभेदो नोदेति स्म। तैरवरकालिकेभ्यः असाक्षात्कृतधर्मभ्यो मुनिभ्यो मन्त्रोपदेशः कृतः। अथ गच्छता कालेन ह्रसितमेधेभ्यः शिष्येभ्यः तदुपदेष्टुं शाखाप्रभेदो विहितस्तेन वेदव्यास इति संज्ञा समजायत। यथाह तत्र भवान् यास्कः- 'साक्षात्कृतधर्माण ऋषयो बभूवुः इमं ग्रन्थं समाम्नासिषुः वेदं च वेदाङ्गानि च' इति।[२]

भगवान् व्यासोऽप्याह—

**पराशरात् सत्यवत्यामंशांशकलया विभुः।**
**अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्।।**[३]

**त एव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा।**
**शिष्यैःप्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन्।।**[४]

## करुणामूलौ निगमागमौ–

अथ परमः कारुणिको भगवान् शिवः पञ्चकृत्यपरायणो[५] विजयते चिदानन्दैषणा-ज्ञानक्रिया-शक्तिसुनिर्भरः।[६] अखिललोककल्याणकृदसौ देवाधिदेवः

---

१. वा० पु० - ५९/८२-८/३.

२. निरुक्तम् - १/६/२०.

३. द्रष्ट०-जातःपराशराद् योगी वासव्यां कलया हरेः।- श्रीम० भा० म० पु० १/४/१४.

४. द्रष्ट०- व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्विधम्। -श्रीम० भा० म० पु० १/४/१९.

५. "अतः सृष्टिस्थितिर्ध्वंसस्तिरोभावोऽप्यनुग्रहः।
इति पञ्चसु कर्तृत्वमावहञ्छिव उच्यते।। पू.प्र.का. - १/४९.

६. स्वातन्त्र्यशक्तिः प्रथमा तदीया ह्यानन्दरूपेण विभासमाना ।
इच्छा द्वितीयास्ति चमत्कृतिर्या चिच्छक्तिरेतस्य प्रकाशतैव ।।

पञ्चभिर्मुखैर्निगमागमानुपदिदेश। तत्रास्य सद्योजातमुखाद् ऋग्वेदः, वामदेवमुखाद् यजुर्वेदः, अघोरमुखात् सामवेदः, तत्पुरुषमुखाद् अथर्ववेदः, ईशानमुखात् तु आगमः[१] प्राकट्यमुपजगाम। सर्वैरेभिर्वेदैरागमैश्च भगवन्महिमैव निभृतं स्तूयते।

**दर्शनानां त्रेधा विभागः–**

वेदप्रामाण्येन प्रवृत्तानां दर्शनानां नामधेयम् - वैदिकं दर्शनमिति। आगमप्रामाण्येन प्रवृत्तानां दर्शनानां नामधेयम् आगमिकं दर्शनमिति। तर्कयुक्त्युपपत्तिमुखेन प्रवृत्तानाम् उभयविलक्षणानां दर्शनानां नामधेयन्तु अवैदिकं (अश्रौतं) दर्शनम् इति।

तत्र वैदिकं दर्शनं षोढा भिद्यते- सांख्यम्, योगः, न्यायः, वैशेषिकम्, पूर्वमीमांसा, वेदान्तः (उत्तरमीमांसा) चेति। अवैदिकं दर्शनं त्रेधा-चार्वाकदर्शनम्, जैनदर्शनम्, बौद्धदर्शनञ्चेति। बौद्धदर्शनस्य विनेयभेदाच्चत्वारः प्रभेदा भवन्ति-वैभाषिकदर्शनम् , सौत्रान्तिक दर्शनम् , योगाचारदर्शनं माध्यमिकदर्शनं चेति। एषां क्रमशः बाह्यार्थप्रत्यक्षवादः, बाह्यार्थानुमेयवादः, विज्ञप्तिमात्रतावादः नैरात्म्यवादश्च प्रथते।

**आगमप्रभेदः–**

आगमिकं दर्शनन्तु अतिविशालं विद्यते। तत्प्रभेदो यथा-

**(१) वैष्णवागमदर्शनम् –** क. वैखानसागमः ख. पाञ्चरात्रागमः।**(२) शाक्तागमदर्शनम् (३) शैवागमदर्शनम् –** पाशुपत, कालामुख, कापालिक, शैवसिद्धान्त-दर्शनानि। **(४) स्मार्ततन्त्र (५) बौद्धतन्त्र (६) जैनतन्त्र (७) पौराणिकतन्त्र (८) सौरतन्त्र (९) गाणपत्यतन्त्र (१०) स्कान्दतन्त्र-दर्शनानि।**

**निषेधशेषो ब्रह्मवादः, विश्वरूप ईश्वराद्वयवादः–**

तत्र वैदिकदर्शनानाम् अङ्गाङ्गिभावं समर्थयन्ति विद्वांसो मनीषिणः। एवञ्च यानि सांख्यादीनि पञ्च दर्शनानि यानि च विभिन्नानि वेदान्तदर्शनप्रस्थानानि तेषां समेषां शाङ्करे अद्वैते अङ्गरूपता आस्थीयते। तद्वद् अवैदिकानां समेषां दर्शनप्रस्थानानां

---

आमर्शरूपापि च ज्ञानशक्तिः क्रियापि सर्वाकृतिरूपतैव।
स्थिता प्रभोः सूक्ष्मतया परायाम् अन्यत्र चाप्यक्रमशः स्फुरन्ती।।
इत्येवं शक्तिभिर्युक्तः पञ्चभिः परमेश्वरः।
इच्छाज्ञानक्रियाशक्त्यैवास्ति युक्तः स वस्तुतः।।
पू.प्र.का. - १/५२,५३,५४.

१. सूक्ष्मागमः- परस्पराविरुद्धार्थाः शिवोक्ता निगमागमाः ।
अल्पबुद्धिभिरन्योन्यं विरोधः परिकल्प्यते ।।-शुभाशीर्वचन, पृ.१

विज्ञानाद्वैतवादे शून्याद्वैतवादे वा अङ्गरूपता आस्थीयते। तद्वदेव समेषाम् आगमिकदर्शनप्रस्थानानां प्रत्यभिज्ञादर्शनस्य यः किल ईश्वराद्वैतवादः (परमाद्वैतवादः) तत्रैव अङ्गरूपता नितराम् आस्थीयते सदसद्विवेचकैः धीधनैः।

सम्प्रति आस्तिकदर्शनेषु शिरोरत्नायमानम् अद्वैतवादम्, आगमिकदर्शनेषु शिखामणिरूपम् ईश्वराद्वैतवादं च अधिकृत्य किमपि तुलनात्मकम् अनुशीलनं विधीयते।

## वेदान्तप्रस्थानानि–

वेदान्तदर्शने विभिन्नैः आचार्यैः विभिन्नान् वादान् सिद्धान्तयद्भिः भिन्नानि भाष्याणि ग्रथितानि राजन्ते। तद्यथा[१]-

१. जगद्गुरुशङ्कराचार्यः शारीरकभाष्यम् अद्वैतवादः
२. जगद्गुरुभास्कराचार्यः भाष्करभाष्यम् औपाधिकभेदाभेदवादः
३. जगद्गुरुरामानुजाचार्यः श्रीभाष्यम् विशिष्टाद्वैतवादः
४. जगद्गुरुमध्वाचार्यः पूर्णप्रज्ञभाष्यम् द्वैतवादः
५. जगद्गुरुनिम्बार्काचार्यः वेदान्तपारिजातभाष्यम् द्वैताद्वैतवादः
६. जगद्गुरुश्रीकण्ठाचार्यः शैवभाष्यम् शैवविशिष्टाद्वैतवादः
७. जगद्गुरुश्रीपत्याचार्यः श्रीकरभाष्यम् वीरशैवविशिष्टाद्वैतवादः
८. जगद्गुरुश्रीवल्लभाचार्यः अणुभाष्यम् शुद्धाद्वैतवादः
९. जगद्गुरुश्रीविज्ञानभिक्षुः विज्ञानामृतभाष्यम् अविभागाद्वैतवादः
१०. जगद्गुरुश्रीबलदेवविद्याभूषणः गोविन्दभाष्यम् अचिन्त्यभेदाभेदवादः

परम् अद्वैतवादसिद्धान्तस्यैव पार्यन्तिकी अङ्गिरूपता मनीषिभिरास्थीयते।

## मायामूलो ब्रह्माद्वयवादः

अस्मिन् वादे दृश्यभूतस्य जगतः अज्ञानोपादानकत्वम्[२] अङ्गीक्रियते। अज्ञानं,

---

१. प्र० कु० पृ०सं० - ५६.

२. द्रष्टव्यम् - वे० सा०- पृ०सं०- २०६.

'अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद् वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्। तदुक्तम् -
'सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदाहृतः।। इति।

माया, अविद्या इत्यादिकं पर्यायतया आस्थीयते। अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैवात्र परमार्थः।

**ब्रह्मणः स्वरूपलक्षणं, तटस्थलक्षणञ्च–**

स्वप्रकाशं नित्यशुद्धबुद्धमुक्तस्वभावं स्वतःसिद्धं सकृद्विभातञ्च[१] यत् , तदेतद् ब्रह्म सर्वेषाम् अस्माकम् आत्मा विद्यते। एतस्य स्वरूपलक्षणमुक्तम्-'सत्यं ज्ञानमनन्तं ब्रह्म' इति[२]। तटस्थलक्षणं तु यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति इति[३]। तदेतत् सूत्रितं 'जन्माद्यस्य यतः' इति[४]। निरुपाधिकं ब्रह्म निराश्रयं निर्विषयं सन्मात्रस्वरूपञ्च भवति। स्वप्रकाशस्यास्य स्वरूपप्रथने अन्यानपेक्षता भवति। सत्यस्यास्य ब्रह्मणः त्रिकालाबाध्यता च भवति। यश्च भोक्ता यद् वा भोक्तव्यं तत् सर्वं भेदप्रपञ्चात्मकं ब्रह्मणि आश्रितया अविद्यया[५] परिकल्पितं भवति। सैषा अविद्या अनादिः सत्त्वासत्त्वाभ्याम् अनिर्वचनीया अभावभिन्ना यत्किञ्चिद् भावरूपा भवति[६]। यदुक्तम्- अनादिषट्कम्;

**जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।**
**अविद्या तच्चितोर्योगः षडस्माकमनादयः।।**[७]

नहि अव्यक्ताम् इमाम् अनाद्यविद्यां विना त्रिगुणात्मकस्य जगतः उत्पत्तिः सम्भवति। यदुक्तम्-

**अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या।**
**कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते।।**[८]

---

१. मुण्डको० - १/१/६.

२. तैत्तिरी० - २/१.

३. तैत्तिरी० - ३/१.

४. ब्र०सू० - १/१/२.

५. सं० शा० -१/३१९.
'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः।।'

६. वे०सा०- अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत् किञ्चिदिति। पृ० - ८६.

७. अ०र० र० - पृ.२१.

८. वि०चू०- श्लोक सं० - ११०.

## बन्ध-मोक्षौ–

एतस्य सकार्यस्य अज्ञानस्य एव जीवान् प्रति बन्धरूपता दर्शनेषु व्याख्यायते। ततो मुक्तिस्तु आत्मसाक्षात्कारात्मकं ब्रह्मज्ञानं विना न सम्भवति। 'आत्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:'[१] 'आत्मनो वा अरे दर्शनेन श्रुत्या विज्ञानेनेदं सर्वं विज्ञातं भवति'[२] 'तमेव विदित्वातिमृत्युमेति'[३] 'आत्मान्वेष्टव्य:'[४] 'न स पुनरावर्तते'[५] इत्यादिश्रुतावात्मज्ञानस्य मुक्तिहेतुत्वश्रवणात्।

## अनिर्वचनीया किल अविद्या–

अस्याश्च अविद्याया: अनिर्वचनीयता आस्थीयते। अनिर्वचनीयत्वं नाम सत्त्वप्रकारकप्रतीत्यविषयत्वे सति असत्त्वप्रकारकप्रतीत्यविषयत्वे सति सदसत्त्व-प्रकारकप्रतीत्यविषयत्वस्वरूपम्। यदुक्तं वार्त्तिककृता-

**अविद्याया अविद्यात्वमिदमेव तु लक्षणम्।**
**यत् प्रमाणासहिष्णुत्वमन्यथा वस्तु सा भवेत्।।**[६]

चित्सुखमुनिनापि उक्तम् -

**प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।**
**गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः।।**[७]

तदेवम् अधिष्ठानभूते ब्रह्मणि तद्विषयिण्या अविद्यया अध्यस्तं जगत् मिथ्याभूतम् आभाति। ब्रह्मज्ञानेन अधिष्ठानसाक्षात्कारे सति अविद्यासहितस्य जगत: निवृत्तिर्बाधो वा भवति। अत: आरोप्याधिष्ठानयो: न कश्चन सम्बन्धो भवितुमर्हति। यदुक्तम् वार्त्तिककृता-

**निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा।**
**आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते।।इति।**[८]

---

१. बृ०आ०उ० - २/४/५.

२. बृ०आ०उ० - २/४/५.

३. श्वेता० - ६/१५, ३/८.

४. छान्दो०, उद्धृतम् - ब्र०सू०शा०भा०, पृ. १८३.

५. उद्धृतम्- वे०प० पृ. १.

६. बृहदा.भा.वा., १८१.

७. चि०सु०, १/१३.

८. भा० वा० उद्धृतम्- अ०र०र० पृ. ४५.

सर्वबाधावधिभूतं ब्रह्म अध्यस्तस्य जगतः आंशिकेनापि दोषेण गुणेन वा न युज्यते। यदुक्तम् भाष्यकृता- **'तत्रैवं सति यत्र यदध्यस्तं तत्कृतेन दोषेण गुणेन वाणुमात्रेणापि न संबध्यते'** इति।[१] सङ्क्षेपशारीरककृतापि उक्तम्– **'मृगवारिपूरपरिवारवती न नदी तथोषरभुवं स्पृशतीति।** [२]

यद्यपि ब्रह्म एकम् अस्ति तथापि मायादि-उपाधिवशात् जीवेश्वरभावं स्वीकरोति। यदुक्तम्-

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवद्।।इति।** [३]

पञ्चदशीकृतापि-

**मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ।**
**यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि।।इति।** [४]

## जीवनानात्वम् प्रतिकर्मव्यवस्था च –

प्रस्थानभेदेन अविद्योपाधिकस्य अन्तःकरणोपाधिकस्य वा चैतन्यस्य जीवरूपता आस्थीयते।

**यदुक्तम् –**

**जीवो हि नाम चेतनः शरीराध्यक्षः प्राणानां धारयिता।**

**अस्ति आत्मा जीवाख्यःशरीरेन्द्रियपञ्जराध्यक्षःकर्मफलसम्बन्धी।इति।** [५]

**मन उपाधिकश्च जीवः।इति।** [६]

उपनिषदः वेदान्तशब्देन गीयन्ते। उपनिषद्वाक्यानाम् अखण्डे ब्रह्मणि तात्पर्यं यथावसीयते तथा श्रीबादरायणेन ब्रह्मसूत्राणि विरचितानि। यथोक्तं भगवता भाष्यकृता **वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणामिति**। वेदान्तमीमांसात्मकानामेषां सूत्राणां भाष्यं भगवता शङ्कराचार्येण श्रीभगवत्पादेन विहितम्। भाष्यस्य अतिनिगूढाक्षराणां दुरवबोधं तात्पर्यं बोधयितुं पञ्चपादिकाचार्येण पञ्चपादिका टीका विरचिता। उक्तायाः टीकायाः

---

१. भा० वा० उद्धृतम्- अ०र०र०, पृ. ४५.

२. सं० शा० उद्धृतम्- अ०र०र०, पृ. ४५.

३. सं० शा०, १२.

४. प० द० ६/२३६.

५. ब्र०सू०शा०भा०, १/१/६.

६. ब्र०सू०शा०भा०, १/१/७.

आशयं स्फुटीकर्तुं विवरणग्रन्थो विरचितः श्रीमता विवरणाचार्येण।

तस्मिन् विवरणग्रन्थे येषां प्रमेयाणां निरूपणं शब्दसंक्षेपेण विहितं तेषामाशयोपि कालक्रमेण ह्रसितबुद्धीनां दुरवबोधः संजातः। अतः पूर्वाश्रमे श्रीमाधवाचार्यनाम्ना प्रथितेन श्रीविद्यारण्यमुनिना श्रीयतिना श्रीशङ्करानन्दगुरूणां शिष्यतां गतेन विवरणप्रमेयसङ्ग्रहाख्यो ग्रन्थो रचितः। यदुक्तम्-

**''भाष्यटीकाविवरणं तन्निबन्धनसंग्रहः।**
**व्याख्यानव्याख्येयभावक्लेशहानायरच्यते।।इति।** [१]

**श्रवणमनननिदिध्यासनानि–** तत्र ''स्वाध्यायोऽध्येतव्यः'' इति वाक्येन बोध्यमानः अध्ययनविधिः नित्यो विद्यते न तु काम्यः। नित्यविधिबलादेव षडङ्गसहितवेदाध्ययनेन अर्थावबोधो जायते। आत्मनस्तु कामाय सर्वं प्रियं भवति, आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातम्, एतावदरे खल्वमृतत्वम्- इत्युपक्रमोपसंहाराभ्यां प्रतीयते यत् अमृतत्वमेव नित्यः परमपुरुषार्थः, तस्य चोपायः आत्मदर्शनमिति। यतश्च आत्मदर्शनं पुरुषतन्त्रं नास्ति अतः आत्मदर्शनमनूदितम्- आत्मा वा अरे द्रष्टव्यः इति। तस्य चोपायः श्रवणम्, तदुपकारिणी तु मनननिदिध्यासने भवतः। यदुक्तम्- आत्मदर्शनमनूद्य तदुपायत्वेन **''श्रोतव्यो मन्तव्यो निदिध्यासितव्यः''** इति मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयते इति। यथा च दृष्टफलस्य धर्मज्ञानस्य साधने अध्ययने नियमविधिरङ्गीक्रियते तथा परमपुरुषार्थ- ब्रह्मसाक्षात्कारसाधने श्रवणे नियमविधिरङ्गीक्रियते।

तत्र श्रवणं नाम वेदान्तवाक्यानि विचार्य उपक्रमादिभिर्लिङ्गैर्वाक्य-तात्पर्यार्थनिर्णयः। तथा च विरक्तेनाधिकारिणा अमृतत्वसाधनभूतात्मदर्शनाय वेदान्तवाक्यविचारः कर्त्तव्य इति लभ्यते। अधीतस्वाध्यायानां पुंसां किंलक्षणमात्मतत्त्वम्, किं वा तत्र प्रमाणम् ? कीदृशम् अमृतत्वम्, किं वा तत्र प्रमाणम् ? इत्येवमादीन् प्रश्नान् समाधातुम् श्रोतव्यः- इति वाक्येन अनुबन्धत्रयोपेतं विधिं न्यायेन निर्णेतुं भगवता बादरायणेन सूत्रितम् अथातो ब्रह्मजिज्ञासेति। तदनेन सूत्रेण साधनचतुष्टयसम्पन्नस्य कर्मभिर्मोक्षासिद्धेर्मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्य-विचारः कर्त्तव्य इति श्रुतार्थः समग्रोपि सूत्रे संगृहीतो भवति।

यथा ज्योतिष्टोमादीनां श्रुतस्य स्वर्गसाधनत्वस्य उपपत्तये पूर्वमीमांसायाम् अपूर्वं कल्प्यते तथा श्रुतेर्बन्धसत्यत्वासत्यत्वयोस्ताटस्थ्येऽपि ''तमेव विदित्वाऽतिमृत्युमेति'' इतिश्रुतोपपत्त्यर्थं बन्धस्य अविद्यात्मत्वं कल्प्यते। सोऽयमपारमार्थिको बन्धोऽज्ञानात्मा ब्रह्मज्ञानेन निवर्तनीयो भवतीति ''अथातो ब्रह्मजिज्ञासे''ति सूत्रेण सूचितम्।

---

१. वि० प्र० सं०- म० पद्यम्।

वेदान्तिनो हि सर्वोपप्लवरहितं विज्ञानघनमात्मानमाहु:, तद्व्यतिरिक्तं च सर्वमनात्मानम्।

अध्यासमूलक एव सर्वोपि नैसर्गिको व्यवहार:। अध्यासस्य उपादानन्तु अनाद्यनिर्वचनीयं भावरूपमज्ञानम्। अज्ञानस्य सत्त्वे प्रमाणन्तु ''अहमज्ञ:'' ''मामन्यं च न जानामि'' इत्येवमनुभूतिरेव। अस्यैव अपरं नामधेयम् अविद्याशक्तिरिति। एषा जडा आत्माश्रिता बाह्ये आभ्यन्तरे च वस्तुनि व्याप्ता विद्यते। अहमज्ञ: इति प्रतीति: अहं सुखी इतिवद् अपरोक्षानुभूति: विद्यते अतो भावरूपमेव अज्ञानम्। न तु अनुपलब्धि-प्रमाणगम्यम्।

अनिर्वचनीयं ज्ञानरूपम् अर्थरूपं चाध्यासद्वयम्। तस्य चान्यथानुपपत्त्या तदुपादानस्य अज्ञानस्यापि अनिर्वचनीयत्वं बोध्यम्। तथा चायं निर्गलितोऽर्थ:- अनाद्यनिर्वाच्यमभावरूपमज्ञानम् आत्माश्रितम् आत्मविषयम् उपादानमध्यासस्य भवतीति। अज्ञानं किल आत्मानमेवावृणोति न त्वनात्मानम्। अनात्मन: आवरणे प्रमाणाभावात् प्रयोजनाभावाच्च। सुषुप्तवत् जागरस्वप्नयोरपि अनाद्यनिर्वचनीयाज्ञानमेव ब्रह्मावरण-मित्यभ्युपगम्यते सिद्धान्ते। यतश्च सम्बद्धमेवाज्ञानम् आत्मानं ब्रह्म आवृणुयात् ततश्च अज्ञानसम्बद्धस्य आत्मन: असङ्गत्वं खण्ड्येतेति तु नाशङ्कनीयम्। यथा नीरूपेऽप्याकाशे बालास्तलमालिन्यादि अध्यस्यन्ति परमाकाशे मालिन्यं वस्तुतो नैव भवति तथैव अज्ञानमप्यनिर्वचनीयमात्मनि कल्पितं भवति, अज्ञानसम्बन्धोऽप्यात्मनि कल्पित एव भवति न चैतावता कल्पितेन अज्ञानेन, तत्सम्बन्धेन वा वस्तुत: आत्मन: ससङ्गता भवति प्रत्युत असङ्गता एव निर्बाधमनुवर्तते सततम्।

एतदुक्तं भवति- कल्पितं भावरूपमज्ञानम् अनात्मानं नैव आवृणोति परं तत्र विक्षेपमात्रं जनयति। आत्मानं त्वेतद् आवृणोति तत्र च अहमिदम्, ममेदम् इत्येवं व्यवहारयोग्यान् अध्यासान् अपि जनयति। तत्र च अहम्, इदम्,ममेदमिति च त्रयोऽप्यध्यासा एव भवन्ति। यथा स्वप्नमाहेन्द्रजालकल्पितस्य राज्ञो राज्योपकरणं पारमार्थिकं न भवति तथा देहेन्द्रियादिविशिष्टस्य भोक्तुरिव तदुपकरण-बाह्यभोग्यजातस्यापि अध्यस्तत्वमिष्यते।

धर्मिणं विनापि केवलधर्माध्यासो नानुपपद्यते। यथा बधिरोहमिति प्रतीतिर्भवति। अत्र प्रतीताविन्द्रियधर्मस्य केवलबाधिर्यस्य आत्मनि अध्यास: सुस्पष्टआभाति। ज्ञानाध्यासश्च अर्थाध्यासाविनाभूत: पृथग् न साधनीय: अनुभूतिसिद्धे अध्यासे लक्षण-योगिता विद्यते, सम्भावनया असम्भावनाबुद्धिर्निरस्यते, प्रमाणेन तु तत्सद्भाव: साध्यते।

अध्यासो द्विविधो भवति ज्ञानविशिष्टोऽर्थ:, अर्थविशिष्टं ज्ञानञ्चेति। तत्रार्थरूपस्याध्यासस्य लक्षणं भवति-स्मर्यमाणसदृश:, अन्यात्मनाऽवभास्यमान: अन्योऽर्थ: अध्यास इति। ज्ञानरूपस्याध्यासस्य लक्षणन्तु स्मृतिसमान: अन्यस्य अन्यात्मतावभासोऽध्यास इति।

ख्यातिस्थले च अनिर्वचनख्यातिरेव वेदान्तिभिः अनुमन्यते, न तु आत्मख्यात्यादि। एवं च शुक्तिरजतादिस्थले रजतादिकं मायामयमेवेति बोध्यम्।

यद्यपि लक्षणप्रसिद्धिभ्यां मायाविद्ययोर्भेदः प्रतीयते। तथाहि आश्रय-मव्यामोहयन्ती कर्तुरिच्छामनुसरन्ती माया तद्विपरीता तु अविद्या इत्युच्यते। अतश्च तत्त्वज्ञाननिवर्त्यत्वाद् रजतमविद्यामयं न तु मायामयं वाच्यम्। तथापि निम्नाङ्कितं लक्षणं मायाविद्ययोरविशेषेण युज्यते। अनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्ध-विपर्ययावभासयोर्हेतुत्वमिति। अत एव सम्यग्ज्ञाननिवर्त्याविद्यायां मायाशब्दः शास्त्रे प्रयुज्यते-"**भूयश्चान्ते विश्वमायानिवृत्तिः।**"स्मृतावपि मायाविद्ययोरेकत्वमनुमन्यते-

**तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।**
**योगी मायाममेयाय तस्मै विद्यात्मने नमः।।इति।** [१]

अतो रजतं मायामयमित्युक्तिः न न संगच्छते। लोकप्रसिद्धिस्त्वेकस्मिन्नपि वस्तुनि उपाधिभेदादुपपद्यते। यथा विरूपजनकत्वाकारेण इच्छाधीनत्वाकारेण वा मायेति व्यवहारो भवति। आवरणाकारेण स्वातन्त्र्याकारेण वा अविद्येति व्यवहारो भवति।

अद्वितीय एष आत्मा यद्यपि निष्कलङ्कस्तथाप्यत्र अविद्याभिधानोऽनृतरूपो दोषो विद्यते। तत्र प्रमाणं स्वयं श्रुतिर्भवति। "**तद्यथा हिरण्यं निधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यमृतेन हि प्रत्यूढ़ा इति।** अनया श्रुत्या स्पष्टतया प्रतिपाद्यते- सुषुप्तिकाले सर्वासां प्रजानाम् अनृतरूपाविद्यापिहिततया ब्रह्मचैतन्यानवभासो भवतीति। श्रुतार्थापत्तिप्रमाणेनापि अविद्याया अध्यासकारणत्वं प्रतीयते। तथाहि-ब्रह्मज्ञानात् श्रूयमाणा बन्धनिवृत्तिः ब्रह्मणि प्रागनवबोधोऽध्यासबन्धहेतुर्दोषोऽस्तीति कल्पयति। नास्ति वेदान्तिसम्मता अविद्येति वादिपक्षनिराकरणायैव लक्षणप्रमाणयोरुपन्यासः क्रियते। अविद्यास्वरूपं तु साक्षिचैतन्यादेव सिध्यति। अस्याश्चाविद्यायाः आश्रयो विषयश्च ब्रह्मैव भवति। तस्यैव ब्रह्मणो जिज्ञास्यत्वं ब्रह्मसूत्रे प्रतिपादितम्। तदेव ब्रह्म अविद्याद्वारा जगतो जन्मस्थितिभङ्गं प्रति विवर्तकारणं भवति। सर्वज्ञानप्रकाशकशास्त्रयोनिभूतं ब्रह्मैव सर्वज्ञं सर्वविच्चास्ते। यथोक्तम्-

**शब्दोपादानभावाद् ध्वनिगतविषयद्योतनाशक्तयोऽन्त-**
**र्ब्रह्मण्येव स्युरग्नेर्विषयविषयिणीदीपशक्तिः खलूच्चैः।**
**द्रष्टुश्च ज्ञानशक्तिर्ननु न करणता किन्तु दीपप्रभावत्**
**संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम्।।** [२]

तदेतद् ब्रह्म वेदान्तैः प्रमीयते, सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्येण सम्यगन्वयात्। वेदान्तानां तात्पर्यं ब्रह्मण्येवेति षड्विधलिङ्गैः अवधार्यते। तानि यथा-

१. तु०, ने० त०- २२/२१.
२. तु०, सं० शा० - २/६९.

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।इति।** [१]

सत्यपि सत्यज्ञानादिशब्दानां भिन्नार्थत्वे वेदान्तानां नूनमखण्डैकरसब्रह्म-प्रतिपादकत्वमिष्यते।

ब्रह्मणः प्रज्ञानं, विज्ञानम्, ज्ञानम्, विद्या, आत्मा [२] इत्येवमादयः पर्यायाः श्रुतिषु प्रसिध्यन्ति। अनादिभावरूपमज्ञानम् अनेनैव साक्षात्कारात्मकेन ब्रह्मज्ञानेन विलीयते। यथोक्तं-

**''अनादिभावरूपं यद् विज्ञानेन विलीयते।**
**तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते।।इति।** [३]

अस्या अविद्यायाः विषयः आश्रयश्च शुद्धचैतन्यमेव भवति। मायाया अनिर्वाच्यायाः शक्तिद्वयं भवति-आवरणशक्तिः, विक्षेपशक्तिश्चेति। आवरणशक्त्या शुद्धचैतन्यमावृत्य विक्षेपशक्त्याऽसौ जीवेश्वरादिभेदं कल्पयति। यदुक्तम्-

**आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।**
**पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः।।** [४]

**आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्व-जगदाकृतिभिर्मृषैव।**
**अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन।।** [५]

सुरेश्वराचार्याःशुद्धसत्त्वप्रधानां मायामुररीकुर्वन्ति, मलिनसत्त्वप्रधानान्तु अविद्याम्। माया विक्षेपशक्तिप्रधाना भवति अविद्या तु मलिनसत्त्वप्रधाना। यदुक्तम्;

**सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते।इति।**

**माया विक्षिपदज्ञानमीशेच्छावशवर्ति वा।**
**अविद्याच्छादयत् तत्त्वंस्वातन्त्र्यानुविधायि वा।।इति च।** [६]

विवरणाचार्यास्तु मायाऽविद्ययोर्मध्ये भेदं नाङ्गीकुर्वन्ति या माया सैवाऽविद्येति विवरणप्रस्थाने नैकाभिः युक्तिभिः प्रसाध्यते। भेदपक्षमङ्गीकृत्य आभासवाद आश्रियते

---

१. तु; वे० सा० - लिङ्गानितु- पृ० २३६
२. यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।,
यश्चास्य सन्ततो भावस्तत आत्मेति गीयते।। वा.पदी.५/३४.
३. तु० अज्ञानन्तु.....वे० सा०- पृ० ८६
४. सं० शारी०- १/३१९, ५. तु०, अस्याज्ञानस्य आवरणविक्षेप- वे० सा०, पृ० ११८
५. तु० अस्याज्ञानस्य आवरणविक्षेप- वे०सा०- पृ० १२२
६. तु०, विक्षेपशक्तितार्लिङ्गादि... वे० सा०- पृ० १२२ अविद्याया अविद्यात्वमिदमेव-वस्तुसा भवेत्। वृ० आ० वा०- १८१

अथाभेदपक्षमङ्गीकृत्य प्रतिबिम्बवाद आस्थीयते। आभासवादे अनेकजीववादः, प्रतिबिम्बवादे तु एकजीववादः सुस्थितो भवति।

अथ वेदान्तिभिरविद्याकल्पने कथमुपक्रान्तमिति विचार्यते। मिथ्याज्ञानस्यैव सर्वानर्थमूलत्वमिति दार्शनिकैः सर्वैरेव प्रायेण स्वीक्रियते। तार्किकैः जीवानां दुःखमूलं जन्म, तन्मूलं धर्माधर्मौ, तन्मूलं रागादिदोषः, तन्मूलं मिथ्याज्ञानम् अभ्युपेयते। मिथ्याज्ञानस्यापि कल्पिका ब्रह्मणोऽप्यावरिका दुर्घटं घटयन्तीयं सम्भावयन्त्यसम्भवमविद्या कल्प्यते अद्वैतिभिः सदसद्भ्यां विलक्षणा अनिर्वचनीया किल। दर्शननिकाये अद्वैतसिद्धान्ते अथ च बौद्धसिद्धान्ते संवृतिनाम्नी अविद्या माया वा स्वीक्रियते नान्यत्र। अविद्याया लक्षणन्तु **अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमिति**।

तदिदमज्ञानं चैतन्यनिष्ठं यद्यपि एकमेव तथापि प्रमातृगतं प्रमेयगतं चेति अवच्छेदकभेदाद् अज्ञानद्वैविध्यं स्वीक्रियते। तत्र अन्तःकरणावच्छिन्नचैतन्यनिष्ठं प्रमातृगतमज्ञानं यद् भवति तत्र असत्त्वापादिका शक्तिरवतिष्ठते। विषयावच्छिन्न-चैतन्यनिष्ठं प्रमेयगतम् अज्ञानं यद् भवति तत्र अभानापादिका शक्तिस्तिष्ठति तत्र परोक्षज्ञानेन असत्त्वापादिका शक्तिरेव नश्यति। अथ प्रत्यक्षज्ञानेन अज्ञानस्य अभानापादिका शक्तिरपि नश्यति। ततश्च अस्ति भातीत्युभयथा वस्तुनः प्रतीतिर्जायते।

चतुर्भिर्महावाक्यैः समेषां वेदान्तानाम् अद्वैते ब्रह्मणि तात्पर्यं पर्यवसीयते। तानि महावाक्यानि- **प्रज्ञानं ब्रह्म**[१], **अयमात्मा ब्रह्म**[२], **तत्त्वमसि**[३], **अहं ब्रह्मास्मि** इति[४] च।

तत् त्वमसि- इत्यत्र सर्वज्ञत्वादिगुणविशिष्टं ब्रह्म तत्पदार्थः। स्वरूपलक्षणं तटस्थलक्षणञ्च समर्पयितुं श्रुतिवाक्यानि प्रवृत्तानि सन्ति। तद्यथा- **सत्यं ज्ञानमनन्तं ब्रह्म,**[५] **सदेव सौम्येदमग्र आसीत्,**[६] **सोऽकामयत बहु स्यां प्रजायेय,**[७] **यतो वा इमानि भूतानि जायन्ते,**[८] इत्यादिकानि। एभिः श्रुतिवाक्यैः सत्यज्ञानसुखात्मकस्य ब्रह्मणो यद् जगन्निमित्तकारणत्वं प्रतीयते तद् द्विविधं भवति- निमित्तकारणत्वम्; उपादानकारणत्वं चेति। तत्र कर्तृत्वरूपं निमित्तकारणत्वं सर्वज्ञे ब्रह्मणि एव सम्भवति न तु जडे प्रधानादौ। उपादानत्वं नाम जगदध्यासाधिष्ठानत्वम्। तदुभयविधं कारणत्वं

---

१. ऐतरे. ३/३/३.
२. माण्डू. १/२.
३. छान्दो. ६/८/७.
४. बृहदा. १/४/१०.
५. तैत्तिरी० २/१/१.
६. छा. ६/२/१.
७. तैत्ति.-ब्र.अनु. ६.
८. तैत्ति.-३/१.

ब्रह्मणि समुपपद्यते। तदेव च तत्पदार्थः। तत्र त्वम्पदार्थस्तु जीवः। तत्र जीवस्वरूपविषये वेदान्ताचार्याणां सूक्ष्मो मतभेदः प्राप्यते। **''कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः''** इति वचनबलात् अविद्यायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणेषु चित्प्रतिबिम्बस्तु जीव इत्युच्यते इति संक्षेपशारीरककृतां मतम्। अथ अज्ञानमेकमेव विद्यते। तत्र बिम्बरूप ईश्वरो भवति प्रतिबिम्बरूपस्तु जीव इत्युच्यते इति विवरणकृन्मतम्। श्रुतिषु ब्रह्माद्वयवादः त्रिधा उपवर्णितो भवति।

(१) यतश्च स्वगतसजातीयविजातीयभेदरहितं ब्रह्म ततोऽस्याद्वैतत्वम्। यथोक्तम् एकमेवाद्वितीयमिति।[१]

(२) यतश्च सर्वात्मकत्वं ब्रह्मणः ततोऽस्य अद्वयत्वं विद्यते। यथोक्तम्- सर्वं खल्विदं ब्रह्म,[२] ऐतदात्म्यमिदं सर्वम्[३] ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चात् इत्यादि।

(३) यतश्च प्रतीयमानं दृश्यमात्रं प्रतिषिध्यते अतः द्रष्टुर्ब्रह्मणः पारिशेष्यादद्वयत्वमिति। यथोक्तम्- नेह नानास्ति किञ्चन,[४] इति। तदेवमद्वैतसिद्धान्तो विजयते-

**एकः शुद्धः स्वयञ्ज्योतिर्निर्गुणोऽसौ गुणाश्रयः।**
**सर्वगोऽनावृतःसाक्षी निरात्माऽऽत्माऽऽत्मनःपरः।।**[५]

तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति[६] ब्रह्मविदाप्नोति परम्[६] तरति शोकमात्मवित्,[७] न स पुनरावर्तते,[८] इत्यादि-श्रुत्या ब्रह्मज्ञानात् साक्षात्काररूपाद् नित्यपुरुषार्थस्य मोक्षस्य प्राप्तिर्भवतीति स्पष्टं प्रतीयते। यदुक्तम्-

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।इति।**[९]

परमद्वैतभावनेयम् ईशानुग्रहाद् द्वित्राणामेव सुकृतिनां जायते न बहूनाम्-

---

१. छान्दो. ६/२१९.

२. बृहदा. ३/१/४१.

३. मुण्ड. २/२/११.

४. कठो. २/१/११.

५. तु०, सुषुप्तवज्जाग्रति०- वे० सा० पृ० २६७ श्वेता. ३/७.

६. तै.ब्र.अनु. १.

७. छान्दो. ७/१/३.

८. उद्धृ. वे० प० प्रत्य. पृ. ४.

९. उद्धृ०, वे० सा० पृ० २६५

**ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।**
**महाभयकृतत्राणा द्वित्राणां यदि जायते।।** [१]

अद्वैतवेदान्ते साधकैः ज्ञानिभिर्भक्तिमद्भिः विज्ञैः शास्त्ररसिकैः आगमानां श्रेष्ठप्रामाण्यमभ्युपगच्छद्भिः मनीषिभिः श्रुतियुक्तिसत्तर्कपरिशीलनपरैः गुरुशिष्य-परम्परा समेधिता वाङ्मयश्रीश्च समृद्धिं प्रापिता। अतः कस्यापि अध्यात्मानुरागिणः आकर्षणायासौ प्रभवति। विभिन्नैराचार्यैः अद्वैतसाधनाय ये पन्थानः आविष्कृताः, पल्लविताः, उपपादिताश्च विभिन्नाभिर्युक्तिभिः, विभिन्नैः दृष्टान्तैश्च श्रुत्युक्तमुपजीवद्भिः, ते आपाततो यद्यपि अन्योन्यभिन्ना इव प्रतीयन्ते तथापि अद्वैतप्रासादस्य इष्टिकाभूतास्ते पन्थानः प्रबलत्वमेवाद्वैतसिद्धान्तस्य द्रढयन्ति। तेषां द्विधा विभाजनं प्रथते भामतीप्रस्थानं विवरणप्रस्थानं चेति। मौलिकाः सिद्धान्तास्तु उभयत्र समाना भवन्ति। यथा ब्रह्मणो विवर्तकारणता, ब्रह्माश्रिताया अविद्याया परिणामिकारणता (उपादानकारणता) अथ च जगतः कार्यता प्रस्थानद्वयेपि समानरूपेण स्वीक्रियते। यथा भावात्मकस्य घटादिकस्य कार्यस्य उपादानकारणं मृत्तिका भवति, निमित्तकारणन्तु कुलालादिः। तथैव जगतो भावरूपस्य कार्यस्य उपादानकारणमविद्या भवति, निमित्तकारणन्तु चेतनं ब्रह्मैव भवति। अभावो न कस्यापि उपादानं भवितुमर्हति न वाऽभावं प्रति किमपि उपादानं भवितुमर्हतीति जडात्मनो जगतः जडात्मा अविद्या उपादानभूता अभावरूपा भवितुं नार्हति प्रत्युत भावरूपैव भवितुमर्हति। अतश्चाविद्या भावरूपेष्यते।

**''अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः''** इति भगवदुक्त्या अज्ञानस्य यद् आवरकत्वं प्रतीयते तदपि तस्य अभावरूपतां साधयति। अत एव विद्भिर्युक्त्या प्रसाधितमज्ञानस्य नाभावरूपतेति। यथोक्तम्-

**नाभावताऽस्य घटतेवरणात्मकत्वान्नाभावमावरणमाहुरभावशौण्डाः।**
**अज्ञानमावरणमाह च वासुदेवस्तद् भावरूपमिति तेन वयं प्रतीमः।।** [२]

येयमविद्या जगत उपादानकारणं विद्यते सा कुत्र आश्रिता तिष्ठति कं वा विषयीकरोतीति प्रश्नस्य समाधाने द्वयोः प्रस्थानयोः मतभेदः स्पष्टतया प्रसिध्यति। तद्यथा - विवरणकृन्मते निर्विकल्पिका चितिरेव अविद्यायाः आश्रयः विषयश्चेष्यते। यतश्च एषा अविद्या स्वजन्यान्तःकरणेन अवच्छिन्नं जीवं प्रति प्रयोजिका भवति अतः जीवप्रविभागात् प्राक् स्थिताया अविद्यायाः आश्रयः कथंकारं जीवो भवितुमर्हति? यतश्च अविद्याप्रयुक्तो जीवः, न च प्रयोजकस्य प्रयोज्याश्रितत्वमुपपादयितुं शक्यं प्रयत्नशतेनापि। अतः ब्रह्मणि आश्रिता ब्रह्मविषयिणी चाविद्या जगदुपादानभूता परिणामकारणं जगत इति विवरणमतं सुतरामुपपद्यते। यदुक्तं श्रीसर्वज्ञात्ममुनिना-

---

१. खं० खं० खा० - १/२५।

२. सं.शारी., १/३२०.

**आश्रयत्वविषयत्वभागिनी निर्विकल्पचितिरेव केवला।**
**पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः।।**[१]

तदधीनत्वादर्थवत्[२] इति सूत्रभाष्ये भगवत्पादेन सुस्पष्टमुच्यत- ''अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूप-बोधरहिताः शेरते संसारिणो जीवाः।'' इति।

तत्र मिश्रपादाः परमेश्वराश्रयेति प्रतीकमादातुम् अवतरणिकामाहुः- **''नन्वेवमविद्यैव जगद्बीजमिति कृतमीश्वरेणेत्यत आह परमेश्वराश्रयेति।''** अग्रे भामत्यामुच्यते- **''तस्माज्जीवाधिकरणाप्यविद्या निमित्ततया विषयतया वा ईश्वरमाश्रयते इतीश्वराश्रयेत्युच्यते, न त्वाधारतया, विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरिति।''**

वेदान्तकल्पतरुकृद्भिः तर्कमुपस्थापयद्भिः प्रोक्तम्- **''अपि च दर्पणाद्युपाधेर्विषय एव मुखं नाश्रयः। न तु निर्विशेषब्रह्मस्वरूपाविद्या-सम्बन्धसम्भवः इत्यनादिन्यौ जीवाविद्ये परस्पराधीनतया अविद्यातत्सम्बन्ध-वदुपेये''** इति।

एवञ्चात्रायं प्रविवेकः, अविद्याया आध्यासिकसम्बन्धेन आश्रयो ब्रह्म भवति परमाच्छाद्यतासम्बन्धेनाश्रयस्तु जीव एव भवति। एवञ्च भामतीप्रस्थाने आच्छद्यतासम्बन्धेन अविद्यायाः आश्रयो जीवो भवति विषयस्तु ब्रह्म भवतीति स्वीक्रियते। सैषा अविद्या जगदुपादानकारणं भवतीति च।

परम् मूलभूतो यः वेदान्तसिद्धान्तः ब्रह्मविषयिणी अविद्यैव जीवं संसारिणं विधाय शोकमोहभयमयेऽरण्ये तमुपनिपातयतीति। नात्र काचन विमतिः, विभिन्नप्रस्थान-मधिकृत्य।

अथ मायावादे यन्निर्गुणपारम्यमास्थीयते तस्य केचन विशेषाश्चीयन्ताम्;

**ब्रह्म-जिज्ञासा-**

'अथातो ब्रह्मजिज्ञासा' इति ब्रह्मसूत्रस्य आदिमं सूत्रमस्ति। अत्र त्रीणि पदानि सन्ति- (१) अथेति आनन्तर्यार्थकम् अव्ययपदम्, (२) अतः इति हेत्वर्थकम् अव्ययपदम्, (३) ब्रह्मजिज्ञासेति तृतीयं समस्तं प्रथमान्तं पदम्। यद्यपि 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति अमरकोषतः अथशब्दस्य मङ्गलादिकाः बहवः अर्थाः सन्ति तथापि अथशब्दः नाधिकारार्थकः, ब्रह्मजिज्ञासायाः अनधिकार्यत्वात्।

---

१. सं. शा., १/३१९.

२. ब्र० सू० १/४/३.

नापि मङ्गलार्थकःमङ्गलस्य वाक्यार्थे समन्वयाभावात्। किन्तु आनन्तर्यार्थकः अथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति, अन्यार्थमानीयमानोदकुम्भदर्शनवत्। कस्मादनन्तरं ब्रह्मजिज्ञासा इति प्रश्ने स्वाध्यायानन्तरं धर्मजिज्ञासानन्तरं वा इति पक्षद्वयं वक्तुं न शक्यते, धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। स्वाध्यायानन्तर्यस्य तु धर्मब्रह्मजिज्ञासयोः समानत्वात्। यतः प्रत्यक्षेण **'तद् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते'** इत्यादिश्रुत्या च इहामुत्रार्थफलभोगस्य अनित्यत्वावगमः अथ च **'ब्रह्मविदाप्नोति परम्'** इति श्रुतेः ब्रह्मविज्ञानस्य नित्यपुरुषार्थप्रयोजनकत्वं विद्यते। अतो हेतोः साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा आरब्धव्या इति सूत्रार्थः सम्पद्यते। ज्ञातुम् इच्छा जिज्ञासा इति सन्प्रत्ययार्थभूता इच्छा भवति न तु क्रियते। अतः जिज्ञासापदस्य विचारार्थे लक्षणा भवति।

ब्रह्मणः जिज्ञासा इति कर्मषष्ठ्या तत्पुरुषसमासाद् ब्रह्मविषयणी मीमांसा कर्त्तव्या इत्यर्थः संगच्छते। यदुक्तम् - **''ब्रह्मण इति कर्मणि षष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः जिज्ञास्यान्तरानिर्देशात्।''** मीमांसाशब्देन पूजितविचाररूपः अर्थः अभिधीयते। यथोक्तम् -'मीमांसाशब्दः पूजितविचारवचनः' इति।

किं तावत् साधनचतुष्टयम्? इति जिज्ञासायाम् उक्तम्-**''उच्यते (१) नित्यानित्यवस्तुविवेकः, (२) इहामुत्रार्थभोगविरागः, (३) शमदमादिसाधनसम्पत्, (४) मुमुक्षुत्वं च।''** इति।

नित्यानित्यवस्तुविवेकः इति प्रथमं साधनम्। नित्यः = प्रत्यगात्मा, अनित्याः = देहेन्द्रियविषयादयः इत्येष अर्थस्तु न ग्राह्यः, एतादृश- नित्यानित्यविषयकः विवेकसंज्ञकः निश्चयः यदि विद्यते तर्हि ब्रह्मणः ज्ञातत्वाद् ब्रह्मजिज्ञासायाः नैरर्थक्यापत्तेः तस्मात् प्रथमस्य साधनस्य एवम् अर्थो विधेयः- नित्यानित्ययोः वसति इति नित्यानित्य-वस्तु तद्धर्मः, नित्यानित्ययोः धर्मिणोः तद्धर्माणां च विवेकः नित्यानित्यवस्तुविवेकशब्दार्थः। एवञ्च अनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यद् ऋतं नित्यं सुखं तदास्थागोचरः भविष्यति, यत्तु अनृतं भविष्यति तापत्रयपरीतं तत् त्यक्ष्यते। एष च नित्यानित्यवस्तुविवेकः प्राग्भवीयाद् ऐहिकाद् वा कर्मणः विशुद्धसत्त्वस्य अधिकारिणः उदेति तत्र च द्विविधं प्रमाणं भवति अनुभवरूपम् उत्पत्तिरूपञ्च। इदं तु नाशङ्कनीयं यत् सत्यं किञ्चिद् न भवतीति। सत्यभूतम् अधिष्ठानं विना असत्यभूतस्य अनृतस्य विवर्तभूतस्य अप्रतीतेः। एवञ्च यत् प्रथमं साधनं नित्यानित्यवस्तुविवेकात्मकं तद् अधिकारिणः द्वितीय- साधनोदये हेतुभावं भजते। यदुक्तम् भामतीकृता **''अथास्य पुरुषधौरेयस्यानुभवोपपत्तिभ्यामेवं सुनिपुणं निरूपयतः, आ च सत्यलोकात् आ चावीचेः**

**'जायस्व म्रियस्व' इति विपरिवर्तमानं क्षणमुहूर्तयामाहोरात्रार्धमासमासर्त्वयनवत्सरयुगचतुर्युगमन्वन्तरप्रलयमहाप्रलयमहासर्गावान्तरसर्गसंसारसागरोर्मिभिरनिशमुह्यमानं,तापत्रयपरीतमात्मानं जीवलोकं चावलोक्य, अस्मिन्संसारमण्डलेऽनित्याशुचिदुःखात्मकं प्रसंख्यानमुपावर्तते; ततोऽस्यैतादृशान्नित्यानित्यवस्तुविवेकलक्षणात्प्रसंख्यानाद् इहामुत्रार्थभोगविरागो भवति।''** इति।[१]

द्वितीयं साधनम् - इहामुत्रार्थभोगविरागः। अस्यार्थः - इह = अस्मिन् लोके, अमुत्र = परलोके, अर्थ्यते = प्रार्थ्यते इति अर्थः = फलम्।तस्मिन् यः विरागः अर्थात् अनाभोगात्मिका उपेक्षाबुद्धिः साधकस्य उदेति सेयं द्वितीयं साधनम्।

अथ तृतीयं साधनं-शमदमादिसाधनसम्पद् विद्यते। तत्र शमो नाम साधकस्य वैराग्यहेतुकः मनोविजयः। अस्यैव वशीकारः इत्येषा संज्ञा योगशास्त्रे प्रथते। शमः कथं ब्रह्मविचारे प्रवर्तयति इति जिज्ञासायां मिश्रपादैरुक्तम्- **''रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्तयत्, विविधाश्च प्रवृत्तीः पुण्यापुण्यफलाः भावयत्, पुरुषमतिघोरे विविधदुःखज्वालाजटिले संसारहुतभुजि जुहोति। प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदं तु मनः पुरुषेण विजीयते वशीक्रियते, सोऽयमस्य वैराग्यहेतुको मनोविजयः शम''** इति।

विजितं मनः तत्त्वविषयविनियोगयोग्यतां यद् नीयते सेयं साधकस्य योग्यता दम इत्याख्यायते। आदिपदेन उपरति-तितिक्षा-समाधान-श्रद्धा-व्यक्तयः संगृह्यन्ते। यथाह भगवती श्रुतिः-**''तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्''** इति।

अनन्तरं साधकस्य संसारबन्धनाद् मुमुक्षा जायते तच्चतुर्थं साधनम्।

साधनचतुष्टयादनन्तरं यतश्च कर्मफलानाम् अनित्यत्वं ज्ञानफलस्य नित्यत्वं चिन्मयत्वञ्च अतः मुमुक्षुणा साधकेन ब्रह्म-विचारात्मिका जिज्ञासा कर्त्तव्या इति जिज्ञासासूत्रार्थः सम्पद्यते।

### ब्रह्मणो-लक्षणम्

'अथातो ब्रह्मजिज्ञासा' इति प्रथमे ब्रह्मसूत्रे प्रतिपादितम् -'परमनिःश्रेयस-साधनब्रह्मज्ञानप्रयोजना ब्रह्ममीमांसा आरब्धव्या' इति। अत्र जिज्ञासा उदेति-यस्य ब्रह्मणः मीमांसा आरब्धव्या तस्य किं लक्षणमिति?

आक्षेपपरिहाराभ्याम् अस्याः जिज्ञासायाः समाधानं सूत्रभाष्यभामत्यादिषु विहितम्। तत्र आक्षेपस्तावत्- अनुभूयमानं जगद् यतः परिमितम् अविशुद्धम् अबुद्धं नश्वरं चास्ति अतः तद् नित्यशुद्धबुद्धस्वभावस्य स्वविरुद्धस्य ब्रह्मणः लक्षणं भवितुं

---

१. जिज्ञासाधिकरणम्।

नार्हति। नित्यस्य लक्षणं कृतकं भवितुं नार्हति। नित्यस्य ब्रह्मणः नित्यत्वादिकं लक्षणमपि भवितुं नार्हति अनुपलब्धत्वात्। अथ च शब्दोऽपि न ब्रह्मणो लक्षणम् अत्यन्ताप्रसिद्धस्य तस्य अपदार्थतया अवाक्यार्थत्वात्। यदुक्तम् -

**''तस्माल्लक्षणाभावान्न ब्रह्म जिज्ञासितव्यमित्याक्षेपाभिप्रायः।''**

अस्य आक्षेपस्य परिहारः यथा सूत्रकृता विहितः स प्रकारः भामतीकृता दृष्टान्तमुखेन स्पष्टतया उन्मीलितः। तद्यथा- **''तमिममाक्षेपं भगवान् सूत्रकारः परिहरति – 'जन्माद्यस्य यतः' इति। माभूदनुभूयमानं जगत्तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं, तदुत्पत्त्या तु भविष्यति, देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः''** इति।

ब्रह्मणः लक्षणम् उपस्थापयितुम् प्रवृत्ते सूत्रे पदत्रयं विद्यते- १) जन्मादि इति प्रथमान्तम्, २) अस्य इति षष्ठ्यन्तम्, ३) यतः इति तसिलन्तम् अव्ययपदम्। 'जन्मादि' इत्यत्र तद्गुणसंविज्ञानः बहुव्रीहिसमासः। तद्यथा- जन्म आदिः अस्य इति जन्मस्थितिभङ्गानां समासार्थता भवति। श्रुतिनिर्देशं वस्तुवृत्तञ्च अपेक्ष्य जन्मनः आदित्वम् अभिप्रेतं भवति। 'अस्य' इत्यत्र प्रत्यक्षादि-परिगृहीतस्य धर्मिणः = जगतः इदमा निर्देशः। जन्मादि-धर्म-सम्बन्धबोधिका षष्ठी-विभक्तिः। यतः इति च कारणनिर्देशः।

एवञ्च **यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति** इति वेदान्तवाक्यकुसुमग्रथनार्थं प्रवृत्तस्य ब्रह्मलक्षणप्रतिपादकस्य 'जन्माद्यस्य यतः' इति सूत्रस्य अयमर्थः सम्पद्यते- **''अस्य जगतो नामरूपाभ्यां व्याकृतस्य, अनेककर्तृभोक्तृसंयुक्तस्य, प्रतिनियतदेशकालनिमित्त-क्रियाफलाश्रयस्य, मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद् भवति, तद् ब्रह्मेति वाक्यशेषः''**।

श्रुतिमूलकं सूत्रात्मकमिदं ब्रह्मणः तटस्थलक्षणम्। लक्ष्यवृत्तित्वे सति लक्ष्येतरव्यावर्तकं तटस्थलक्षणम् भवति। यत्तु लक्ष्यस्वरूपं भवल्-लक्ष्येतरव्यावर्तकं भवति तत्स्वरूपलक्षणम् उच्यते। यतो वा इमानि इत्यादि- तैत्तिरीयश्रुत्या तटस्थलक्षणलक्षितस्य ब्रह्मणः स्वरूपलक्षणं निर्णयात्मकश्रुत्या उपसंहाररूपेण प्रतिपादितम् - **''आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ति''** इति। सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, इत्यादिकं स्वरूपलक्षणबोधकं श्रुतिवाक्यमपि ब्रह्मणः स्वरूपम् उज्ज्वलयतीति शम्।

**अध्यासः**

मिथ्याज्ञानम् अध्यासः। तन्निमित्तः लोकव्यवहारो भवति- अहमिदं, ममेदमिति। तत्र अध्यासस्य किं लक्षणम्, यन्निमित्तकः अनादिः लोकव्यवहारः प्रचलति इति जिज्ञासा तत्समाधानञ्च भगवता भाष्यकृता वितत्य विहितम्। तद्यथा- **''आह कोऽयमध्यासो नामेति। उच्यते - स्मृतिरूपः परत्र पूर्वदृष्टावभासः** इति। अस्यार्थः- भामतीकृता विशदीकृतः। तथाहि- **''अवसन्नः अवमतो वा भासः अवभासः''** इति। भासस्य अयमेव अवसादः अवमानो वा यदसौ प्रत्ययान्तरेण बाध्यते। तदेवं मिथ्याज्ञानस्य अन्वर्थं नामधेयं विद्यते अवभास इति। उपव्याख्यानार्थं पूर्वदृष्टप्रभृति पदमुपादीयते। आरोपे अधिष्ठानस्य आपेक्षिकं सत्यत्वं भवति आरोप्यस्य तु अनृतत्वम्। यथा सत्ये शुक्तिकादौ परत्र पूर्वदृष्टस्य रजतस्य अवभासः अध्यास इति वा मिथ्याज्ञानम् इति वा अभिधातुं शक्यते। तच्च अनिर्वचनीयम्। यदुक्तम् भामतीकृता- **''तत्र पूर्वदृष्टं स्वरूपेण सदपि आरोपणीयतया अनिर्वाच्यम् इति अनृतम्''**इति।

अत्र आशङ्का जागर्त्ति, परत्र पूर्वदृष्टावभासः इति अध्यासलक्षणम्, इदं रजतम् इति मिथ्याज्ञाने कामं समन्वेति परम् अस्य अतिव्याप्तिः समीचीने प्रत्ययेपि लक्षणसमन्वयात् कथं निवार्यताम्। तदिदमुक्तम्- ''**परत्र पूर्वदृष्टावभास इत्यलक्षणम्; अतिव्यापकत्वात्। अस्ति हि स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासः, अस्ति च पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासः समीचीनः। अवभासपदं च समीचीनेऽपि प्रत्यये प्रसिद्धम्, यथा – नीलस्यावभासः पीतस्यावभास इति**''।[१] एनामेव अतिव्याप्तिं वारयितुं भगवता भाष्यकृता अध्यासलक्षणे **'स्मृतिरूपः'** इति अवभास- विशेषणपदमुपात्तम्। अस्यार्थः- स्मृतेः रूपम् इव रूपं यस्य असौ स्मृतिरूपः। अर्थात् स्मृतिः असन्निहितविषया भवति यथा तथा अवभासोऽपि तादृश एव ग्राह्यः। एवञ्च पूर्वोक्तधर्म्यध्यासे धर्माध्यासे वा प्रत्यभिज्ञात्मके न असन्निहितविषयत्वं प्रत्युत सन्निहितविषयत्वमेवेति नातिव्याप्तिः। स्वप्नज्ञाने पीतः शङ्खः तिक्तो गुडः प्रतिबिम्ब-विभ्रमः द्विचन्द्रविभ्रमः दिङ्मोहः अलातचक्रं गन्धर्वनगरं वंशोरगादिविभ्रमस्थलञ्च अध्यासलक्षणेन युज्यते इति नाव्याप्तिः। एवञ्च अतिव्याप्त्यादि-दोषत्रितयराहित्याद् निर्दुष्टमिदम् अध्यासलक्षणं संगच्छते।

**ख्यातिपञ्चकम्**

अथ ख्यातिपदार्थो विचार्यते। तत्र धातूनामनेकार्थत्वात्ख्यातिरिति भ्रमज्ञानमभिप्रेयते सर्वेषु दर्शनेषु। स्वस्वदर्शनानुसारेण च भ्रमविषयपदार्थान् व्यवस्थापयितुं सर्वेऽपि ख्यातिवादाः प्रवृत्ताः। तत्र ख्यातिभेदा बहवः तत्तत् शास्त्रकृत्परिकल्पिताः सन्ति; येषु पञ्च प्रमुखा भवन्ति।

---

१. अध्यासभाष्यम्, भामती।

## अन्यथाख्यातिः

नैयायिकवैशेषिकाः 'इदं रजतम्' इत्यादि-भ्रमम् अन्यथाख्यातिं मन्यन्ते। शुक्तिकाया रजतत्वेन भानमिति यावत्। अन्यत्र सतो रजतस्य तादात्म्यसम्बन्धेन ज्ञानलक्षणाप्रत्यासत्त्या शुक्तिकायाम् अलौकिकचाक्षुषप्रत्यक्षम् अभिमतं तेषाम्।

अन्यथाख्यातिवादिनस्तु **''यत्र यदध्यासः तस्यैव विपरीतधर्मत्वकल्पना-माचक्षते''**। अयमर्थः- यत्र शुक्तिकादौ यस्य रजतादेः अध्यासः तस्यैव शुक्तिकादेः विपरीतधर्मत्वकल्पनां रजतत्वधर्मकल्पनाम् आचक्षते इति। अयं भावः। पुरोवर्तिनि रजतमिदम् इति सामानाधिकरण्येन व्यवहारः तथा प्रवृत्तिरपि अस्ति इति तावद् असन्दिग्धम्, तथा चैतद्द्वयं संसर्गग्रहं विना भेदाग्रहमात्रान्न भवितुमर्हति, सर्वोऽपि हि चेतनस्य व्यवहारो ज्ञानपूर्वक एव दृष्टो न त्वज्ञानपूर्वक इति। चेतनव्यवहारत्वादेव भ्रमस्थलीयचेतनव्यवहारोऽपि संसर्गज्ञानपूर्वक एव युक्तो न तु अख्यातिपूर्वकः।

## अख्यातिः

प्राभाकराणान्तु अख्यातिरभिप्रेता। **''यत्र यदध्यासः तद्विवेकाग्रहनिबन्धनो भ्रम'' इति**। तथा हि इदं रजतम् इति ज्ञानद्वयम्। तत्र आद्यं प्रत्यक्षं द्वितीयं तु स्मरणम्। तयोः तद्-विषययोश्च विवेकाख्यातिबलाद् भ्रमत्वव्यवहारः प्रवृत्त्यादिश्च, न तु संसर्गज्ञानं भ्रमात्मकमस्ति, तथा सति सर्वविज्ञानानाम् अनाश्वासप्रसङ्गात्। अस्यार्थः - यस्मिन् शुक्त्यादौ यस्य रजतादेः अध्यासः तयोः तज्ज्ञानयोश्च यो विवेको भेदस्तदग्रहनिबन्धनः तज्ज्ञानाभावप्रयुक्तो भ्रमः तद्व्यवहारः इति। प्रयोगाश्च तेषाम्। विमताः प्रत्यया यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवत्। संसर्गज्ञानपूर्वकत्वञ्च भ्रमस्थले प्रवृत्त्यादेर्न स्वीक्रियतेऽत्र, किन्तु भेदाग्रहपूर्वकत्वमेव।

## आत्मख्यातिः

अध्यासः सर्वेषां परीक्षकाणां सम्मतः, किन्तु तद्भेदे विप्रतिपत्तिः; तथाहि - **''तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति''**। अयमर्थः- वस्तुतो ज्ञानधर्मस्य ज्ञानाकारस्य रजतस्य अन्यत्र बाह्ये शुक्तिकादौ अध्यास इति। इयञ्च विज्ञानवादिनां बौद्धानां सौत्रान्तिकवैभाषिकयोश्च आत्मख्यातिरुक्ता; तैः क्षणिकविज्ञानस्यैव आत्मत्व-स्वीकारात्। शुक्तिरूप्यादेश्च विज्ञानाकारत्वाभ्युपगमात्। तथा हि विमतं रजतं बुद्धिरूपं संप्रयोगमन्तरेणापरोक्षत्वाद् बुद्धिवत्। संस्कारसामर्थ्याच्च विज्ञानस्य रजताकारः। ततश्चान्तरं विज्ञानमेव रजताकारेण पुरोवर्तित्वेन गृह्यते। अत एव 'नेदं रजतम्' इति बाधकप्रत्ययेन पुरोवर्तित्वस्यैव निषेधो न तु रजतस्य।

## असत्ख्यातिः

असत्ख्यातिस्तु सर्वशून्यतावादिनो बौद्धस्य माध्यमिकस्य। तेन विज्ञानस्यासद्-भासकत्वेनासत्पक्षपातित्वनियमस्वीकारात्। सत्ख्यातिवादिनो हि सर्वेऽपि प्रकाशमान-

त्वमात्रमेव हि वस्तूनां सत्त्वं स्वीकुर्वन्ति, ततश्च भासमानस्य सर्वस्यैव सत्त्वप्रसङ्ग इत्यसत्ख्यात्यवतारः।

## अनिर्वचनीयख्यातिः

अनिर्वचनीयख्यातिस्तु अद्वैतिनाम्। असत् चेत् शुक्तिरूप्यं शशशृङ्गादिवन्न प्रतीयेत, सत् चेत् आत्मवन्न बाध्येत, सदसत्त्वं त्वेकस्य व्याहतमिति सर्वथाऽनिर्वचनीयमेव रूप्यं शुक्त्यवच्छिन्नचैतन्ये विवर्तते इति।

सतीष्वपि प्राङ्निरूपितासु विविधासु ख्यातिषु श्रीशङ्करभगवत्पादैः प्रधानमल्लनिबर्हणन्यायेन चतस्र एव ख्यातयो निराकृताः, इतरख्यातीनां निराकर्तव्यख्यातिवादिभिरेव निराकृतत्वादिति। अत एव सम्प्रदायविद्भिः ख्याति-पञ्चकमेवोक्तम्-

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।**
**तथाऽनिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्।।**

तदेतद् विज्ञान-शून्य-मीमांसा-तर्काद्वैतविदां मतम्प्रथते।

ख्यातिचतुष्टयलक्षणानि प्रदर्श्य भाष्यकृद्भिः भगवत्पादैः अनिर्वचनीयख्यातिरेव पोषिता; **''सर्वथाऽपि तु अन्यस्यान्यधर्मकल्पनां न व्यभिचरतीति''**। व्याख्यातञ्च श्रीवाचस्पतिमिश्रैः **'अन्यस्यान्यधर्मकल्पनाऽनृतता सा चानिर्वचनीयतेत्य-धस्तादुपपादितम्। तेन सर्वेषामेव परीक्षकाणां मते अन्यस्य अन्यधर्मकल्पना अनिर्वचनीयता अवश्यंभाविनीत्यनिर्वचनीयता सर्वतन्त्राविरुद्धार्थ इत्यर्थः'** इति।

## शास्त्रप्रमाणकं ब्रह्म

'जन्माद्यस्य यतः' इति द्वितीयसूत्रे जगद्योनित्वाद् ब्रह्मणः सर्वज्ञता प्रतिपादिता। शास्त्रयोनित्वाद् अपि भगवतः सर्वज्ञता सिद्ध्यतीति **शास्त्रयोनित्वादिति** तृतीयसूत्रेण बोध्यते। योऽयं महान् ऋग्वेदादिः स अनेकविद्यास्थानोपबृंहितः, स्पष्टतया सर्वथा सर्वम् अर्थजातम् अवबोधयति। अतएव वेदात्मकं शास्त्रं सर्वज्ञ-सदृशम् उच्यते। अस्यापि योनिः = कारणं ब्रह्म विद्यते तथा च यतः वेदाख्यशास्त्रस्य सर्वज्ञानाकरस्य लीलयैव पुरुषनिःश्वासवद् महतो भूताद् ब्रह्मणः योनेः कारणात् सम्भवः = उत्पत्तिः जायते अतः तस्य महतो भूतस्य ब्रह्मणः सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सिध्यति।

शास्त्रयोनित्वाद् इत्यत्र योनिशब्दस्य कारणम् अर्थः यदा परिगृह्यते तदा उपर्युक्तं व्याख्यानं प्रथमवर्णकं भाष्यकृता प्रोक्तम्। यदा तु योनिशब्दस्य प्रमाणम् इत्यर्थः परिगृह्यते तदा तु द्वितीयं वर्णकं भाष्यकृता प्रतिपादितम्। तद्यथा-''शास्त्रं = ऋग्वेदादि,

योनिः = प्रमाणम् अस्य ब्रह्मणः यथावत् स्वरूपाधिगमे। किं तत् शास्त्रं यद् ब्रह्मण; स्वरूपाधिगमे प्रमाणं भवति इति जिज्ञासायाम् उक्तम्- **''यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति''** इति। यद्यपि यतो वा इमानि इत्यादि श्रुतिवाक्यं भगवता भाष्यकारेण जन्माद्यस्य यतः इति सूत्रेऽपि व्याख्यानार्थम् उद्धृतं किन्तु तत्र केनचिद् अयमभिप्रायः ग्रहीतुं शक्यते यद् अनुमानेन प्रमाणेन ब्रह्मणः प्रमितिर्भवतीति। अतः शास्त्रयोनित्वाद् इति सूत्रमारभ्य 'शास्त्रप्रमाणकं ब्रह्म' इति द्रढयितुं ब्रह्मणः औपनिषदत्वं दृढीक्रियते।

इदमत्र ध्येयं; नैयायिकैः 'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवत्' इत्याद्यनुमानेन प्रमितस्य ईश्वरस्य आगमसमर्थितत्वं प्रोच्यते 'द्यावाभूमी जनयन्देव एकः' इत्यादि-वाक्यपुरस्कारेण। औपनिषदैस्तु ब्रह्मणः श्रुतिप्रमाणकत्वं प्रतिपाद्य अनुमानप्रमाणप्रमितत्वमपि पश्चात् प्रसाध्यते। तं चैनमर्थं स्फुटीकुर्वता भामतीकृता प्रोक्तम्- **''पूर्वेण अधिकरणेन (जन्माद्यधिकरणेन) ब्रह्मस्वरूपलक्षणा-सम्भवशङ्कां व्युदस्य लक्षणसम्भव उक्तः। तस्यैव तु लक्षणस्य अनेन (शास्त्रयोनित्वाधिकरणेन) अनुमानत्वाशङ्काम् अपाकृत्य आगमोपदर्शनेन ब्रह्मणि शास्त्रं प्रमाणमुक्तम्''** इति।

अन्तःकरणनानात्वात् तदुपाधिकजीवनानात्वम् इव अविद्यैक्यात् तदुपाधिक-जीवैकत्वम् अपि सङ्गच्छते। एतेन प्रतिकर्मव्यवस्थापि उपपद्यते । शुद्धसत्त्वप्रधाना माया इत्युच्यते मलिनसत्त्वप्रधाना अविद्येति । उभयत्र व्यामोहजनकत्वं समानं भवति । इह जीवब्रह्मणोः अभेद इष्यते। यतो हि उपक्रमोपसंहारादि-षड्विधतात्पर्यग्राहकैः लिङ्गैः श्रुतेः अद्वैते ब्रह्मणि तात्पर्यमवसीयते। यदुक्तम् —

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।।इति।** [१]

## आभासावच्छेद-प्रतिबिम्बसिद्धान्ताः-

मायामाश्रित्य पुष्यमाणस्य अद्वैतस्य उपपत्तये विवरणकृतः प्रतिबिम्बसिद्धान्तम् आतिष्ठन्ते, वार्तिककृतः आभाससिद्धान्तम्, भामतीकृतस्तु अवच्छेदसिद्धान्तम्।

तमेव विदित्वा अतिमृत्युमेति, नान्यः पन्था विद्यते अयनाय [२] इत्यादिश्रुत्या ब्रह्मात्मसाक्षात्कारेण बन्धो विलीनतां याति मुक्तिश्चावाप्यते। परम् एषा अद्वैतवासना ईशानुग्रहं विना दुर्लभा भवति। यदुक्तम्-

---

१. अ० र० र०, पृ. ४८.

२. श्वेताश्व., ६/१५,३१८.

**ईश्वरानुग्रहादेषा पुंसामद्वैतवासना।**
**महाभयकृतत्राणा द्वित्राणां यदि जायते।।**[१]

**जगतोऽभिन्ननिमित्तोपादानं ब्रह्म–**

सोऽयं मिथ्याभूतः प्रपञ्चः अविद्यायाः परिणामो भवति ब्रह्मणस्तु विवर्तः। अत एव एतन्नये अभिन्ननिमित्तोपादानकत्वं ब्रह्मणः स्वीक्रियते। तदुक्तम्-

**'कारणसलक्षणोऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्तः।'**

**विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः।**
**अनादिवासनोद्भूतो न सारूप्यमपेक्षते।।**[२]

ज्ञानं ब्रह्मरूपमेव न तु तद्धर्मः । श्रुतिषु ज्ञानसुखाभिन्नत्वस्य ब्रह्मणि प्रतिपादनात्; **'विज्ञानमानन्दं ब्रह्म'**[३] **'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्'**[४] **'अत्रायं पुरुषः स्वयं ज्योतिर्भवति'**[५] **'विज्ञानघन एव'**[६] **'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते'**[७] **'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्**[८] **'भारूपः सत्यसङ्कल्पः'**[९] इत्यादि।

**श्रुतिभिन्नानां तु व्यावहारिकं प्रामाण्यम्–**

अत्र यद्यपि प्रत्यक्षादीनि षट् प्रमाणानि स्वीक्रियन्ते तथापि श्रुतिभिन्नानां प्रत्यक्षादिप्रमाणानां द्वैतग्राहित्वाद् व्यावहारिकं प्रामाण्यम् इष्यते । ततश्च विरोधपरिहारः सुकरः। अयमाशयः- घटः सन् पटः सन्नित्येवं प्रत्यक्षेण द्वैतसत्यत्वं प्रमीयते। नेह नानास्ति किञ्चन[१०] इत्यादिश्रुत्या तु द्वैतप्रपञ्चस्य अद्वैतब्रह्मणः अतिरिक्ततया सत्यत्वं प्रतिषिध्यते। तदनयोः श्रुति-तदितरप्रमाणयोः विरोधपरिहाराय अद्वैतश्रुत्यनुगुणं व्यावहारिकप्रामाण्यमेव प्रत्यक्षादीनां स्वीक्रियते।

---

१. ख० ख० खा० १/२५
२. सि.ले.सं., पृ. ३१.
३. बृहदा. ३/९/२८.
४. तैत्तिरी. २/७.
५. बृहदा. ४/३/९.
६. बृहदा. २/४/१२.
७. तैत्तिरी. ३/६.
८. तैत्तिरी. २/१/१.
९. छान्दो. ३/१४/२.
१०. बृहदा. ४/४/१९.

**मोक्षस्वरूपम् –**

एतन्मते मोक्षो नाम अविद्यानिवृत्त्युपलक्षितः आनन्द इत्यभ्युपगम्यते। अविद्याया निवृत्तिः आत्मतत्त्वज्ञानेन भवति[१]। यदुक्तम्;

**अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।**
**निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः।।**[२]

सत्यामविद्यानिवृत्तौ तु आत्मस्वरूपभूतः आनन्दः स्वयमेव प्रकाशते। आनन्दस्य आत्मरूपत्वे प्रमाणं तु श्रुतिरेव- **विज्ञानमानन्दं ब्रह्मेति**[३]। सिद्धान्ते अभावानामधिकरणात्मकत्वं स्वीक्रियते। अतएव अविद्यानिवृत्तिरपि आत्मस्वरूपानतिरिक्तैव भवतीति अविद्यानिवृत्तिमादाय द्वैतापत्तिर्नापद्यते।

**जीवन्मुक्तिः–**

**न तस्य प्राणा उत्क्रामन्ति**[४]**, विमुक्तश्च विमुच्यते**[५]**, 'अत्र ब्रह्म समश्नुते**[६]**'** इति च श्रुत्या प्राप्तब्रह्मसाक्षात्कारस्य अशरीरभावसहकृता जीवन्मुक्तिः प्रतिपादिता भवति।

**जीवब्रह्मणोरभेदः–**

अद्वैतवादे जीवः ब्रह्मणोऽनन्यः सर्वव्यापी विभुरास्थीयते। यतो हि श्रुतिषु अविकृतस्यैव परमात्मनः शरीरे प्रवेश आम्नायते, अथ च मुक्तस्य ब्रह्माभेदः प्रतिपाद्यते। तद्यथा- **'तत्सृष्ट्वा तदेवानुप्राविशत्'**[७]। **'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' इति**[८]। **'ब्रह्म वेद ब्रह्मैव भवतीति'** च[९]।

---

१. शा० भा०, भामती, २१

२. अ० र० र०, पृ. ५५

३. बृहदा. ३/९/२८.

४. बृहदा. ४/४/६.

५. कठोप. २/२/१.

६. कठोप. २/६/१४.

७. तैत्तिरी. २/६.

८. तैत्तिरी. आर. ३/१२/७.

९. मुण्डको. ३/२/९.

ननु जीवस्य विभुत्वाङ्गीकारे तस्य उत्क्रान्तिगत्यागतयः कथमुपपद्येरन्- इति जिज्ञासायाः समाधानं भगवता ब्रह्मसूत्रकृता 'उत्क्रान्तिगत्यागतीनाम्' [1] इति सूत्रे विहितम्। प्रपञ्चितं चैतद् भगवता भाष्यकृता, भामतीकृत्प्रभृतिभिश्चेति [2] शम्।

सोऽयम् अद्वैतवादः जगत्प्रपञ्चं न्यक्कृत्य वेदान्तिसिद्धान्ते प्रतिष्ठाप्यते।

**आगमिकः स्वातन्त्र्यमूलोऽद्वैतवादः-**

**योऽनुत्तरः परःस्पन्दो यश्चानन्दः समुच्छ्वसन्।**
**ताविच्छोन्मेषसंघट्टाद् गच्छतोऽतिविचित्रताम्।।**

**अनुत्तरानन्दचिती इच्छाशक्तौ नियोजिते।**
**त्रिकोणमिति तं प्राहुर्विसर्गामोदसुन्दरम्।।** [3]

अथ ईश्वराद्वैतवादः सर्वाभ्युपगममुखेन व्यवहारोपपत्तिमङ्गीकुर्वतां भोगश्च मोक्षश्च करस्थ एवेति आगमिनां स्वातन्त्र्यसिद्धान्तः पुरस्क्रियते। तद्यथा-पराख्यसूत्रे सुस्पष्टमुच्यते शिवात्प्रवृत्तस्य ज्ञानस्य आत्मभेषजरूपता-

**ज्ञानमेतत् शिवक्ष्मोत्थं संगृहाणात्मभेषजम्।**
**परिणामसुखं स्वादु विशेषगुणदर्शनम्।।इति।** [4]

अयमेवार्थः शिवधर्मोत्तरेपि समर्थ्यते-

**व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः।**
**तद्वत्संसारदोषाणां प्रतिपक्षः शिवः स्मृतः।।इति।** [5]

---

१. ब्र० सू०, २/१/१९.

२. सूत्रेष्वेव हि तत्सर्वं यद् वृत्तौ यच्च वार्तिके ।
सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम् ॥ त. वा० २/३/११

३. श्रीत.आ. ३/९३-९४.

४. पराख्यसूत्रम्, द्र.
तारं सुतारं तरणं तारकं च प्रमोदकम्।
प्रमुदितं रम्यकं च सदा प्रमुदितं तथा।।
एतज्ज्ञानं समाख्यातं समासात्परमेश्वर।।३।। स्व.तं., ११/१४६-१४७.

५. शिवधर्मोत्तरम्, द्र.-
साकल्येन पुनर्ध्वस्ते शिवता सर्वभासिनी। पू.प्र.का. १/१५८.

शिवात्प्रवृत्तस्य आगमज्ञानस्य अमृतरूपता सुखप्रदता च समर्थिता ज्ञानधर्मोत्तरे-

**शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम्।।इति।** [१]

**पदार्थत्रयम्–**

आगमिकसिद्धान्तसमर्थने त्रयाणां पदार्थानाम् अवधारणा विधीयते। पतिः पशुः पाश इति च। यत्र च स्रोतोभूतं मृगेन्द्रागमवचनं विश्वसारोत्तरसूत्रं चास्ते। [२]

तत्र पतिः शिवः, सचैकोऽनादिरनन्तश्च बन्धमुक्तिव्यवस्थामुत्तीर्णः। अणुसंज्ञिताः प्राणिनः पशुपदेनोच्यन्ते। येन पाशितः पशुर्भवति स पाशः पञ्चविधः- मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति।

**पतिः शिवः–**

शैवागमे पतिपदार्थो भगवान् शिवः। एष एव मायादेरचेतनस्यापि प्रवर्तकः आस्ते। समग्रां सृष्टिमसावेव तनुते। यदुक्तम्-

**अचेतनस्य मायादेः प्रवर्तकतया पतिः।**
**सिद्धः सर्वार्थकृत् कर्त्ता व्यापकः सततोदितः।।इति।** [३]

**सृष्टिरूपकार्यस्य कर्तृत्वं पत्युरेव, न पशोर्नापि पाशस्य इति।** [४]

असौ पतिः सर्वज्ञः, अनादिः, मलवर्जितः शिवसंज्ञश्च राराजते। ज्ञानशक्त्यासौ सर्वं विजानाति अथ च क्रियाशक्त्यासौ जगद् विरचयति।

**जगत्कर्त्तुः देहराहित्यम् –**

यद्यपि जगतः कर्त्ता शिवः शरीरं धृत्वा प्रपञ्चं निर्माति इति प्रतिभाति अथापि तस्य भौतिकशरीरसम्बन्धः नोचितः। ततश्च बैन्दवं तदीयं शरीरम् अभ्युपगन्तव्यम् इति चेद्। अत्रोच्यते; शिवशरीरं बिन्दूपादानकं चेदभ्युपगम्यते तर्हि बिन्दौ क्षोभं विना तस्योपादानता नोपपत्तिमञ्चति। अथ क्षोभः स्वत इष्यते शिवतो वा? स्वतः क्षोभस्वीकारे

---

१. ज्ञानधर्मोत्तरम्, द्र.- (क) शिवज्ञानं यतो देवि सदैवाप्तागमः स्मृतः।
   ने.तं., १६/८१-८२.
   (ख) शिवज्ञानं रुद्रशक्ति-समावेशः।। ने.तं.,३०, ख-२, पृ. ४५.

२. विश्वसारोत्तरसूत्रम्, द्र.- शासनरोधनपालनपाचनयोगात् स सर्वमुपकुरुते।
   तेन पतिः श्रेयोमय एव शिवो नाशिवं किमपि तत्र।। श्रीत.आ., १/१०४.

३. वायवीयसंहिता- ईश्वरो हि परो देवो ......सर्गायेह प्रवर्तते। सू. २०.

४. पौष्करसंहिता, द्र. तेन कर्तृत्वं शुद्धस्वातन्त्र्यरूपं पूर्णमिह समर्थनीयम्।
   ई.प्र.वि.वि., खण्ड-१, पृ. २०९.

आत्माश्रयो नाम दोषः। शिवतः क्षोभस्वीकारे तु क्षोभक्रियां प्रति शिवशरीरमभ्युपेयम्। तदर्थसाधको बिन्दुरुपादानभूतः स्वीकार्यः। तत्रापि उपादाने क्षोभक्रियार्थं पुनः शरीरान्तरकल्पना आवश्यकीति एवं क्रमेण अनवस्था दुरवस्था भवेत्।

यद्युच्यते सृष्ट्यर्थं स्वीकृते शरीरे अचलमूर्तिकृतः क्षोभ इष्यते न शरीरान्तरमपेक्ष्यते इति तर्हि **अन्ते रण्डाविवाहश्चेदादावेव कुतो नही**ति न्यायेन जगतः सृष्ट्यर्थं शरीरावधारणमपि वृथैव, अचलमूर्त्तेरिव परमेश्वरस्य सृष्टिक्रियास्वपि शरीरं विनैव कारणत्वोपपत्तेरिति।

अतश्च यथा स्वशरीरस्पन्दादौ आत्मनः कर्तृत्वं भवति स्वातन्त्र्येण तथा सृष्ट्यादिक्रियास्वपि शरीरं विनैव कारणत्रितयराहित्येन प्रभोः शिवस्य कर्त्तृत्वं न नोपपत्तिमञ्चति। एतत् सिद्धान्तसमर्थनाय उक्तमपि-

**अदेहस्यापि कर्त्तृत्वं स्वदेहप्रेरणे यथा इति।** [१]

## जगत्कर्त्तुः करणराहित्यम्–

यथा च शरीरं विनैव प्रभोः जगत्कर्त्तृत्वं न विरुध्यते तथैव इन्द्रियाणां शरीराधिष्ठानकतया इन्द्रियाभावोऽपि ईश्वरस्य। पश्यत्यचक्षुरित्यादिश्रुतेः। करणस्य सकर्तृकत्वमवश्यमभ्युपेतव्यम्, न तु कर्त्तुः सकरणकत्वमवश्यमभ्युपेयम्। अत एव अयस्कान्तमणिः कर्त्तृभूतः लोहाकर्षणक्रियायामक्षरहितोपि न न प्रभवति। एवञ्च नेदमनुमानं पत्युः जगत्कर्त्तृत्वे करणसापेक्षतामनिवार्यां साधयितुं पर्याप्तम्- 'पतिकर्त्तृका जगदुत्पत्त्यादिक्रिया यत्किञ्चित्करणावश्यसापेक्षा क्रियात्वात् छिदादिक्रियावदिति। यथा च कालस्य न शरीरं न वा किञ्चिदिन्द्रियमथापि तस्यामूर्तस्य जन्यमात्रं प्रति कर्त्तृत्वं सर्वशास्त्राविरुद्धमिष्यते तथैवामूर्तस्यापि जगत्कर्तुः शिवस्य शरीरेन्द्रियादिकं विनैव केवलम् इच्छाशक्त्या करणभूतया जगदुत्पत्त्यादि-क्रियासम्पादकत्वमिष्यताम्। यदुक्तम्-

**यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः।**
**एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया।।** [२]

विश्वसिद्धौ स्वतन्त्रस्य शिवस्यैव हेतुता विद्यते। यदुक्तम्- 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' इति [३] 'नर्तक आत्मा' इति च।

---

१. सा० सु० पृ. ३४, वर्ष ३९, अङ्क १-४

२. किरणसूत्रम्, द्र. एवं सर्वगतो देवः शिवः परमकारणम्।।
स्व.तं., ११/३६.

३. प्र० हृ० सू० १.

**स्वप्ने यथैकदेहस्थोऽनेकदेहं प्रपश्यति।**
**पुत्रान् यथा पितानेकान् तथा पश्यञ् शिवःस्थितः।।** [1]

**शैवागमे स्वातन्त्र्यमूलिका प्रतिबिम्बवादावधारणा–**

सांख्यदर्शने प्रकृतेः परिणामभूतं जगत् सैव च कर्त्री इति परिणामवादस्य अवधारणा विद्यते। इयमेव अवधारणा सिद्धान्त-शैवमते आद्रियते। अतएव श्रीकण्ठाचार्येण विवर्तवादस्य खण्डनं युक्त्या विधाय परिणामवादस्य मण्डनं विहितम्। समसत्ताककार्यापत्तिर्विकारः इति परिणामलक्षणं जागर्ति अथ विषमसत्ताक-कार्यापत्तिर्विवर्त इति विवर्तलक्षणं चकास्ति। संवित्प्रकाशकृता भगवति शिवे जगतः उपादानकारणता विवर्तकारणता चाभ्युपगम्यते। उभयी येयं कारणता तस्य उपपत्तये भगवतः शिवस्य देहपरिग्रहोपि तेन समर्थ्यते। यदुक्तम् -

**विवर्तेऽप्यतथारूपस्तथा भासि त्वमच्युत।**
**परिणामे स एव त्वं सुवर्णमिव कुण्डले।।इति।** [2]

अत्रभवान् अभिनवगुप्तपादस्तु ईश्वरप्रत्यभिज्ञाविमर्शिन्यां विवर्तवादस्य परिणामवादस्य चावधारणां प्रत्याख्याति, स्वीकुरुते च स्वातन्त्र्याधारितां प्रतिबिम्बवादस्यावधारणाम्।

**पञ्चमन्त्रतनुः शिवः–**

ईशः, तत्पुरुषः, अघोरः, वामः अजश्चेति पञ्चभिः मन्त्रैः [3] पञ्चमन्त्रतनुः शिवः पञ्चकृत्यपरायणः जगतः स्वामी जयति। सृष्टिः, स्थितिः, ध्वंसः, तिरोभावः अनुग्रहश्चेति शिवस्य पञ्चकृत्यानि भवन्ति। एभिः शिवः जगतः सृष्टिं स्थितिं ध्वंसं च लीलया सम्पादयन् स्वरूपतिरोधानरूपं निग्रहं स्वरूपप्रथनरूपं प्रत्यभिज्ञानसंज्ञकम् अनुग्रहमपि विदधाति। यदुक्तम्-

**जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः।**
**कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि।।इति।** [4]

---

१. सं० स्वा०, ३६२.

२. संवित्प्रकाशः, द्र. (अभिनवस्य) गुरुणा वामनदत्ताचार्येण भाषितमिति संवित्प्रकाशे। तं.आ.वि., ३/४६७.

३. उद्धृ०- द० बि० सं०, पृ. ७८.
पञ्चमन्त्राः- सद्योजातं प्रपद्यामि, वामदेवाय नमः, अघोरेभ्योऽथ घोरेभ्यः, तत्पुरुषाय विद्महे, ईशानः सर्वविद्यानाम्'।

४. उद्धृ०- सा० सु० पृ. ३४, वर्ष ३९, अङ्क १-४.

**स्वातन्त्र्यशक्तिः मुख्यमैश्वर्यम् –**

आगमे परमोपादेयं मुख्यं तत्त्वं परमाद्वैतभूतम् आस्ते परशिवः। सोऽयं चिद्घनः संवित्स्वभावो विलसति। स्वातन्त्र्यं तदभिन्ना शक्तिः। तदिदं परमात्मनो मुख्यमैश्वर्यम्। सैवेयम् आनन्दशक्तिः। यदुक्तम् —

**तयोर्यद् यामलं रूपं स सङ्घट्ट इति स्मृतः।**
**आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते।।इति।** [१]

**आनन्दः स्वातन्त्र्यम् इति च।** [२]

स्वातन्त्र्यं नाम विमर्शः, चित् , चैतन्यं, स्फुरत्ता, सत्ता, सारः, हृदयं, स्पन्दः, शक्तिदशा, स्वरसोदिता, प्रतिभा, परावाग् इति च उच्यते। यदुक्तम् -

**न शिवेन विना देवी न देव्या च विना शिवः।**
**नानयोरन्तरं किञ्चित् चन्द्रचन्द्रिकयोरिव।।**

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शिवः शक्तस्तथाभावान् इच्छया कर्तुमीहते।।**
**शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते।** [३]

गुप्तपादेन इयम् अनुत्तरा, कुण्डली, कौलिकीति चोच्यते। तद्यथा-

**अनन्यापेक्षिता यास्य विश्वात्मत्वं प्रति प्रभोः।**
**ताम्परां प्रतिभां देवीं सङ्गिरन्ते ह्यनुत्तराम्।।**

**अकुलस्यास्य देवस्य कुलप्रथनशालिनी।**
**कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः।।** [४]

सैषा समर्थिता भगवता उत्पलदेवेन-

**चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता।**
**स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः।।** [५]

---

१. श्रीत.आ. ३/६८.

२. द्र.स्वातन्त्र्यशक्तिः प्रथमा तदीया ह्यानन्दरूपेण विभासमाना। पू.प्र.का.१/५२.

३. शि० दृ० ३/२/३.

४. श्रीत. आ. ३/६६,६७.

५. ई.प्र. ११५/१३.

**सा स्फुरत्ता महासत्ता देशकालाविशेषिणी।**
**सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः।।**[१]

अनयैव शक्त्या शिवः परिचीयते। तत एवास्याः अभिधानं भवति शैवीमुखम् इति। यदुक्तम्—

**शक्त्यवस्थाप्रविष्टस्य निर्विभागेन भावना।**
**तदासौ शिवरूपी स्याच्छैवीमुखमिहोच्यते।।**[२]

**यथाऽऽलोकेनदीपस्य किरणैर्भास्करस्य च।**
**ज्ञायते दिग्विभागादि तद्वच्छक्त्या शिवः प्रिये।।**[३]

## निरपेक्षं जगत्कारणत्वं शिवस्य–

घटः कार्यम्, कुलालः निमित्तकारणम्, दण्डचक्रादिः सहकारिकारणम्, कपालः मृत्पिण्डो वा समवायिकारणमिति नैयायिकाः।[४] आगमिकाः जगत्प्रपञ्चं प्रति कार्यकारणभावं कथं व्यवस्थापयन्तीति चेदुच्यते। जगतः सृष्ट्यादिः कार्यम्, पतिपदार्थः निमित्तकारणम्, शक्तयोऽस्य स्वभावभूताः सहकारिकारणम्। बिन्दुस्तूपादानकारणमिति वितत्य प्रपञ्चितं पौष्करसंहितायाम् पराख्यसूत्रे[५] चेति शम्। आगमिकाः वेदान्तिवत् परमेश्वरस्य जगत्सृष्ट्यादिकं प्रति अभिन्ननिमित्तोपादानत्वं नाङ्गीकुर्वते।

## प्रकाश-विमर्शौ–

परमशिवः स्वस्वातन्त्र्यमहिम्ना स्वात्मन्येव स्वाभिन्नं विचित्रं विश्वं स्वस्माद् अन्योन्यं च भिन्नमिवोद्भासयति। वस्तुतः शक्तिशक्तिमतोरभेदेपि स्वात्मकवेद्यांश-प्राधान्यविवक्षायां विमर्शादिशब्देन वेदकांशप्राधान्यविवक्षायां तु तस्यैव प्रकाशशब्देन व्यवहारः। यथोक्तम्-

**अहमित्येकमद्वैतं यत्प्रकाशविमर्शनम्।**
**अकारः सर्ववर्णाग्र्यःप्रकाशः परमः शिवः।।**

---

१. ई.प्र. १/४५

२. वि० भै०, का. २०.

३. वि० भै०, का. २१.

४. प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता।। न्या.द.भा.- पृ. ३८.

५. उद्धृ०- सा० सु०, वर्ष ३९, अङ्क १-४, पृ. ३४.

**हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः।**
**अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम्।।** [१]

**स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।** [२]

**स्वच्छः स्वच्छन्दश्च प्रकाशः–**

विश्वं प्रतिबिम्बभूतं शक्तेः, स्वानधिकमपि अधिकमिवावभासयन् बोधसुन्दरो भगवान् विश्वभावप्रतिबिम्बसहिष्णुः प्रकाशः स्वच्छः स्वच्छन्दश्चेति विश्वरूपतया विश्वोत्तीर्णतया च प्रथते। प्रतिबिम्बस्वीकारादपि शिवो दर्पणवन्निर्मलः न तु समलः। बोधाभ्युपगत-चित्रज्ञानवत् एकानेकस्वरूपोपि बोधमहेश्वरः एक एव। एष प्रकाशः स्वचमत्कारसारः स्वेच्छया स्वात्मभित्तौ अभेदेन परामृशन् स्वसंविदुपादानमेव विश्वमाभासयति। विश्वस्य आभासनमेव निर्मातृत्वं भगवतः इति परामर्श एव दर्पणप्रकाशादेः अपेक्षया प्रकाशमहेश्वरस्य वैलक्षण्यं प्रतिपादयति। यदुक्तम्-

**अन्तर्विभाति सकलं जगदात्मनीह**
**यद्वद्विचित्ररचना मुकुरान्तराले।**

**बोधः पुनर्निजविमर्शनसारयुक्त्या**
**विश्वं परामृशति नो मुकुरस्तथा तु।।** [३]

**श्रीशुद्धाध्वपञ्चकम् –**

परमशिवः विश्वोत्तीर्णः विश्वात्मकश्चास्ते। प्रकाशैकघनस्यास्य अखिलमभेदेनैव स्फुरति। परमशिवाद् अन्यत् किमपि वस्तुतः ग्राह्यं ग्राहकं च नास्ति। इत्थं परमेश्वरापेक्षया स्वाङ्गनिर्मिते भावराशौ न काचिद् भेदभ्रान्तिः। मायाप्रमात्रपेक्षया तु योऽयं भेदावभासः, एषा पूर्णत्वाख्यातिरूपा भ्रान्तिः अपूर्णख्यातिः भेदप्रथा भवति। परमशिवस्य स्वस्वरूपरूपाः याः शक्तयः चिदानन्दैषणाज्ञानक्रियारूपाः शिवादितत्त्व-दशामधिशेरते- शिवः, शक्तिः, सदाशिवः, ईश्वरः शुद्धविद्या चेति। सर्वप्रमातृणाम् अन्तः पूर्णाहन्ताचमत्कारमयं सर्वतत्त्वोत्तीर्णं महाप्रकाशवपुः यच्चैतन्यम्, एतदेव शिवतत्त्वम्। चिद्रूपस्य विश्वं भवामीति परामृशतो विश्वभावस्वभावमयी संविदेव सर्वभावानां बीजभूमिः शक्त्यवस्था महेशस्य महाशून्यभूमौ अहमिदम् इत्यभेदेन पूर्णाहन्तामयः ज्ञानप्रधानः क्रियागौणश्चमत्कारः सदाशिवदशा। इदन्ताप्राधान्येन अहन्तागुणीकारेण अहम्-अहम्

---

१. उद्धृत. व्या० द० पी० पृ. ४९.

२. प्र०. हृ. सू. २.

३. द्र.विमलतमपरभैरवबोधात् तद्वद् विभागशून्यमपि।
अन्योन्यं ततोपि च विभक्तमाभाति जगदेतत्।।प.सा. का. १३.

इदमिदम् इति चमत्कारः बोधसारत्वाद् भगवतः विद्यातत्त्वम् शुद्धम्। तुर्यातीतम् अनुत्तरम् , तुर्यरूपतया तत्त्वपञ्चकतया गीयते। परमशिवः कर्त्ता, सदाशिवेश्वरभूमौ-अहमिदमिति प्रकाशः शुद्धवेदनरूपः करणम् , माया-धरान्ततत्त्वसर्गः कार्यमिति कर्तृकरणकार्यरूप एक एव स्वात्ममहेश्वरः विजृम्भते।

परमशिवस्य स्वातन्त्र्यशक्तिः ततो न भिद्यते सोऽयं परमाद्वैतवादः। यदुक्तम्- **'तथा तथा भासमानत्वमपि वस्तुतः न किञ्चिद् , अपितु तदभेदाख्यातिमात्रमेतदिति।** [१]

**'संवित्स्वभावः परमशिव एव भगवान् स्वातन्त्र्यादेव प्रकाशते' इति।** [२]

**'नानावैचित्र्यसहस्रैः स्फुरति' इति।** [३]

## पत्युः तिस्रः अवस्थाः –

शिवः जगदुत्पत्त्यादिवर्जितः शान्तो निष्कलः तिष्ठति। यथा-घटं प्रति वनस्थदण्डे योग्यता-रूपकारणता स्वीक्रियते तथैव निष्कले शिवे जगत्सृष्ट्यादि-करणयोग्यता। सेयं योग्यस्य शिवस्य 'शक्त' इति संज्ञा प्रथते।

या तु जगत्सृष्ट्यादिकं प्रति शिवस्य उन्मुखता भवति सेयं सदाशिवाख्या सकलनिष्कलावस्था। उन्मुखस्य शिवस्य च उद्युक्त इति संज्ञा प्रथते।

जगत्सृष्ट्यादिक्रियायां प्रवर्तमानस्य शिवस्य ईश्वराख्या स्थूलावस्था भवति। तत्र शिवस्य 'प्रवृत्त' इति संज्ञा प्रथते। यदुक्तम्-

**शक्तोद्युक्तप्रवृत्तश्चकर्त्ता त्रिविध उच्यते।**
**शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः।।इति।** [४]

## पशुर्जीवः–

न्यायदर्शने पदार्थस्य सप्तविधत्वं स्वीक्रियते। तत्र प्रथमः पदार्थः- द्रव्यम्। तच्च नवविधम्। यदुक्तम्;

---

१. श्रीत. आ. वि० नवमाह्निकम्।

२. विवृतिविमर्शिनी, द्र. इदमेव संवेदनस्य संवेदनत्वं यदेवंभूताभासनस्वातन्त्र्यमिति। ई.प्र.वि. खं. ३, पृ. २५.

३. प्र०.हृ. सू. ३.

४. मृ० सू०, द्र.
स्वातन्त्र्यमात्रसद्भावा या त्विच्छा शक्तिरैश्वरी।
शिवस्य सैव करणं तया वेत्ति करोति च।। श्रीत.आ., १०/१७.

**पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव इति।** [१]

तत्र अष्टमं द्रव्यम् आत्मा। स द्विविधो भवति। जीवः परमात्मा चेति। परमेश्वरः एकः सर्वज्ञश्च भवति। तद्भिन्नो जीवः प्रतिशरीरं भिन्नो भवति अथापि विभुरिति स्वीक्रियते। तदेवं जन्यज्ञानगुणाधिकरणं जीव इति नैयायिकाः। चैतन्यविशिष्टदेह एव आत्मेति चार्वाकाः। प्रतिक्षणं भिद्यमानो नश्वर आत्मेति क्षणभङ्गवादिनो बौद्धाः। शरीरव्यापी मध्यमपरिमाणो जीव इति जैनाः। एकस्यैवात्मनोऽस्तित्वं प्रतिप्राणिशरीरं भेदेन व्यपदिश्यते इति अद्वैतिनः। अणुपरिमाण इति विशिष्टाद्वैतिनोऽभ्युपयन्ति। सांख्यास्तु पुरुषाख्यस्य जीवस्य शुद्धबुद्धत्वं पुष्करपलाशवन्निर्लेपत्वं चाङ्गीकुर्वन्ति। तदीयप्रेरणां विनैव प्रकृतिकर्तृका सृष्टिर्भवति। यदुच्यते-

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।** [२]

तदेवं सांख्यनये पुरुषस्य न प्रेरकत्वं नापि प्रेर्यत्वं भवति। प्रकृतिश्च अव्यक्तनाम्नी न कस्यापि कार्यम्। अपितु सर्वकारणम् अनादिश्च। यदुक्तम्- **मूलप्रकृतिरविकृतिरिति।** [३]

**मूलप्रकृतिर्नाविकृतिः –**

परमेतद् आगमिभ्यो न रोचते। तथाहि- अव्यक्तं कार्यम् आचैतन्ये सति अनेकत्वात्। यद् आचैतन्ये सति अनेकं तत्सर्वं कार्यं, यथा घटः। यन्न कार्यं तदाचैतन्ये सति अनेकं न भवति। यथात्मा। आचैतन्ये सति अनेकं चाऽव्यक्तं तस्मात् कार्यमिति। यदुक्तम्-

**अचेतनमनेकात्म सर्वं कार्यं यथा घटः।**<br>**प्रधानं च तथा तस्मात् कार्यं नात्मा तु चेतनः।।** [४]

दृश्यमानं सम्पूर्णं जगत् सुखदुःखमोहात्मकं विद्यते विषमं चैतत्। कार्यरूपं चैतज्जगत् तादृशमेव हेतुं कल्पयेत्। स च हेतुः अव्यक्त इत्याख्यायते सांख्यैः। तदपि सत्त्वरजस्तमोमयं सुखदुःखमोहहेतुरवसीयते। तच्चाचेतनं नानारूपम्। अतएव घटादिवदसौ प्रकृतिरपि प्रधानाख्या कार्यमेव भवितुमर्हति। तत्र च हेतुः निशाख्या माया सिद्ध्यति। एतावता मूलप्रकृतिः विकृतिर्न भवतीति सांख्यराद्धान्तः अपास्तो भवति।

---

१. त० सं०, पृ. १.

२. सां० का० - ५७.

३. सां० का० - ३.

४. श्रीत.आ. ९.

**प्रत्यभिज्ञानये मायास्वरूपम् –**

अथ केयं माया इति चेदुच्यते-मीयते = परिच्छिद्यते धरान्तः प्रमातृप्रमेयप्रपञ्चः यया सा माया। मोहयति विश्वमिति वा माया।

**परमं यत्स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य।**
**देवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत्।।** [१]

माया-स्वीकारपारतन्त्र्यात् सर्वज्ञत्व-सर्वकर्त्तृत्वमयोऽपि बोधः सर्वज्ञत्वादि-गुणापहस्तनेन अख्यातिरूपम् आणवं मलमापन्नः घटाकाशवत् पूर्णरूपात् चिदाकाशाद् अवच्छेद्य परिमितीकृतः सन् पुंस्तत्त्वमुच्यते। सोऽयं मायायाः पाल्यः पाश्यश्च पशुः पाशानां [२] भाजनम्, तत्त्वषट्कवेष्टितं पुंस्तत्त्वम्-इत्याख्यायते।

तदेवं माया शैवागमे कलादिधरणीप्रान्तं यज्जगत् तत्प्रति उपादानकारणभूता स्वीक्रियते। किन्तु कलादीनां जनने अधिष्ठातृभूतेन ईश्वरेण मायादौ क्षोभः क्रियते। यदुक्तम्-

**तेनेशः क्षोभयेदेनां क्षोभोऽस्याः सूतियोग्यता। इति।** [३]

अत्रेदमवधेयम्- कलादीनां धरान्तानां कार्याणाम् उत्पत्तेः प्रागपि मायात्म-जड-कारणरूपेण सत्त्वमिष्यते। सोऽयं सत्कार्यवादः निभृतम् उपपादितः सांख्याचार्यैः।

**असदकरणादुपादानग्रहणात् सर्वसम्भवाऽऽभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।इति।** [४]

---

१. प.सा.का. २८.

२. घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी।
कुलं शीलं च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः।। कुला.त. १३/९०.

३. द्र. इह क्षोभः समाख्यातः संविन्निष्ठैव ज्ञेयता।
क्षोभणापि च सैवास्ति ततो येयं बहिष्कृतिः।।
अन्तःस्थितस्य विश्वस्य बीजांशस्य सिसृक्षुता।
क्षोभोऽनिच्छे यदिच्छाया भासनं क्षोभणा च तत्।।
पू.प्र.का.१/४९२-४९३.

४. सां.का., ९.

**मायाक्षोभफलम्–**

तदेवम् ईश्वरक्षोभिता माया कलादीन् जनयति। कलादयश्च भोग्यभूता भवन्ति। माया स्वयं जाड्याञ्चिता ततश्च नास्याः भोग्यसृष्टौ किमपि स्वार्थं, सङ्घातपरार्थत्वात्। नाऽपि क्षोभकस्य ईश्वरस्य किमपि स्वार्थं, तस्य शुद्धबोधैकरूपत्वात्, आप्तकामत्वाच्च। अत एव इयं जिज्ञासा स्वरसतो जागर्ति, किमर्थं मायायां क्षोभः, मायायाः प्रसवो वेति। तत्रैवं प्रत्यभिज्ञादार्शनिकाः समादधते-'ये किल अनादिभूताः नानाविधाः पुमांसो बद्धाः भोक्तारः अणवः, तेषां भोग्यसमर्पणार्थमेव मायायां क्रियमाणः क्षोभः, मायायाः कलादेः प्रसूतिश्च सार्थक्यं भजेते इति।

**कञ्चुकषट्कम्–**

अत्रेदमवधेयम्-मायातः कला जन्यते। कलातो हि तत्त्वविस्तरो भवति। यद् यस्य केनचिद् रूपेण कारणात्मना सूक्ष्मतया वर्तते तत्रैव तस्य सत्त्वम् भवति। स्थूलस्य घटस्य उत्पत्तेः प्राग् मृद्रूपेण अवस्थानात् मृदि एव घटस्य सत्त्वं भवति न तु कुम्भकारे। एवमेव कलादीनाम् उत्पत्तेः प्राग् मायात्मनैव जडात्मना सत्त्वमभ्युपेयम् अतश्च मायाया एव जाड्यं न तु तदधिष्ठातुरीश्वरस्य कुलालस्येवेति आयाति।

प्रभोः ज्ञानक्रियाशक्ती सङ्कुचिते पशोः विद्या-कले उच्येते। अधुनैव जानामि-अधुनैव करोमि इति ज्ञानक्रियास्वरूपेण भावानपि तथा कलयन् यद् अवच्छिनत्ति तद् एष कालः[१]। किञ्चिदेव-इत्यवच्छिन्नमेव करोति, घटमात्रकरणाय प्रभवति, न पटादौ-इत्यणोः कलातत्त्वम्[२]। नियतात् कारणात् नियतं कार्यं यदर्थयते-यथा वह्नेरेव धूमः इति नियमेन अश्वमेधादेव स्वर्गफलम् इति वा नियमेन पुण्यापुण्यैरात्मा नियम्यते तदस्य नियतितत्त्वम्[३]। सर्वात्मना इति या इयम् अपूर्णम्मन्यता, सर्वं मम इदम्

---

१. मायीयं यच्च कर्त्तृत्वं क्रियया रूषितं पशोः।
भावाभावावभासात्मक्रमरूपाच्च कालतः।।
करोम्यहं करिष्यामीत्याद्यात्मन्यवभासते।
ततः कालपरिच्छिन्नकर्त्तृत्वप्रविभासकम्।।
कालतत्त्वमिदं प्रोक्तं कञ्चुकान्तर्गतं पुनः।
पू.प्र.का. २/५३४, ५३५, ५३६.

२. 'तत्सर्वकर्त्तृता सा सङ्कुचितकतिपयार्थमात्रपरा।
किञ्चित्कर्तारममुं कलयन्ती कीर्त्यते कला नाम।।' ष०. त. स., ८.

३. 'नियतिर्नियोजयत्येनं स्वके कर्मणि पुद्गम्।' मा.वि.त. १/२९.

उपयुज्यते भूयासम्, मा कदाचिन्न भूवम् - इत्येतत् पशोः रागतत्त्वम्[१]। किञ्चिदेव घटादिकं जानामि पुरोवर्ति, न पुनर्दूरव्यवहितं वस्तु-इति विद्या-तत्त्वम्[२]।

## भावस्वभावः प्रकाशः, प्रकाशसंविदोरभेदः–

सत्त्वरजस्तमसां सुखदुःखमोहात्मकं सामान्यं रूपम् अङ्गाङ्गिभावो यत्र नोपलभ्यते सा मूलकारणं प्रकृतिः। जाग्रदादिका अवस्थाभेदाः ग्राह्यग्राहकप्रपञ्चरूपाः सर्वे विशेषाः परमात्मनः स्वस्वभावस्य चैतन्यमहेश्वरस्यैव,सर्वावस्थासु संविदनुगमात्। इत्थं सर्वत्र एकरूपतादर्शनात् प्रमाता सारदृश्वा भवति। भावानां प्रकाशने अन्यस्य अप्रकाशरूपस्य बाह्यवासनादेर्हेतोः अनुपपद्यमानत्वात् स्वात्मप्रकाश एव स्वतन्त्रः, चित्स्वरूपोऽहमेव प्रकाशे प्रमातृप्रमेय-रूपतया इत्यवास्तवो भेदः प्रथत-इति तात्त्विकप्रथनाभावाद् भ्रान्तेः अन्धकारेण रूपणम्। आदौ तावत् एकसंवित्सतत्त्वेष्वपि भावेषु भेदमयं जाड्यापादनम् अख्यातितिमिरेण कृतम्, यत् स्वात्मनोऽभिन्नानां भावानां ततो भेदेन प्रथनम् अत एवोच्यते-तिमिरमिव तिमिरम् अख्यातिः[३]। अख्यात्यपहस्तित-चित्स्वरूपेषु विश्ववर्तिष्वपि पदार्थेषु जाड्यमापादितेषु मध्यादुद्धृते व्यतिरिक्ते जडे देहप्राणादौ वेद्यखण्डे कृशोऽहम्, स्थूलोऽहम्, क्षुधितोऽहं, सुखी अस्मि, न किञ्चिद् अहम्-इति प्रमातृतया अनात्मभूते आत्ममानित्वम् अताद्रूप्ये ताद्रूप्यप्रतिपत्तिः तद् एतद् अतिवैशसम्[४]।

## अनुत्तरमहेश्वरस्य-षट्त्रिंशत्-तत्त्वरूपता–

तदित्थं परमशिव एव स्वस्वातन्त्र्यवशाद् विभिन्नां दशामधिशय्य तत्तत्पदव्यवहार-भाग्भवतीति षट्त्रिंशत्- तत्त्वविभागोऽप्यत्र। षट्त्रिंशत्तत्वानि त्रिषु भागेषु विभक्तानि भवन्ति त्रिकशास्त्रे-

१) शिवतत्त्वम् = शिवशक्त्यात्मकम्

२) विद्यातत्त्वम् = सदाशिवेश्वरशुद्धविद्या-तत्त्वत्रयात्मकम्

३) आत्मतत्त्वम् = अवशिष्टम् - एकत्रिंशत् - तत्त्वात्मकम्।

---

१. 'रागोपि रञ्जयत्येनं स्वभोगेष्वशुचिष्वपि।' मा.वि.त. १/२८.

२. 'सर्वज्ञतास्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा।
ज्ञानमुद्भावयन्ती विद्येति निगद्यते बुधैराद्यैः।।' ष.त्रि.त.स. ९.

३. 'अज्ञानतिमिरयोगादेकमपि स्वस्वभावमात्मानम्।
ग्राह्यग्राहक - नानावैचित्र्येणावबुध्येत।।' प.सा.का. २५.

४. 'तिमिरादपि तिमिरमिदं गण्डस्योपरि महानयं स्फोटः।
यदनात्मन्यपि देहप्राणादावात्ममानित्वम्।।' प.सा.का. ३१.

**मलत्रयावृतः शिव एव पशुः–**

स्वेच्छागृहीताणवमायीयकार्ममलत्रयः शिवः अङ्गीकृत-कञ्चुकपञ्चकवशाद् नानाविधसङ्कोचभावमधिगतः जीवोऽणुः संसारीत्यादिभिर्नामधेयैः व्यवह्रियमाणः बद्धो भोक्ता सम्पद्यते। यदुक्तम् —

**एष प्रमाता मायान्धः संसारी कर्मबन्धनः।**
**विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते।।**

**स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः।**
**मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः।।** [१]

**मायागृहीतसङ्कोचः शिवः पुंस्तत्त्वमुच्यते।**
**अयमेव हि संसारी जीवो भोक्तैव दृश्यते।।**

**ज्ञत्वकर्तृत्वपूर्णत्वनित्यत्वान्यस्य शक्तयः।**
**तत्सङ्कोचात् सङ्कुचितःकलाद्यात्मतया मतः।।** [२]

**बन्धमोक्षौ न वास्तवौ –**

ईदृश- सङ्कोचभाव एव बन्धः। सोपायाद् आणवशाक्तशाम्भवाख्याद् अनुपायाद्वा समावेशवशाद् विगलितसङ्कोचभावोऽभिव्यक्तस्वस्वरूपप्रथनात्मकः पूर्णात्मतालाभो मोक्षः। यदुक्तम्-

**मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः।** [३]

**मोक्षस्य नैव किञ्चिद् धामास्ति न चापि गमनमन्यत्र।**
**अज्ञान-ग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः।।** [४]

चिच्छक्तिरेव वस्तुत एतन्नये प्रमाणम्। यदुक्तम् -

**न चक्षुः शब्दसंवित्तौ न श्रोत्रं रूपवेदने।**
**सर्वत्र ग्राहिका संवित् सैव मानमतो मतम्।।** [५]

एवञ्च अविद्यारागादिना कलुषिता विषयाभिमुखी संशयादिविनिर्मुक्ता चिच्छक्तिः

---

१. ई.प्र.का. ३/२/२,३.

२. अनु.प्र.प. २२,२३.

३. प.सा.का. ६०.

४. उद्ध. भूमिका पू.प्र. पृ. १२

५. पौष्करे, १/१५.

प्रमाणम्। प्रमाता तु आत्माभिमुखी चिच्छक्तिरिति प्रमाणप्रमात्रोर्विवेकः। प्रमाणं त्रिविधम् -प्रत्यक्षमनुमानं शब्दश्चेति। यदुक्तम्-

**प्रत्यक्षमनुमानञ्च सह शब्देन शाङ्करे।।इति।** [१]

**पाशपञ्चकम् –**

स्वेच्छाप्रोद्भूत-पाशप्रभावेणैव शिवः पशुर्भवति। स एव पुनः पाशमुक्तः सन् सदाशिवो भवति। पाशः पञ्चविधो भवति- मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति।

**मलः –**

मलिनीकरोति = दृक्क्रियात्मकं तेज आच्छादयति इति मलः। अयम् = अज्ञानात्मा अनादिः पशुत्वापादको भवति।[२] अस्य अष्टौ पर्यायाः प्रोक्ताः। यथा-

**मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तथा।**
**पतिःपशुरविद्येति मलपर्यायवाचकाः।।** [३]

मायावद् मलोऽपि अकारणकत्वात् अनादिर्भवति। अस्य भिन्नाः शक्तयो भवन्ति। ततश्च एकमुक्तौ सर्वमुक्तिर्नापद्यते। मलस्य सप्तविधं कार्यं भवति। कार्यकारणयोरभेदात् मलस्य सप्तविधत्वम् उच्यते। यथा-

**मोहो मदश्च रागश्च विषादः शोष एव च।**
**वैचित्र्यं चैव हर्षाख्यः सप्तैते सहजा मलाः।।** [४]

प्रकारान्तरेण मलं द्विविधं-बौद्धं पौरुषञ्चेति।[५]

---

१. द० स० प्रास्ताविकम्, पृ. ९.

२. 'इत्याद्यन्वर्थसंज्ञाभिस्तत्र तत्र प्रकीर्तितम्।
स्वरूपं गोपयन्तीयं माया भेदं शिवात् पशोः।।
दर्शयन्ती सुषुप्तत्वमिवाधत्ते पशौ मलम्।
आणवं मलमख्यातिरस्तु किन्त्वभिलाषिता।।'
द्र. पू.प्र.का. २/४४८,४४९,२५२,२५३.

३. सुप्रभेदागमः, उद्धृ, सा० सु०, वर्ष ३९, अङ्क १-४, पृ. ३७.

४. त० त्र० नि०, श्लोक १८.

५. पौरुषं पुरुषस्थं तद् बौद्धं बुद्धिस्थमेव च।
तत्त्वतो मायिकं सर्वं त्रैविध्यं कार्यनामतः।। पू० प्र० का० १/१६४
पौरुषं हि मलं यत्स्याद् दीक्षा तस्य निवर्तिका।
किन्तु दीक्षापि नो तावद् यावद् बौद्धं न नश्यति।।

**तिरोधानशक्तिः–**

मलशक्तयः यदधीना भवन्ति सा पारमेश्वरी तिरोधानशक्तिः। अस्याः मुख्यरूपेण पाशरूपता नास्ति[१]।

**महामाया –**

इयं शुद्धाध्वनः उपादानकारणं भवति। इमां केचन विद्याङ्गम् अपरे तु मायाङ्गं स्वीकुर्वन्ति[२]। शुद्धविद्या वागीश्वरी मातृका कुण्डलिनी परिग्रहशक्तिरिति च महामायापर्यायाः। कालदेशाध्वनां जननीं महामायामाहुराचार्याः।

**माया –**

प्रलये यस्यां सर्वं जगत् माति अथवा सर्वं जगत् यतो मयति सा माया।[३]

---

सङ्कोचाध्यवसायात्माऽज्ञानं यद् बुद्धिसंस्थितम्।
तदुच्छेदाय बौद्धी स्यादसङ्कुचितचेतना॥
तात्त्विकस्वस्वभावस्याज्ञानमेव ह्यनिश्चयः।
अनात्मन्यात्मगर्वो यः स विपरीतनिश्चयः॥
इमे एव मले द्वे हि बुद्धिस्थे परिकीर्तिते।
शास्त्रजेऽध्यवसायात्मज्ञाने सति विनश्यतः॥'

पू.प्र.का. १/१६४,१६५,१६८,१७०,१७१.

१. 'तेन स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भणम्।
मलादीनां च केषाञ्चिद् संविद्विश्रान्तिमन्तरा॥
नोपपन्ना यतः सत्ताऽतोऽत्र हेतुर्महेश्वरः।
इति सृष्टौ मलं कर्म मायां चापेक्ष्य वर्तते॥

पू.प्र.का. २/४५३-४५४.

२. 'भेदाख्यमायिकमलाभावाद् विद्याङ्गभूतेयम्।
वाऽज्ञानमलसद्भावान्मायैवेयं महामाया॥' पू.प्र.का. १/१६२.

३. 'ग्राह्यमण्डलतद्ग्राहि-नानारूपावमर्शिनी।
'माया' पूर्णत्वसम्भोगप्रच्युतिक्षोभकारिणी॥
भेदोद्भावनसामर्थ्यमिदन्तोल्लेखनेन यत्।
सैव 'माया' समाख्याता न तु वस्त्वन्तरात्मिका॥
तत्तदर्थप्रवृत्ताभिः संज्ञाभिरभिधीयते।
कार्यतो नामतो भेदो मायाया अधुनोच्यते॥

**मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्।**
**विभ्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम्।।**[१]

**कर्म–**

अनेन पञ्चमेन पाशेन अपि पशुर्बध्यते। कर्म द्विविधं भवति-धर्मात्मकम् अधर्मात्मकं च। अर्थतः तस्य त्रैविध्यं भवति-जातिप्रदम्, आयुःप्रदं भोगप्रदञ्च। यथोक्तं महामुनिना-

**सति मूले तद्विपाको जात्यायुर्भोगा इति।**[२]

तदेवं पाशः पञ्चविधो भवति। मलादिः कर्मान्तः। मृगेन्द्रतन्त्रे[३] महामायां विना पाशः चतुर्विधः प्रोच्यते। स्वायम्भुवागमे[४] तु तिरोधानशक्तिमपि विहाय त्रिविधः पाशः

---

वैषम्यमधिगच्छन्ती जननौन्मुख्यभागियम्।
'मायाग्रन्थिः' समाख्याता मायाविलपदाभिधा।।

अव्यक्तस्य कलायाश्च जननी या गुहा स्मृता।
साऽव्यक्तकलयोस्तत्त्वं 'तत्त्वरूपे'ति कथ्यते।।

इदं तत्त्वमिदं नेति भ्रमसंशयदायिनी।
'मायाशक्तिः' समाख्याताऽभिन्ने भेदावभसिनी।।

इत्थं माया त्रिधा ख्याता नामकार्यविभेदतः।
ग्रन्थिस्तत्त्वं च शक्तिश्च यद्यप्येकैव वस्तुतः।।'

द्र.पू.प्र.का. १/१३४,१४५,१४८,१५२.

१. उद्धृ सा० सु०, वर्ष ३९, अङ्क १-४, पृ.

२. यो० सू०, २/१३.

३. 'मलादीनां च केषाञ्चिद् संविद्विश्रान्तिमन्तरा।
नोपपन्ना यतः सत्ताऽतोऽत्र हेतुर्महेश्वरः।।
इति सृष्टौ मलं कर्म मायां चापेक्ष्य वर्तते।।
शिवेच्छैवेति संसिद्धं सिद्धान्तं परमामृतम्।
अतः सृष्ट्यादिकृत्येऽस्ति मलादेरप्यपेक्षणम्।। द्र.पू.प्र.का. २/४४४-४५४.

४. 'अनादिमलमेवेदं पशुत्वं परिकीर्तितम्।
स्वेच्छयैवोद्गतं भाति स्वेच्छयैव विनश्यति।।' द्र.पू.प्र.का. २/४७०.

स्वीक्रियते-मलं कर्म माया चेति[१]। मुक्तौ पत्युर्ज्ञानमेव कारणं,[२] तदुपकारकन्तु पशुपाशयोर्ज्ञानमिति त्रिविधः पदार्थः षट्त्रिंशतत्त्वात्मको[३] भवतीत्यलमतिविस्तरेण।

## नाशिवं विद्यते क्वचित् –

एष संविदद्वयवादः। अत्र शक्तिशक्तिमतोरभेदः। पराशक्तिः परात्मनः शिवात् न भिद्यते। षट्त्रिंशत् तत्त्वमध्ये न सा दशा या शिवो न भवेत्। सोऽयं विश्वमयः। विश्वोत्तीर्णोप्ययमेवाच्युतो विद्यते यं परशिवमाहुः गुप्तपादाः। यदुक्तम्-

**सर्वो ममायं विभव इत्येवं परिजानतः।**
**विश्वात्मनो विकल्पानां प्रसरेपि महेशता।।[४]**

**इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत्।**
**सपश्यन् सततं युक्तो जीवन्मुक्तो न संशयः।।**

**तस्माच्छब्दार्थचिन्तासु न सावस्था न याशिवः।।[५]**

शिवाशिवयोरत्र नितरामभेदः स्वीकार्यो भवति । यथोक्तम्-

**शक्तिशक्तिमतोर्यद्वदभेदः सर्वदा स्थितः।**

---

१. 'वृत्ते स्वरूपसङ्कोचे आणवेन मलेन वै।
भिन्नस्य प्रथनं यत्तन्मायीयमिति संज्ञितम्।।
अबोधरूपदेहादेः कर्त्तुर्भिन्नप्रथावतः।
धर्माधर्मस्वरूपं च मलं कार्मं प्रकीर्तितम्।।' द्र.पू.प्र.का. २/४७३-४७४.

२. 'यथा स्थितस्तथैवास्स्व मा गा बाह्यमथान्तरम्।
केवलं चिद्विकासेन विकारनिकराञ्जहि।।
स ह्यखण्डितसद्भावं शिवतत्त्वं प्रपश्यति।
यो ह्यखण्डितसद्भावमात्मतत्त्वंप्रपद्यते।।'
द्र.पू.प्र.का.१/२५७-२६३,२७०.

३. 'शिव-शक्ति-सदाशिव-ईश्वर-शुद्धविद्या-माया-कला-विद्या-राग-नियति-काल-पुरुष-प्रकृति-बुद्ध्यहङ्कार-मनः-श्रोत्र-त्वक्-चक्षु-जिह्वा-घ्राण-वाक्पाणि-पाद-पायू-पस्थ-शब्द-स्पर्श-रूप-रस-गन्ध-आकाश-वायु-वह्नि-सलिल-भूमयः इत्येतानि षट्त्रिंशत् तत्त्वानि। पू.प्र.पृ०. १४९.

४. प्र.हृ.पृ. ६७.

५. स्प० का०, २/२९-३०.

**अतस् तद्धर्मधर्मित्वात् पराशक्तिः परात्मनः।।**[१]

**न वह्नेर्दाहिका शक्तिः व्यतिरिक्ता विभाव्यते।**
**केवलं ज्ञानसत्तायां प्रारम्भोऽयं प्रवेशने।।**[२]

**यत्तु सर्वविभागात्म स्वतन्त्रं बोधसुन्दरम्।**
**सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम्।।**[३]

## श्रीस्वात्म-गुरु-शिवाभेददृष्टिमाहात्म्यम् –

तदेवं स्वात्ममहेश्वर एव विश्वमयः विश्वोत्तीर्णश्च राजते परं यावद् एनम् प्रभुं तदनुग्रहेण साधकः गुरुरूपतया न पश्यति तावद् असौ प्रभुः स्वात्मतया नास्य प्रत्यभिज्ञायते। यथाहुः श्रीगुरवः-

**नित्यं निरावरणमप्रतिमस्वरूपं शम्भुं स्वभावविमलं हृदि संस्फुरन्तम्।**
**पश्यन्ति नैव कृतिनः सुकृतैर्भवन्तं यावद्भवान्न गुरुरूपतया विभाति।।**[४]

## जगत्सृष्टौ शिवस्वार्थोत्प्रेक्षा–

परशिवं ध्यायतः यत्सुखं जायते तद्ध्यायिनः एव विजानन्ति। मन्ये, तदेव सुखम् अनुभवितुं या लिप्सा तद्वान् शिवः जगद् रचयित्वा देहवान् भवतीति।

**त्वामनुस्मरतो नित्यं देहिनो यत्सुखं विभो।**
**मन्ये तल्लिप्सया सृष्ट्वा जगद्भवसि देहवान्।।**[५]

**सदागमैश्च नैगमैः सुधामयं शुभावहं सुदर्शनैक - संविदाप्यभीप्सितं चिरन्नवम्।**
**तदेतदद्वयप्रथं सदाशिवं गुरुं निजं तदैक्यगं स्वयम्प्रभं सदात्मकं भजेऽन्वहम्।।**

**मायाऽनिर्वचना तुच्छा शाङ्कराद्वैतवादिनाम्।**
**स्वातन्त्र्यशक्तिर्जयतादीश्वराद्वय-वादिनाम्।।**

समाप्तोऽयम् महामहोपाध्यायानामाचार्य-रामेश्वरझा-महाशयानां कृपाभाजनेन डॉ० कमलेशझाशर्मणा विरिचतः "**अद्वयद्वयसद्वपुः शिवः**" इति नामधेयः तृतीयो विमर्शः।



---

१. 'जननी सर्वशक्तीनां सर्वशक्तिमयी परा।
राजते **संविदात्मा** शक्तिश्चैतन्यचन्द्रिका।।' द्र.का.पू.प्र. १/१३८.

२. 'न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथा भावानिच्छया कर्तुमीहते।
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते।।' द्र., शि०दृ०, ३/२-३.

३. श्रीत०भा० ११/२१-२२. ४. सं.स्वा. ४७६. ५. सं.स्वा. २५.

श्रीहनुमते नमः

**।।अथ चतुर्थो विमर्शः।।**

# श्रीप्रत्यभिज्ञाऽऽमोदः

प्रत्यभिज्ञादर्शने परमाद्वैतवादस्य साम्राज्यं विलसति। न ह्यत्र त्यागोऽपेक्ष्यते परिग्रहो वा। संविन्मयी शिवा नित्यमाश्लिष्यति भगवन्तमनुत्तरशिवम्। देवदेवश्चालिङ्गते विमर्शमयीं संवित्तिमुपायोपेयरूपेण प्रतिभासमानः।

**न तया रहितो देवो देवी तद्रहिता न हि।**[१]

स्वेच्छया ह्यसौ स्वां शक्तिमवष्टभ्य पुंस्त्वस्त्रीत्वविकल्पनादिना भोक्तापि भोग्यात्मतां व्रजन् विश्वविभवोऽपि विश्वोत्तीर्णः प्रतिभासते। भावाभावात्मकस्य विश्वप्रपञ्चस्य प्रकाशाभिधः शिव एव स्वभावःसारं च। यथोक्तमुच्छुष्मभैरवे;

**''यावन्न वेदका एते तावद् वेद्याः कथं प्रिये''इति।**[२]

प्रकाशरूपः शिव एव संविदिति संवित्तिरिति स्वसंवेदनमिति वा शास्त्रेषु प्रोच्यते। न चैषा संविद् मानाधीनप्रकाशा, न वाऽस्या विश्वरूपाया देशकालाकारादिना नियन्त्रणम्।

**प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।**
**किं प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति।।**
**सर्वावभासकस्यास्य परापेक्षा न विद्यते।**
**निरपेक्षोऽस्त्यतः पूर्णःस्वतन्त्रः सर्वभासकः।।**[३]

**मोक्षलक्ष्मीरसौ ख्याता प्रत्यभिज्ञाऽथ पूर्णता-** या चेयं पूर्णता, ईश्वरता, महाव्याप्तिः स्वतन्त्रता वा सा सिद्धैव न तूपायसाध्या, भेदापायमात्रेण तु प्रतिप्रकाशते। किं बहुना भेदोऽपि भासमानः सन्नेव प्रकाशते, नातः संविदोऽतिरिच्यते, संविद्भित्तिलग्नतया प्रकाशमानतया तदभिन्नत्वात्।

**पूर्णतेश्वरता वापि महाव्याप्तिः स्वतन्त्रता।**
**न साध्या किन्तु सिद्धेयं भेदापाये तु भासते।।**[४]

श्रीगुरुकृपया कश्चन विद्वानेव शिवतत्त्वस्वरूपे मयि अभिन्नमपि विश्वं भिन्नवदभासते इत्येवं दृढं विविञ्चानो लब्धानुपायसमावेशः कृतार्थोऽनुग्रहात्मा विजयते। यथोक्तम्-

१. पू.प्र.का.-१/५२.
२. पू.प्र.का.-१/२७.
३. पू.प्र.का.-१/३८,३९.
४. पू.प्र.का.-१/११८.,

**विश्वं विमर्शशक्त्या मे भात्यभिन्नन्तु भिन्नवत्।**
**एवं द्धं विविञ्चानो लभते पारमेश्वरम्।।**
**शश्वदेव समावेशमुत्तमं निरुपायकम्। इति।**[१]

अथ अविदुषां कृते समावेश: उपायपक्षमपेक्षते। निर्विकल्पे पराहम्परामर्शे प्रकाशमानमनुत्तरं तत्त्वं सद्य: इच्छामात्रेण येन अभेदोपायेन इच्छाख्येन स्वस्वरूपतया प्रथते स एव शाम्भवोपाय:। यथोक्तम्-

**शक्तिं पश्यन्नभिन्नां स्वां स्वातन्त्र्याख्यामिमां पराम्।**
**निर्विकल्पं समावेशं शाम्भवं सोऽप्यवाप्नुयात्।। इति।**[२]

मध्यमोपायिनां शाक्त: समावेशो भवति। अत्रायं क्रम आद्रियते- अंहकारेण मनसा बुद्ध्या वा यद्विकल्पनं भवति तत्र सर्वत्र अहम: स्थितिरनुस्यूता भवति। सोऽयम् अहमहमिति नित्यविमर्शनात्मा स्वावमर्श: शाक्त इत्याख्यायते। एष मायिक: समावेशोऽमायिकस्वस्वरूपाकलनात्मकेन शैवोपायेन सह योजयति तेन स्वात्मन: शिवरूपता साधकस्य प्रत्यभिज्ञापिता भवति। यदाहु:-

**अथवाहमहमिति स्वावमर्शनमेव यत्।**
**तच्छाक्त: प्रोच्यते सद्भिरुपायोऽभ्यासियोगिने।।**

**विकल्पत्वाच्च भेदात्माऽभेदात्मार्थानपेक्षणात्।**
**इत्युभयात्मक: शाक्त उपायोऽयं हि मायिक:।। इति।**[३]

अत्रापि अनधिकृतानां जिज्ञासूनाम् उद्धाराय अन्तिम आणवोपाय: प्रतिपाद्यते। उच्चारकरणध्यानवर्णस्थानप्रकल्पनादिना उपायेन य: प्राप्यते स आणव इत्यभिधीयते।

अत्रेदमवधेयम् - यद्यपि शाक्ते आणवे चोपाये विकल्पाभ्यास: समानस्तथापि शाक्ते चेतसा स्मरणमात्रं विधीयते, आणवे तु वाह्यविषयसापेक्षं विकल्पनं भवतीत्यनयोर्भेद:।

अधिकारिभेदादेव समावेशोपायभेद:। असङ्कुचितचिता सह संकुचितचितो यदैक्यं तदेव समावेश इत्युच्यते। मितमातृताया गुणीभावेन परमातृताप्तये यथायथं समावेशोपाया उपादेयतामर्हन्ति। यथोक्तम्-

**मितमातृत्वगौणाय परमातृत्वक्लृप्तये।**

---

१. पू.प्र.का.-१/२३१.

२. पू.प्र.का.-१/२६५.

३. पू.प्र.का.-२/२३९,२४०.

**प्रत्यभिज्ञाफलोपाय उपादेयो यथायथम्।। इति।** [१]

नात्र वराकी अनिर्वाच्या माया न वा शून्यसोदरनिर्गुणब्रह्मात्राभ्युपगम्यते इति आगमाद्वैतो विजयते।।

अये समानशीलव्यसनिन्! भासमानस्य विश्वप्रपञ्चस्य स्वभाव: प्रकाशस्वरूपो भवानेव शिव:। स च संवित्स्वरूप: प्रकाश: नितरां स्वातन्त्र्यश्रियमञ्चति परप्रकाश्यत्वरूपपारतन्त्र्यानाश्रितत्वात्। नहि प्रकाश: स्वप्रकाशाय स्वस्मादन्यत् किमपि अपेक्षते न वा सम्भवति प्रकाशान्तरम्। तथाहि-न तावद् घटाद्याकारभेदाद् मृदादेर्भिदेव प्रकाशस्य भेद: सम्भवति तस्याकारवर्जितत्वात्। नापि प्रकाशानैक्यं, प्रकाशभिन्नस्याप्रकाशस्वाभाव्यात् प्रकाशत्वानुपपत्ते:। नापि देशभेदात् कालभेदाद् वा, प्रकाशस्य भेद: संभवति प्रकाशाल्लब्धस्वरूपयोस्तद्भेदकत्वानुपपत्ते:। यथोक्तम्;

**देशकालौ न चैवास्य भेदकौ भवितुं क्षमौ।**
**स्वप्रथां प्राप्नुतो यस्मादस्मादेवापि तावुभौ।। इति।** [२]

प्रकाशानुविद्ध एव प्रमाणवराक: प्रमोत्पादनसामर्थ्यमश्नुत-इति कथङ्कारं प्रमाणप्राणे प्रकाशे प्रमाणान्वेषणमौचित्यमावहेत्।

अहमिव प्रकाशमहेश्वरो भवान् स्वातन्त्र्यादेव स्वाभिन्नमायाशक्त्या अणुत्वमापद्यमान: क्रीडति। एतदेव च माहैश्वर्यम्। यथाहुरभियुक्ता:

**ग्राह्यग्रहीतृग्रहणस्वरूपं यद्भाति विश्वं विततं विचित्रम्।**
**तच्छक्तिचक्रात्मकमेव सर्वं शिवाद्विभिन्नं न हि किञ्चिदस्ति।।इति।** [३]

स एवाणु: स्वाभिन्नस्वातन्त्र्यशक्त्या सर्वकर्तृत्वादिना स्वात्मानं दृढं विमृशन्नन-वच्छिन्नानुत्तरशिवरूपतया प्रथते। यदुक्तं विज्ञानभैरवे-

**सर्वज्ञ: सर्वकर्ता च व्यापक: परमेश्वर:।**
**स एवाहं शैवधर्मा इति दार्ढ्याच्छिवो भवेत्।।इति।** [४]

तदेतत् स्वरूपाविर्भावनम् -अधिकारिभेदेन चतुर्विधैरुपायैर्भवति।

१. सकृद्देशनया स्वयंविवेचनादिना वा देशकालापरिच्छिन्ने मयि चिदादर्शे विश्वं प्रतिबिम्बत- इति बोधोदयात् पारमेश्वरसमावेशोऽनुपायशब्दित: कस्यचिदेव विदुष: सम्पद्यते।

---

१. पू.प्र.का.-२/२४९.,  २. पू.प्र.का.-१/२९.

३. पू.प्र.का.-१/५१.

४. तु०, इदमभिनवगुप्तोदितसंक्षेपम् - प० सा० का० १०४

२. यस्य संविदि समस्तो वेद्यवर्गः प्रतिबिम्बतया भासते सोऽहं सर्वेश्वरः शिव इति मुहुः परामर्शनात्मा इच्छाख्यः शाम्भवसमावेशः।

३. प्राणव्यापारादिकं विनैव पौनः पुन्येन चिन्तनाल्लब्धात्मा ज्ञानाख्यः शाक्तसमावेश इत्युच्यते।

४. यस्तु उच्चारकरणध्यानादिपरिकल्पनासाध्यः स आणवसमावेश इत्याख्यायते। न चैषामनुपायोपायसाध्यसमावेशानां कश्चन फलभेदः, प्रत्युत स्वरूपाविर्भावरूपमेकमेव निर्विशेषं तत्फलम्। यथाहुर्गुरवः-

**समावेशोपि त्रिविधः शैवःशाक्तस्तथाणवः।**
**इच्छा - ज्ञान - क्रियायोगादुत्तरोत्तरसम्भृतः।।**

**अकिञ्चिच्चिन्तकस्याद्यो गुरुणा प्रतिबोधतः।**
**उत्पाद्यते य आवेशः शाम्भवोऽसावुदीरितः।।**

**उच्चाररहितं वस्तु चिन्तयन्तः स्वचेतसा।**
**प्राप्नुवन्ति यमावेशं शाक्तःसोऽत्राभिधीयते।।**

**उच्चारकरण - ध्यान - वर्णस्थानप्रकल्पनैः।**
**आणवोऽपि समावेशः फलभेदविवर्जितः।।इति।** [१]

तत्राणवोपाये ध्यानादौ दिक्कालादीनामुपयोगो भवति। दिगादिकमुद्दिश्य ध्यानादिकं **पूर्वास्यः सौम्यवक्त्रो वेत्यादिना** मालिनीविजयादौ प्रतिपाद्यते।

## दिक्कालयोः स्वरूपम्

तत्रेयं स्वाभाविकी जिज्ञासा भवति का नाम दिक्? कः कालः? को वा देशः? समादधद्भिश्च तैस्तैः शास्त्रकृद्भिः स्पष्टमेव दिक्कालादीनां महत्त्वमगायि। यथा तत्रभवान् पाणिनिः "दिग्देशकालेष्वस्तातिः" दिक्शब्दाच्चूत्तरेत्यादि। काणादाश्चाहुः प्राच्यादिव्यवहारहेतुर्दिगिति। अतीतादिव्यवहारहेतुः काल इति च।

तत्र दीधितिकृतः दिशं कालं च विभुं परमेश्वररूपं साधयन्ति। म०म० गोकुलनाथोपाध्यायास्तु दिक्कालयोः सृष्टिकर्तृपरमेश्वरव्यतिरिक्तत्वं स्थापयन्ति। यथोक्तं-

**सत्यं प्रजाः सृजसि संहरसीति किन्तु।**
**कालस्तवोपकरणं न पुनस्त्वमेव।।**

**विश्वस्य तथ्यमवलम्बनमस्यनन्त !**

---

१. पू.प्र.का.-१/१७४-१७७.

**किन्तु त्वमेव ककुभो भवसीति मोहः।।इति।**[१]

**अत्राहुर्माहेश्वराः**- संविदद्वयवादे का नाम दिक्? अनुपहिता चेत् न तस्याः पूर्वापरादिप्रविभागः। कश्चन तादृश उपाधिः कल्पनीय इति स पूर्वापरादिव्यवहार्य इति चेत् तर्हि तदुपाधिसंज्ञितं वस्त्वन्तरमेव तथा स्यादिति कृतं दिक्कल्पनया। नचोपाधिमात्रं दिक् पौर्वापर्याद्यात्मना वैचित्र्याय कल्पते। तदेतदुक्तं तन्त्रालोककृद्भिः:-

**यद्यप्यस्ति न दिङ्नाम काचित् पूर्वापरादिका।**
**प्रत्ययो हि न तस्याः स्यादेकस्या अनुपाहितेः।।**

**उपाधिः पूर्वतादिष्ट इति चेत्तत्कृतं दिशा।**
**उपाधिमात्रं तु तथा वैचित्र्याय कथं भवेत्।।इति।**[२]

न चैतावता सौगतमतवद् दिक्कालयोरस्मिन्मतेऽपह्नव आशङ्कनीयः किन्तु संवित्प्रकाश एव मूर्त्तिवैचित्र्यभासनात् पूर्वादिदिग्विभागवैचित्र्यमुल्लासयति क्रियावैचित्र्यभासनात् भूतादिकालविभागवैचित्र्योल्लासवत्। यदुक्तम्-

**तस्मात् संवित्प्रकाशोऽयं मूर्त्त्याभासनमागतः।**
**पूर्वादिदिग्विभागाख्य - वैचित्र्योल्लेखदुर्मदः।।इति।**[३]

**क्रियामूर्त्तिविहीनायाः क्रियावैचित्र्यभासनात्।**
**संविदोऽस्त्येव कालाध्वा वर्णमन्त्रपदात्मकः।**

**भाति देशक्रमो मूर्तिवैचित्र्याभासतः पुनः।**
**देशाध्वा प्रोच्यते सोऽत्र कलातत्त्वपुरान्वितः।।**

**आभाससत्त्वासत्त्वाभ्यां प्राणितः क्रम एवहि।**
**काल इत्युच्यते लोके देशो मूर्तिविभेदतः।।इति च।**[४]

परापरतदुभयदशावेषभाजः परमेश्वरस्य परांशे विश्वस्य प्रकाशैकमयत्वादूर्ध्वमिव अपरांशे प्रकाशस्पर्शायोग्यत्वादधस्त्वम्, तदुभयांशे तु कथंचित् प्रकाशाप्रकाश-संस्पर्शात् दशान्तरालतया मध्यत्वं, ततश्च दिशां समुद्भवो भवति।

तत्र किञ्चित्प्रकाशौन्मुख्यतया प्रस्फुरद् विश्वं प्राचीत्युच्यते- पुरः प्रमुखे अञ्चतीति व्युत्पत्तेः।

---

१. दि० का० नि० - म.पद्यम्

२. श्रीत.आ. १५/१९४-१९५.

३. श्रीत.आ. १५/१९६.

४. पू.प्र.का.१/५०५-५०७.

किञ्चिदप्रकाशसंस्पर्शात्तु तदेव विश्वं विमुखतामापद्यमानं पश्चादित्युच्यते- पराञ्चतीति व्युत्पत्तेः।

स एव किञ्चित्प्रकाशः स्वसंस्पृष्ट-विश्वमवमृश्य यस्मिन्नात्मनि स्वप्रकाशमये पारिपूर्ण्योचिते वर्तते सैव प्रकाशानुगुण्याद् दक्षिणा दिगित्युच्यते। किञ्चिदप्रकाशस्तु पुनः कथंचिदुद्रिक्तः तथाविधप्रकाशांशसमस्कन्धतया तदादिष्ट इव मेयप्राधान्यादैन्दव-संस्पर्शाप्यायिततया प्रकाशप्रातिकूल्यवमनाद् वामाभिधानभाजनं भवति।

मध्यविश्रान्तियोगात् पुनः पूर्वदक्षिण-दक्षिणा-परा-परोत्तरोत्तरपूर्वलक्षण-चतुष्कयोगाद् उन्मुखाद्यंशेनाधिष्ठिता दश दिशो भासन्ते। तदेतदुक्तम्-

**तत्र यद्यत्प्रकाशेन सदा स्वीकरणे क्षमम्।**
**तदेवोर्ध्वं प्रकाशात्मस्पर्शायोग्यमधः पुनः।।** [१]

**एवमाशाचतुष्केस्मिन् मध्यविश्रान्तियोगतः।** [२]
**चतुष्कमन्यत्तेनाष्टौ दिशस्तत्तदधिष्ठिताः।।** [३]

एष एव च दिग्विभागः प्रकाशाख्य-परमेश्वरे स्वात्ममयतया स्थितः शास्त्रे लोके च ऊर्ध्वादिशब्दव्यपदेशचमत्कृतो राजते।

तत्र शिवशक्तिदशानन्तरं भगवान् सदा शिवो भवति। एतस्मादेव षोढ़ा दशाः समुल्लसन्ति+ईश-तत्पुरुषाघोर-वामदेव-सद्योजात-पिचुवक्त्रभेदात्। यदुक्तम्-

**ईश ऊर्ध्व-प्रकाशत्वात्पूर्ववक्त्रं प्रसारि यत् ।** [४]
**पुरुषो दक्षिणा चण्डो वामा वामस्तु सौम्यकः।**
**पराङ्मुखतया सद्यः पश्चिमा परिभाष्यते।** [५]
**पातालवक्त्रमधरमप्रकाशतया स्थितः।।** [६]

अवशिष्टं मध्यवर्ति दिक्चतुष्टयं तु न प्रकाशो नापि तदभावः किन्तु किञ्चित्प्रकाशविषयीकृतं भेदेन परामृश्यमानं भवति। यदुक्तम्

**पञ्चमन्त्रतनुर्नाथ इत्थं विश्वदिगीश्वरः ।।** इति।[७]

एष शास्त्रीयो दिग्विभाग उक्तः। लौकिकस्तु दिग्विभागः परमेश्वरस्य ज्ञानशक्तिस्वरूप-रविमाधारीकृत्य ज्योतिःशास्त्राद्यनुसारी प्रथते। तद् यथा;

---

१. श्रीत.आ., १५/१९७
२. श्रीत.आ. १५/२०१
३. श्रीत.आ., १५/२०२
४. श्रीत० आ० १५/२०४
५. श्रीत० आ०, १५/२०५
६. श्रीत० आ० १५/२०६
७. श्रीत० आ०, १५/२०९

**तथाहि विषुवद्योगे यतः पूर्वं प्रदृश्यते।**
**तत्पूर्वं यत्र तच्छाया तत्पश्चिममुदाहृतम् ।।**

**तस्मिञ्जिगमिषोरस्य यत्सव्यं तत्तु दक्षिणम्।**
**तत्रैष चण्डतेजोभिर्भाति जाज्वल्यमानवत्।।**

**तत्पुरोवर्ति वामं तु तद्भासा खचितं मनाक्।**
**तत एव हि सौम्यं तन्न चापि ह्यप्रकाशकम्।।**

**यत्रासावस्तमभ्येति तत्पश्चिममिति स्थितिः।**
**तत्रैव पश्चिमे येषां प्राक्प्रकाशावलोकनम्।।**

**तदेव पूर्वमेतेषां यथाध्वनि निरूपितम्।**[१]

**दिक्कालयोः मोक्षसाधनता –**

पश्चिमपूर्वाद्यात्मनि विचित्रेपि विपर्यये तत्तद्द्वीपनिवासिनो जनस्य सा सा पूर्वा-परादिरूपा दिक् प्रतिनियतत्वेन फलप्रदा भवत्येव। सैषा सूर्याश्रयापि दिक् चित्रदिग्रूपधारिणा महेशेन अधिष्ठिता शास्त्रे लोके च प्रथते।

विभोर्ज्ञानशक्तिरूपरविमिव साधकमधिकृत्यापि दिग्विभागो विजृम्भते। तं च दिग्विभागं परमेश्वर इव तच्छक्त्यंशरूपः शक्रादिर्लोकपालोपि अधितिष्ठति। यदुक्तम्-

**प्रकाशस्यैव शक्त्यंशा लोकपास्तेन कीर्तिताः**।इति।

तदेवं स्वतन्त्रस्वरूपापि दिक् सौरी एव ध्यानादौ गृह्यते प्रागवबोधोदयात् तत्रैव निष्कम्पं लोकावगतिसम्प्रवृत्तेः। सर्वगताश्चामी दिशः साधकाश्वाससंबुद्धाः तत्तत्स्वेष्टफलदायिन्यो भवन्ति।

यथोक्तम् -

**सर्वगोऽप्यनिलो यद्वद् व्यजनेनोपवीजितः।**
**प्रबुद्धः स्वां क्रियां कुर्याद् घर्मनिर्णोदनादिकाम्।।**
**तद्वत्सर्वगताः सर्वा ऐन्द्राद्याः शक्तयः स्फुटम्।**
**साधकाश्वाससम्बुद्धास्तत्तत्स्वेष्ट - फलप्रदाः।।इति।**[२]

यत्र चोपविशति साधकः तत्र तत्कार्यकारितया मध्यभावमवाप्नोति शिवः, ततश्च सर्वत एव इतरप्रविभागः प्रवर्तते। एवञ्च लङ्घयितुमभिलषितापि स्वच्छाया यथा पुरः एव भवति तथा पूर्वादिरूपेण अभिमतोपि शिवः मध्यतामेव भजते।

---

१. श्रीत.आ. १५/२१३-२१७.

२. श्रीत.आ., १५, तु०- प० सा० का० ४७

स चैष दिक्प्रपञ्चस्तदनुसारी कालप्रपञ्चश्च आणवोपायादि-परिगृहीतो निःश्रेयसे स्वशक्त्यभिव्यक्ततारूपाय कल्पताम्। यथोक्तं क्रमस्तोत्रे -

**कालक्रमाक्रान्तदिनेशचक्र- क्रोडीकृतान्ताग्निकलाप उग्रः।**
**कालाग्निरुद्रो लयमेति यस्यां तां नौमि कालानलरुद्रकालीम्। इति।** [१]

प्रत्यभिज्ञाशालिने स्वात्मशिवाय शिवशक्तिसामरस्याय श्रीगुरवे च त्रितयायाप्येकरूपाय नमः।

**कृत्वाधारधरां चमत्कृतिरसप्रोक्षाक्षणक्षालिता-**
**मात्तैर्मानसतः स्वभावकुसमैः स्वामोदसन्दोहिभिः।**
**आनन्दामृतनिर्भर - स्वहृदयानर्घार्घपात्रक्रमात्**
**त्वां देव्या सह देहदेवसदने देवार्चयेऽहर्निशम्।।** [२]

**हृदम्बुजदिनेशाय मोहारण्यदवाग्नये।**
**शान्तिरात्रिमृगाङ्काय चिद्रूपगुरवे नमः।।** [३]

**प्रतिविशिखमटन्ति सात्मघोषं बतमधुराणिपयांसि नाद्रियन्ते।**
**गणयति मदिरा न पूतिगन्धिर्विविधजनादरमापणोपविष्टा।।** [४]

प्रत्यभिज्ञायामस्यां जागर्त्त्येष राद्धान्तः, प्रकाशाभिधः परमेश्वर एव स्वाभिन्नशक्त्या नित्यं क्रीडारसोत्सुको विविधान्योन्यविलक्षणवेद्यरूपतामन्योन्यचित्रां विचित्रां सृष्ट्यादिव्यक्तिमवभासयन् भातीति।[५]

वह्नेर्दाहिकेव सहजा विमर्शाख्या प्रभोः स्वाभिन्ना शक्तिः स्फुरत्ता नाम, यया विश्व-प्रपञ्चस्योल्लासनमिव विलापनमपि क्रियमाणमास्ते।

**स्वाभाविकी स्फुरत्ता विमर्शरूपास्य विद्यतेशक्तिः।**
**सैव चराचरमखिलं जनयति जगदेतदपि च संहरति।।** [६]

श्रीगुरुः परमेश्वरः, स्वात्मा चेति काममभिधीयतां, नास्ति परमार्थतः कश्चन भेदः, तथापि श्रीगुरुरभ्युपायः शिवभट्टारकमभ्युपगन्तुमभ्युपगन्तुरत्रभवतः स्वात्म-महेश्वरस्य।

---

१. द्र०, सर्वभावेषु चिद्व्यक्तेः स्थितैव परमार्थता। शि० दृ० ४/५
२. द्र०, स्वात्मैव सर्वजन्तूनामेक एव महेश्वर... ई० प्र० का० ४/१
३. द्र०, नमः शिवाय सततं.... परमार्थावभासिने।। प्र० हृ०, म० मद्यम्।
४. द्र०, अपारमार्थिके..... प्रकाशते। श्रीत० आ० ५/७
५. पू.प्र.का. १/१४.
६. तु० तस्य देवातिदेवस्य०.... श्रीत० आ० ५/७७

यदयमनुत्तरमूर्तिः श्रीगुरुर्न जात्वसौ शिष्यधियि तत्प्रबोधक्रममन्तरा स्वं ज्ञानं शब्दं वा प्रभवति प्रतिष्ठापयितुम्। तमिमं प्रबोधक्रममधिकुर्वते श्रीगुरुसदागमशासनानि। अत एव विभिद्यमानरुचिमतीनामधिकारिणां मलापनयनौपयिकं पूर्णत्वं प्रत्यभिज्ञापयितुं काचनाचार्यागमपरम्पराम्नाताऽनुभूत्येकमाना समावेशप्रयोजना परमेश्वरानुग्रहात्मा समुपास्या जिज्ञासुभिर्भव्या भारती भारतीयाऽऽराधनाभिधा साधना नाम। यदाहुः-

**अज्ञानं किल बन्धहेतुरुदितः शास्त्रे मलं तत् स्मृतं**
**पूर्णज्ञानकलोदये तदखिलं निर्मूलतां गच्छति।**
**ध्वस्ताशेषमलात्मसंविदुदये मोक्षश्च तेनामुना**
**शास्त्रेण प्रकटीकरोमि निखिलं यज्ज्ञेयतत्त्वं भवेत्।।** [१]

एनामेव स्वविमर्शरूपां चतुर्द्धा भिद्यमानां साधनाश्रियमाश्रयन्तः सन्तोऽनादिकालतः पूतात्मानो योगिनो ज्ञानिनश्चानुग्रहात्मानो नित्यमात्मवैभवं परिपश्यन्तः शिवात्मानो मोदमाना उत्तीर्णविश्वबन्धनाः परापरमया भेदम्, भेदाभेदम्, अभेदं वा स्वच्छन्दमुद्भासयन्तो भवन्ति भ्राजमानाः।

**पारमेश्वरसमागमः**

चतुर्विधासु आसु अन्योन्यात्मिकासु विमर्शसौक्ष्म्यपराकाष्ठां श्रिता देशकालाकारादिपरिच्छेदवर्जिता सद्यः सिद्धगुरुदर्शनादिनैव शिष्यतामिच्छते गुरुतां सन्दिशन्ती विजितशिवशक्तिर्गुरुशक्तिरात्मप्रबोधात्मिका प्रत्यभिज्ञाप्राणा अनुपायपद-वेदनीया प्रथमा उत्कृष्टतमा साधना नाम।

नात्र काचिदुपादेयता नामोपायव्यक्तेः। दृढशक्तिपाताविद्धस्य सकृद्देशनादिनैव सद्यः पशुताव्यपगमः शिवतादात्म्यसमापत्तिश्चेति सोऽयमनुत्तमो योगः।

स्वयम्प्रकाशमाने परमात्मनि स्वात्ममहेश्वरे नित्यत्वान्न रूपलाभः, स्वयम्प्रकाशमानत्वान्न ज्ञप्तिः, निरावरणतया नावरणापगमः, न च तत्रानुप्रवेशः, अनुप्रवेष्टुरन्यस्याभावात् , नात्राभ्युपायः व्यतिरिक्तस्य तस्याभावात्। एकस्मिन् स्वात्मचिदात्मनि कालेनाकलिते देशेनापरिच्छिन्ने उपाधिभिरम्लाने आकृत्याप्यनियन्त्रिते शब्दैरप्यसन्दिष्टे प्रमाणागोचरे कालादेः प्रमाणान्तरस्य प्रभासके स्वतन्त्रे आनन्दचिद्धाम्नि स्वात्ममहेश्वरे विश्वं प्रतिबिम्बति इति योऽयं दृढामर्शस्तेन साधकस्य शश्वदेव पारमेश्वरो निरुपायः समावेशो भवति। न चास्य मन्त्रपूजाध्यानचर्यादिनियन्त्रणा काचिदपेक्ष्यते।

**शाम्भवसमावेशः**

अथ ये अविद्वांसः अखण्डमण्डले स्वात्मनि प्रवेष्टुं नार्हन्ति, स्वातन्त्र्यशक्तिमात्मीयामधिकामिव मन्यन्ते तेषां कृते समावेशः उपायपक्षमपेक्षते।

---

१. त० सा० पृ० ५

निर्विकल्पे पराहम्परामर्शे प्रकाशमानं यदनुत्तरं तत्त्वं तत्किल सद्य इच्छामात्रेण अभेदाख्येन स्वस्वरूपतया प्रथते सोऽयं शाम्भवोपाय उत्तमो योगः।

अत्र तावदिदमुपदेशानुशीलनम्-सर्वमिदं भावजातं बोधगगने प्रतिबिम्बमात्रं प्रतिबिम्बलक्षणोपेतत्वादिति। तथा च सकलपरामर्शविश्रान्तिमात्रस्वरूपं प्रतिबिम्बित-समस्ततत्त्वभूतभुवनभेदमात्मानं पश्यतो निर्विकल्पतया शाम्भवेन समावेशेन जीवन्मुक्तिरधिगम्यते। यदुक्तम्-

**यस्य संविदि विश्वोऽयं शक्त्या स्वातन्त्र्यसंज्ञया।**
**प्रतिबिम्बतया भाति सैष विश्वेश्वरो ह्यहम्।।**[१]

**अत्रेदमवधेयम् –** यन्नैर्मल्यं यत्र तत्प्रतिबिम्बितं तत्रैव, रूपनैर्मल्यसम्पन्ने चक्षुरादौ रूपप्रतिबिम्बवत्। चिदात्मनि सर्वनैर्मल्यसम्पन्ने तु सर्वमेव विश्वं प्रतिबिम्ब-भूतमाभासते। यदाहुर्महामाहेश्वरा गुरवः-

**भावा भान्ति यथादर्शे निर्मलेऽपि विरोधिनः।**
**अनामिश्रास्तथैतस्मिंश्चिन्नाथे विश्वसंचयाः।।**[२]

पूर्णसंवित्स्वभावे स्वात्ममहेश्वरे तत्रभवति पूर्णता नित्यं विराजमाना यस्याः कीर्तनं बहुधा श्रूयते आगमेषु परावाक्, स्फुरत्ता, उन्मेषः, मुख्यकर्तृता, कुलम्, सामर्थ्यम्, हृदयम्, सारः, स्पन्दः, विभूतिः, काली, दृक्, कर्षिणी, नित्या पराहन्ता चेति। सेयं परेति गण्यते। एकस्याः स्वातन्त्र्यशक्तेरेव बह्व्यो व्यष्टिप्रभेदाः शक्तिव्यक्तयो भवन्ति। यथा दर्पणे नगरप्रतिभासो भेदाभेदाभ्यां भवति तथैव यया शक्त्या परमेश्वरे स्वात्मनि विश्वरूपस्य भेदेन अभेदेन चावभासनं भवति सेयं गीयते परापरेति।

यया तु परस्परं विविक्ततया विश्वरूपेण इदन्तया भेदावभासनं भवति सैषा गीयते अपरेति। त्रितयमप्येतद् यदा स्वशक्त्या अनुसन्धानात्मतया आत्मसात्क्रियते तदा पुनरेषा परेत्येव जेगीयते। एवं च परा, परापरा, अपरेति शक्तित्रयमयः प्रभुःदृष्टिस्मृतिविकल्पवान् प्रतिभाति। तथा च योऽयं परामर्शः स्वच्छोऽ-साङ्केतिकश्च,तज्ज्ञः शिवयोगी शाम्भवोपायविज्जयति।

## शाक्तसमावेशः

मध्यमोपायिनां शाक्तः समावेशो भवति। विकल्पबलादेव आत्मनो बन्धाभिमानः। स एव च संसारप्रतिबन्धहेतुः। तत्प्रतिद्वन्द्विरूपो विकल्पो यदा उदेति तदा संसारहेतुं विकल्पं दलयन्नसौ अभ्युदयहेतुर्भवति। परिच्छिन्नेभ्यः शिवादिधरान्तेभ्यस्तत्त्वेभ्यो

१. पू.प्र.का. १/४७.

२. पू.प्र.का. १/३३९.

यदुत्तीर्णं तदेव परमार्थः, तेन विश्वं प्राणिति, तदेव चाहमिति विश्वोत्तीर्णो विश्वात्मा चाहमेवेति योऽयं मायिक उपायः स एव भेदाभेदात्मा शाक्तो योग इत्युच्यते।

स चायम् अमायिकस्वस्वरूपाकलनात्मकेन शैवोपायेन सह योजयति तेन स्वात्मनः शिवरूपता प्रत्यभिज्ञायते।

**एतदुक्तं भवति–** अंहकारेण मनसा बुद्धया वा यद् विकल्पनं तत्र सर्वत्र अहमः स्थितिरनुस्यूता भवति। अतः अहमहमिति नित्यविमर्शनात्मा स्वावमर्शः शाक्तः समावेश इत्युच्यते। संशयात्मबुद्धिं निरस्यासौ निश्चयात्मिकां बुद्धिं द्रढयति। अस्याभ्यासस्य द्वैतमालिन्यशङ्कानिर्मूलनायैवोपयोगः, नाद्वयबोधे।

### आणवसमावेशः

अत्रापि येऽनधिकृतास्तेषां कृते भेदात्मा आणवोपायः। उच्चार-करण-ध्यान-वर्ण-स्थान-प्रकल्पनादिना इदमात्मकेन उपायेन यः समावेशः स आणवसमावेश इत्युच्यते।

अयमत्र विशेषः शाक्ते आणवे चोपाये विकल्पाभ्यासः समानः, तथापि शाक्ते चेतसा स्मरणमात्रं विधीयते, आणवे तु बाह्यविषयसापेक्षं विकल्पनं भवतीत्यनयोर्भेदः।

तत्र प्राणोच्चारादिकमपेक्ष्य बुद्धिगं ध्यानादिकं दूरम् , ततो दूरं देहगतं करणादि, ततोपि विदूरं बाह्यं मण्डल-स्थण्डिलादिकम्-इत्येष क्रमः शास्त्रेषु प्रतिपादितः। तत्र योऽसौ चिद्रूपोन्मेषः तत्सामीप्यमित्युच्यते, यस्तु चिद्रूपनिमेषस्तत् किल दूरत्वमित्युच्यते। आणवे उपाये स्वसंस्कारार्थं विकल्प उपायान्तरमपेक्षते। बुद्धिप्राण-देह-घटादीन् परिमितरूपान् उपायत्वेन गृह्णतोऽणुत्वं प्राप्तस्य आणवं ज्ञानमाविर्भूतं भवति, अनेन ध्यायिनः साधकस्य स्वसंविन्मात्रपरमार्थान् सृष्टिस्थितिसंहारप्रबन्धान् सृष्ट्यादिस्वातन्त्र्यपरमार्थत्वं च स्वसंविदो निश्चिन्वतो भैरवीभावः समुदेति सोयमाणवो योगः। तदिदमुच्यते;

**तद्ग्रस्त - सर्व -बाह्यान्तर्भावमण्डलमात्मनि।**
**विश्राम्यन्भावयेद् योगी स्यादेवं स्वात्मनःप्रथा।।** [१]

स्वातन्त्र्यशक्तेरद्भुत एष महिमा यदनया प्रभुर्भवन् स्वं कल्पिताकारं विधाय कल्पितकर्मभिरात्मानं प्रतिबध्नाति, फलतश्चाणुः सम्पद्यते। पुनश्च पूर्णतां प्रत्यभिजानानः शुद्धमिव रूपं प्राप्य मुच्यते। ततश्चोदेत्येषा दृक्-

**त्वमेवात्मेश ! सर्वस्य सर्वश्चात्मनि रागवान्।**
**इति स्वभावसिद्धां त्वद्भक्तिं जानञ्जयेज्जनः।।** [२]

---

१. तु०, पू० प्र० का० १/११६

२. शि. स्तोत्र. १/७

## लीलाक्रीडारसिकः शिवः

योऽयं परमोपादेयः सर्वज्ञानक्रियाशक्ति; स्वात्ममहेश्वरः स एव सर्वतत्त्वप्राणभूत एक एव सततमवभासमानोऽपि नितरां गुप्तः प्रतिक्षणमुच्छलच्चैतन्यस्वभावोऽभिनवो गुरुभिः प्रकाशनीयः परमो गुरुः। अनन्तशक्तिसम्पन्ने स्वतन्त्रे स्वात्ममहेश्वरे किमु नाम वक्तव्यं यदसौ सृष्ट्यादिविनोदनात्मा यथेच्छं क्रीडन् विलसति। नूनं प्रत्यभिज्ञया स्वात्मसाद्विधेयः स्वात्ममहेश्वर एष नित्यं पुमर्थं प्रकाशयतीति शम्।

काश्मीरशैवागमदर्शने स्वीकृतः अद्वयवादः यतः ऐश्वर्यचमत्कारनिर्भरः स्वीक्रियते अतोऽयम् ईश्वराद्वयवाद इत्युच्यते। अस्य युक्तियुक्तता, सत्यता, अनुभववेदनीयता च संघटते। अस्मिन्नीश्वराद्वयवादे[१] सकलः मानवः अधिक्रियते।

**"नैसर्गिकी स्फुरत्तात्मा विमर्शाख्या परा प्रभोः।**
**अक्रमा क्रमरूपेव शक्तिः स्वातन्त्र्यलक्षणा।।[२]"**

इत्येवं प्रथितयाअन्वर्थाभिधानया विविधं नाम बिभ्रत्या प्रत्यभिज्ञाशास्त्र-सिद्धान्तमूलभूतया स्वातन्त्र्यशक्त्या[३] परशिव एव सदा आनन्दपरामर्शशीलः अकृत्रिमे अहं-परामर्शे इदमामर्शनं विमृशति। साधकः स्वस्य पूर्णतां शिवात्मतां शिवगुरोरनुग्रहेणैव स्वरसतः प्राप्नोति। अस्यामवस्थायाम् एष साधकः अनन्ताभिः इदन्ताव्यक्तिभिः देदीप्यमानः सन् अकृत्रिमम् अहमामर्शम् आत्मसात्कुर्वन् विजयशीलो भवति आचार्यवान् पुरुषो वेद। यः कश्चन विवेकी किमपि वस्तु याथात्म्येन विमृशति

---

१. (क) "ईश्वराद्वयवाद एव युक्तियुक्तः ......।" शि.दृ.वृ., पृ. ३६.
(ख) "...... लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः।
श्रीत.आ.वि.खं. १२, पृ. ४२९.

२. पू.प्र.का. १/१३७.

३. (क) स्वातन्त्र्यशक्तिरेवास्य सनातनी पूर्णाहन्तारूपा परा मत्स्योदरी, महासत्ता, स्फुरत्तोर्मिः, सारं, हृदयं, भैरवी, देवी, शिखा इत्यादिभिरसंख्यैः प्रकारैस्तत्र तत्र निरुच्यते। स्प.नि., पृ. ६६.
(ख) पञ्च शक्तयः चिदानन्दैषणाज्ञानक्रियाख्याः विद्यन्ते। तत्र आनन्दशक्ति-प्राधान्ये महेश्वरः शक्तितत्त्वम् इत्याख्यायते। यदुक्तं-
"चित्प्राधान्ये शिवतत्त्वम्, आनन्दप्राधान्ये शक्तितत्त्वम्" तं.सा., पृ.७४.
(ग) शिवशक्तिसदाशिवतामीश्वरविद्यामयीं च तत्त्वदशाम्।
शक्तीनां पञ्चानां विभक्तभावेन भासयति ।। प.सा., १४.

स चेद् गुरुकृपाम् अवाप्नोति तदा ज्ञातुं प्रभवति यद् विमर्शशील:[१] प्रकाश-संज्ञक: परशिव: एक एव स्वेच्छया तैस्तै: विविधै: रूपै: भासमानो भवति। न च तस्मादन्य: कोऽपि वर्तते। आत्मानमप्यसौ तस्मात् प्रभो: भिन्नं नोपलभते। का कथा इदमात्मकस्य प्रभो: लब्धात्मन: विश्वस्य ततोऽन्यत्वस्य। बन्धमोक्षौ न पारमार्थिकौ अत एव न कश्चन वास्तविक: द्वैतमय: बन्ध:[२] भयदायी। बन्ध एव नास्ति पारमार्थिक: तर्हि कस्माद् भवेन्मोक्ष:।[३] अत: भगवानेव तेषु-तेषु रूपेषु धृतविग्रहो भवति, तत्र-तत्र विद्यमानो भवति। इतस्ततो भ्रमन् गतिशीलो भवति। सर्वविधव्यवहारभाग् भवति। नानारूपताम् गतोऽसौ विश्वरूपो भवति। य: एवंविधं प्रभुं स्वम् आत्मानं विजानाति तस्य देहे गेहे इन्द्रियेषु मनसि बुद्धौ अहङ्कारे प्राणशून्ययोर्वा सामान्यजनानामिव भासमाना कृत्रिमाहन्ता तं न बाधते। श्रीगुरोरनुग्रहमवाप्य[४] असौ अकृत्रिमे स्वात्ममहेश्वरे स्थितिं

---

१. (क) प्रकाशस्य जडवैलक्षण्यं संरम्भ:
कर्तृतारूपो य:, स एवात्मविश्रान्तिलक्षणो
निरपेक्षत्वेन विमर्शोऽहमिति कथ्यते।'' ई.प्र.वि.वि.,खं. २, पृ. १८२.

(ख) ''विमर्शाख्यो य: संरम्भ: स्वान्त:स्फुरत्क्रियाशक्तिस्फाररूप:। सा चिदानन्देच्छाज्ञानक्रियारूपशक्तिपञ्चकसामरस्यस्वभावेत्याख्यायते।'' म.मं.प., पृ. ६७., द्र.- प.प्रा., पृ. १-२ इति

२. (क) ''आत्मन्यनात्माभिमतौ सत्यामेव ह्यनात्मनि।।
आत्माभिमानो देहादौ बन्धो मुक्तिस्तु तल्लय: । श्रीत.आ., ५,१०५-१०६.

(ख) ''शिवाभेदाख्यात्यात्मकाज्ञानस्वभावोऽपूर्णम्मन्यतात्मकाणवमलसतत्त्व-सङ्कुचितज्ञानात्मा बन्ध:।'' शि.सू.वि., पृ. ५.

३. (क) ''मोक्षस्य नैव किंचिद् धामास्ति न चाऽपि गमनमन्यत्र।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्ष: ।।'' प.सा., ६०.

(ख) ''यदि तुच्छस्तत्पूर्वोक्तनीत्या बन्ध एव स्यात्।
अतुच्छश्चेत् पारमार्थिकत्वान्नास्य स्वतन्त्रात्मातिरेक:।
.......................................................
आत्मज्ञानं मोक्ष इत्यविवाद:, अत: यदेवात्मनो लक्षणं तदेव मोक्षस्य।''
श्रीत.आ.वि., खं. १, पृ. ६२.

(ग) ''स्वतन्त्रात्मातिरिक्तस्तु तुच्छोऽतुच्छोऽपि कश्चन।
न मोक्षो नाम तन्नास्य पृथङ्नामापि गृह्यते।।'' श्रीतं.आ., १/३१.

४. (क) एष चानुग्रहलक्षणोऽन्त्य: पञ्चम: पारमेश्वर: कृत्यविशेष: परपुरुषार्थ-प्रापक:, तन्निबन्धनत्वात् परमार्थमोक्षस्य। ई.प्र.वि.,खं. १,पृ. ११.

लभते स्वात्ममहेश्वर एवास्य ध्येयो ज्ञेयश्च, न ह्येनं काचन इदन्ता शून्यता वा प्रतिबध्नाति। ममता तु अस्य दूरतरं प्रयाति। यः कालः यो देशः या क्रिया यत्किमपि वा अन्यत्, तत्सर्वं प्रकाशमाने स्वात्ममहेश्वरे एव भातं भवति। अतः स्वात्ममहेश्वरः असौ समेषां प्राणिनाम् आत्मा[1] विद्यते। निगमेषु आगमेषु धर्मशास्त्रपुराणादिषु च अस्यैव आत्मनः माहात्म्यं गीयते। एष एवात्मा सदा ध्येयो ज्ञेयश्च समस्तसम्पदवाप्तौ हेतुभूतो जागर्ति। जगदानन्दसुन्दरः शिवः यः स्वात्मभूतमेनम् आनन्दमयं विजानाति पूर्णानन्दोऽसौ भवति, दिव्यं तपस्तप्यति। तस्य काचन क्रिया, कश्चन कालः देशो वा आनन्दराहित्यं न भजते। तस्य समक्षं सम्पूर्णमिदं जगद् आनन्दसमुल्लासकं जायते। स्वयमप्यसौ जगति नृत्यशीलः क्रीडाशीलः अनुग्रहविग्रहश्च सन् उल्लसत्यथ परानपि निजोल्लासभरितान् विदधाति। उपासनापि[2] अस्यैव आत्मनः युज्यते। आत्मानं विहाय अन्यं कमपि प्रभुं यदि कश्चिद् भजते स नूनं चेतनं स्वात्मानं विहाय जडमयं कञ्चन उपासितुं प्रवृत्तः। आत्मा चैकः। सदास्फुरणशीलोऽसौ भवति। अस्य शक्तिमतःशक्तिः सुतरां सुन्दरी चिन्मयी अस्ति। सुन्दर्या वैभवम् अद्भुतमस्ति। स्वयमियं परिपूर्णा अस्ति, आनन्दमयी अस्ति। अस्याः सृष्ट्यादिक्रियापि आनन्दमयी एव भवति। एतस्याः क्रियायाः यत् फलं विद्यते तदपि आनन्दमयं भवति। सम्पूर्णं विश्वम् एतस्याः आनन्दमय्याः क्रियाया उल्लासनं यतो विद्यते अतः आनन्दमयमेवास्ते। अत एव च प्रभुरसौ जगदानन्द[3] इत्याख्यायते। धन्यामिमां शक्तिमानन्दमयीं वयमामनामो यामासाद्य-सतीमुमामिमां कृती सुकृती धन्यः शिवो भगवानन्नपूर्णानाथः परिपूर्णानन्द-दृक्क्रियः समः समवभासः सन् समन्तात् प्रसरति।

---

(ख) अनुग्रहस्तु यः सोऽयं स्वस्वरूपे विकस्वरे॥
ज्ञप्त्यात्मेति कथं कर्मनियत्यादि प्रतीक्षते।
कर्मकालनियत्यादि यतः सङ्कोचजीवितम्॥
सङ्कोचहानिरूपेऽस्मिन् कथं हेतुरनुग्रहे। श्रीत. आ., २८/२३३-३५.

१. चैतन्यमात्मा, शि.सू., १/१.

२. (क) शिवशक्तिसमापत्त्या शिवशक्तिघनात्मकः।
शिवशक्तिसमापत्तित्रिकं सम्पूजयेत्परम्॥ इति । प.त्री.वि., पृ. १८४.

(ख) तस्माद्विश्वेश्वरो बोधभैरवः समुपास्यते।
अवच्छेदानवच्छिद्भ्यां भोगमोक्षार्थिभिर्जनैः॥ श्रीतं.आ., १/१२३.

३. विश्वेन रूपेणानन्दो यत्रेति यतश्चेति जगदानन्दशब्दवाच्यम् आनन्दं शम्भुनाथ आदिशत्। श्रीतं.आ.वि., खं. ३, पृ. ३५६.

## नित्यतृप्तस्य का स्पृहा

यदस्माकं शरीरं मानवीयं विद्यते तत् किल देवसदनमाह श्रुतिः। शिवसदनमस्माकं शरीरम् अतो देहाहन्ता गेहाहन्ता वा कदाचिदपि न शिवकरी भवितुमर्हति। देहगेहादौ या अहन्ता सैव तु अनर्थकरी अनादिकालादस्मान् बन्धेषु उपनिपातयति। इडा-पिङ्गला-सुषुम्णा चेति तिसृणां सङ्गमे सुषुम्णा = कुण्डलिनीशक्तिः सुप्ता तिष्ठति। जागृतायां तस्यां शिवता सर्वतोगामिनी प्रसरति। इदन्ताभूते देहादौ अहन्तामतिः कृत्रिमेति प्रतिभातं भवति। परं, यदा चेयं सुषुम्णा जागर्ति तत्प्रभृति साधकैरनुन्मत्तैर्भाव्यम्। न कदाचिदेभिः मध्यधामपरित्यागः कुण्डलिन्याः शक्तेरुपेक्षा वा विधेया। सदा सावधानैस्तत्र स्वकीया स्थितिः दृढ़ीकरणीया भवति। शिवयोगी एनामेव सुषुम्णां[१] श्रद्धया सेवमानः सतीं भारूपां सदा भासमानां चिच्चैतन्यचमत्कृतिं भजमानः भेदभूमिं[२] विस्मरति। नासौ इदन्तायां[३] रमते। आनन्दरसासवमत्तस्यास्य नित्यतृप्तता परिचिता प्रियेव सुखयति। तृप्तस्यास्य शिवयोगिनः भावस्वभावः शिवप्रकाशः क्षणमपि विरहितो न भवति। नास्य क्वचिदपि वस्तुनि काचन प्राप्तीच्छा जागर्ति। नित्यतृप्तस्य पूर्णस्य इदन्तात्मनि विच्छिद्य विच्छिद्य भासमाने किं सुखमभिलष्य प्रवृत्तिर्भवेत्।

यस्य तु साधकस्य किमपि इदमात्मकं वस्तु प्राप्तव्यं भवति। अथ किञ्चिद् भवितुं यद् इच्छति। यस्य संकल्पो भवति भूत्वाहं पूर्णो भविष्यामीति। एनं पुरुषमागमाः धिक् कुर्वन्ति। नूनमेतादृशो जनः स्वात्ममहेश्वरमजानानो भवति। नासौ प्रभुर्भवेत्। न चास्य शिवता स्वात्मभूतापि समधिगता भाति। यतो हि ज्ञाते शिवत्वे सर्वस्थे स्वात्मैव विज्ञातो भवति। स ज्ञातशिवो नित्यविराजितमात्मानं विजानाति। असौ वस्तुतः स्वराड् भवति। नास्य कश्चन भेदः समुल्लसति शिवात् प्रभोः। एतादृशः साधकः सामान्यनरवद् देहवान् दृश्यमानोपि त्रिशूली एव वस्तुतो भवति निष्काममाकुर्वन् सर्वमिदं

---

१. सर्वासामेव नाडीनां मध्ये या संव्यवस्थिता।
सुषुम्णा नाम सा ज्ञेया ....................।। स्व.तं., ४/३२१.

२. भेदः स चायं न ततो विभिन्नः।
स्वच्छन्दसुस्वच्छतमैक - धाम्नः।
प्रासादहस्त्यश्वपयोदसिन्धु-
गिर्यादि यद्वन्मणिदर्पणादेः।। प०च० ४.

३. इदन्ता नाम विषयता प्रमेयता वा।
इदमित्युचितः संवित्प्रकाशोऽन्यस्य वस्तुनः।
प्रतिष्ठात्मकतां गच्छेदहमित्यात्मना पुनः।। अ.प्र.सि., ११.

तथाहि जडभूतानां प्रतिष्ठा जीवदाश्रया। ई.प्र., १/४.

कर्म कामेश्वराभिधानं लभमानोपि वस्तुत: कर्तृतामुखं बन्धनं नाधिगच्छति।[१] अकुर्वन्नप्यसौ नाकर्मकृद् दुष्यति। नायं किमपि सम्प्राप्य हृष्यति न वा किमपि अप्राप्य काङ्क्षति। नान्यं विषयसुखिनं दर्शं दर्शं द्वेष्टि। एष तु नित्यसुन्दरं बोधवैभवमात्मानमेवाद्वयं विपश्यन् रमते रमयति च स्वजनं रागादिदोषरहितमात्मानुरागिणम्। पुण्यादिकर्मकारितया नासौ बध्यते। क्रीडन्नेवासौ किमपि लोककल्याणकारि कर्म विदधाति। निष्काममेवास्य कर्म भवति। यो हि कामी सन् कर्मणि प्रवर्तते कामनापूर्तौ तस्य हर्षो भवति अन्यथा तु स विषादमध्ये निपतति। निष्कामं कर्मारभमाणस्तु सदा हर्षशील: निजात्मनि विश्रान्त: आनन्दमग्न एव तिष्ठति न सुखं न वा असुखं प्रतिपद्यते। नित्यतृप्तस्यास्य किमपि ग्रहणं वा भोजनं वा नैनं परिछिनत्ति न वास्य स्वतुष्टि: तद्वैपरीत्यं वा लक्ष्यं भवति कस्मिंश्चिदपि व्यवहारवर्त्मनि। धन्योऽसौ शिवाद् गुरो: शिवमयीं गुरुतामेव स्वात्मन: समुद्दीपयति।

## दृगेव दृश्यं नान्यत्–

आत्मन: विश्ववेद्यतया स्फुरणशीलतामसौ परिचिनोति। श्रीगुरुकृपया साधक: असौ विजानाति द्रष्टरि मयि दृश्यं समुद्भूय स्थित्वा विलीनं भवति। कश्चन कालखण्डो भवेत्, स्थानविशेषो भवेत्, दशाविशेषो वा भवेत्, सर्वस्य भासक: स्वयमेवासौ द्रष्टा भवति नान्य: कश्चन। तत्र तत्र स्वयमनिशं गतिशीलोपि दृश्यसंश्लेषेण तत् तद्दृश्यं द्रष्टृचैतन्ये विश्रमयन् स्वमयं विश्वं विलासयति, विलापयति च स्वस्मिन्नेवेति स्वामखण्डतामेवासौ पुष्णाति, न जातु खण्डितो भवति।

देहो गेहो वा, सुहृद् असुहृद् वा, बन्धुरबन्धुर्वा, स्वं परं वा, भूतं भौतिकं वा, संविद्रूपे मयि एव आत्मलाभं लभते। ततश्चैषां नातिरिक्तता द्रष्टुर्मत्त:। सर्वं वेद्यं ममैव वैभवमास्ते। यथा च महावृष्टौ सत्यां जलाशया: नद्यो नदाश्चापूरिता भवन्ति। तेभ्यो विनिर्गता: समुच्छलन्त्यश्च आप: सागरे अचलप्रतिष्ठे आपूर्यमाणे निर्बाधं प्रविशन्त्य: सागर एव भवन्ति न सागरात् पृथक्। सागरादुद्भूता: पुन: वाष्पमेघादिक्रमेण बिन्दुरूपतां दधाना: ता आप: पुनरपि सागरमेव अपियन्ति। यथा च सागरस्यैव तत् तद् भिन्नं वपुरुद्भूयापि ता एवापो बिन्दुरूपा: सागररूपतां समाविशन्त्यो भवन्ति सिन्धवो धन्या: अखण्डाश्च। सैवेयं स्थिति: द्रष्टरि लब्धात्मानि दृश्यजातानि कियत्कालं स्थित्वा तत्रैव विलीनानि भवन्ति। दृश्योद्भूते: प्राग् दृश्यप्रलयात् परं च यथा दृश्यानां द्रष्टृरूपतयैव अवस्थानं भवति तथा मध्ये भासमानानामप्येषां वास्तविकं रूपं द्रष्टैव भवति। नैषां द्रष्टु: व्यतिरेकेण काचिदस्तिता कदाचिदपि सम्भविनी। परं यद् दृश्यनानात्वं तेन द्रष्टु: प्रमातृता न परिमितीभवति प्रत्युत द्रष्टु: वैभवमेव समेधते।

---

१. इत्थमीश्वरमात्मानं जानन् कामेश्वरोपि सन् ।
कुर्वन् सर्वमिदं कर्माकुर्वन् रामेश्वरोस्ति स:।। पू.प्र.का.१/३७

## अनाद्यनन्तमात्मचैतन्यम्

साधकः महेश्वरस्य स्वात्मतया प्रत्यभिज्ञाम् अवाप्य ईशभावं गतः सन् ईशनामसंकीर्तनपुरःसरं संसारे वर्तमानोपि माहैश्वर्यसंवलितो विभाति। साधकानां कृते पूर्णतैव परिग्राह्या यस्या अपरं नामधेयं शिवता, समता, परा इत्यादि प्रथते। या च प्राभवी स्पन्दाभिधाना वैभवमयी क्रिया तत्रैवास्थाऽस्माभिर्विधेया या तु स्थितिः देशेन परिच्छिद्यते, कालेनाकलिता भवति पौनः पुन्येन दुःखसागरे निपातिभिर्जन्तुभिः कथंचिद् बहिर्भूत्वा प्राप्ता सत्यपि विनश्वरा भवति तां स्थितिम् अस्मिन् जन्मनि पूर्वजन्मनि वा मुहुर्मुहुः लब्ध्वापि यथा शान्तिर्नैव सम्प्राप्ता तथा पश्चाद्भाविषु जन्मस्वपि नैव प्राप्ता भवेत्। अतः साधकैर्नूनं सिद्धमेव स्वस्वरूपम् आस्थेयम्, न तु प्रयाससाध्यं कृत्रिमं स्वपरिकल्पितं वेद्यं रूपम्।

यत् स्वं रूपं शुद्धं[१] शान्तं चिन्मयं चात्मतत्त्वं विद्यते अनाद्यनन्तं तत् किल शाश्वतम् उपद्रवशून्यं चास्ते। न हि तद् निर्मेयं भवति आप्यं भवति ग्राह्यं वा भवति। यत्किमपि निर्मेयं स्याद् अथ च प्राप्यं भवेत् तत्तु नूनमस्मान् निगृह्णीयात्। न कश्चित् कालो न वा कश्चिद् देशो विद्यते यत्र सूक्ष्मं व्यापकं चेतनं वा स्वरूपं न विद्यते। प्रकाशमहेश्वरस्य विमर्शमयी इच्छैव जगत् सृजति विसृजति वा। देहे, प्राणे, शून्ये वा याऽहन्ता सा न स्वारसिकी अपितु कृत्रिमा भाति। या तु प्रकाशात्मनि स्वात्मनि सहजा अहन्ता[२], तस्यां प्रकाशमानायाम् जगदपि प्रकाशितं भवति। स्वात्मा इव परोऽपि कृतार्थो धन्यतामुपैति।

## विश्वविभवो महेश्वरः

देहगेहाभ्याम् बाह्यैराभ्यन्तरैर्वा करणैः प्राणैः शून्येन वा स्वरूपावरणात्मिका या भीतिरस्मान् भीषयते तदनुचितमेवास्ते। देहादयस्तु विभवभूताः स्वात्मन ऐश्वर्यमेव

---

१. इत्थं चिदात्मकं सर्वं षट्त्रिंशद्भेदतत्त्वतः।
आदौ शुद्धात्मकं तत्त्वं पञ्चधा तमसः परम्॥
शिवः शक्तिश्च सादाख्यमीशो विद्येति भिद्यते।
अक्षादिशान्तवर्णात्मा निरमायि शिवेन तु॥ अ.प्र.सि, १४-१५.

२. (क) अहन्ता = अकृत्रिमः स्वात्मचमत्कारः। प्र.हृ., पृ. ४८.

(ख) सर्वोऽयं भावराशिश्चिदात्मनि अहमित्येव वपुषा सततावभासुरवपुः, ऐश्वर्यरूपाच्च स्वातन्त्र्यलक्षणात् स्वामिभावाद् विचित्रेण वपुषा क्रमाक्रमादिना संविदेनं बहिष्करोति प्रमातृभेदप्रथनपूर्वकम्।

ई.प्र.वि., खं. १, पृ.१९४.

विस्तारयन्ति। साधकेन चिन्मये आनन्दवने स्वस्वरूपे नैर्मल्यमेवानुसन्धेयम्। अज्ञो हि जनः निर्मले स्वभावविमले स्वरूपे स्वयमेव सन्दिहानो भवति विद्यमाने स्वच्छे स्वरूपे विरूपतां मन्वानः नियतिनियन्त्रितां जन्यां स्थितिं परिकल्पयितुं यतते। सा कल्पिता जन्या स्थितिः सहजं स्वरूपं भवितुं नार्हति। स्वस्वरूपं तु तदेव विद्यते यद् यत्र तत्र सर्वत्र यदा तदा सर्वदा च प्रतिभासमाना या काचिदपि स्थितिर्भाति तेन तेन जगदात्मना जगदुत्तीर्णतया वा उल्लसति।

## विमर्शशीलो हि स्वयं प्रकाशते

सहजभावेन सविमर्शं प्रकाशमानः स्वात्मा स्वयंसिद्ध एवास्ते। तस्मिन् सर्वा सम्भावना आञ्जस्येन उपपद्यते, किमपि तत्र असम्भाव्यं नास्ति देहदृष्टिरेव हातव्या।

## स्वात्मनः स्वरसवाहिनी स्थितिः

यथा यथा यद् यद् भासमानं तथा तथा तत् तत् स्वमेव रूपं भवति। भानं स्वरसतः प्रवृत्तं भवति। तत्रापि यदि कश्चन यत्नः क्रियते तर्हि भानं कृत्रिमं भवेन्न तु स्वाभाविकम्। यथास्थिति एव उपास्यं भवति यदि काचन नूतना स्थितिरेष्टव्या भवेत् स्वारसिकी च स्थितिः त्यज्येत तदा लभ्यमाना प्रयत्नोपार्जिता स्थितिः क्लेशफलमेव यच्छेत्। अतः स्वरसवाहिन्यामेव स्थितौ वर्तमानो जनः स्वस्थः स्वरूपस्थो वा भवेन्नान्यः। नहि वस्तुतः किमपि परिच्छिन्नं रूपमात्मनः परिच्छेदवर्जितस्य सम्भवति ततश्चात्मा अरूपो विलसति। अथ विमर्शशालितया यद्रूपं परिस्फुरति तदादाय एकरूपः स्वात्मा भवति। पुनश्च देहेन्द्रियमनो-बुद्धिप्राणान् बहून् अनात्मभूतान् आत्मतया स्वीकुर्वाणोऽसौ बहुरूपतां याति। पुनश्चानुगृहीतः परमेश्वरेण, व्युत्क्रमेण सृष्टिं प्रविलापयन् साधकः बहुरूपतायाः सकाशाद् एकरूपतां प्रत्युन्मुखस्तां बिभ्रद् पुनरसौ नीरूपतां व्रजति। यतश्च स्वात्ममहेश्वरः स्फुरणस्वभाव आस्ते ततः अरूपता, एकरूपता, बहुरूपता वा प्रभोः तथा तथा स्फुरणात् स्वभाव एव नान्यः।

## विकल्पो नात्मानं स्पृशति

विमृशामीति प्रतीत्या सदा स्वच्छन्दमवभासमानः स्वात्मा नापेक्षते मोक्षम्, नास्त्यस्य किमपि बन्धनम्, प्राप्यं हेयं वाऽस्य किमपि न भवति। अस्मीति चेदयं प्रतीयाद् नास्मीति विकल्पात्[१] च्युतो भवेत्। तथैव नास्मीत्येवं परिच्छेदस्वीकारे अस्मीतिविकल्पहानं स्यात्। अतश्च स्वात्मा विकल्पैरस्पृष्टः शुद्धः अविकल्पको राराजते।

---

१. विकल्पो हि अन्यापोहलक्षणो द्वयं घटाघटरूपम् आक्षिपन् अघटाद्व्यवच्छिन्नं घटं निश्चिनोति। प.सा.वि., पृ. ३३.

**शक्तिर्मेऽस्ति समस्तवैभवमयी**

केचन साधकाः बाह्यविषयाणां वर्जनं कुर्वन्तः आन्तराणाम् इदमात्मकानां वस्तुतः जडानामेव[१] अहन्तया परिशीलनम् आरभन्ते। तत्रैव च तोषमनुभवन्ति परमेतेन अमृतमयं व्यापकं सूक्ष्मस्वरूपं आत्मतत्त्वम् अपलपितं भवति यत् स्वतः सिद्धं चकास्ति। अतः कृत्रिमां काञ्चिदपि क्रियां बुधो नाश्रयेत अपितु बाह्याभ्यन्तरसर्वपरामर्शसाधके पराऽहम्भावे आत्मारामतया बुधैः स्थेयं भवति। कश्चासौ सिद्धः अहम्भावः इति जिज्ञासायां शास्त्रकृद्भिः समाहितं-यत्र अहम्भावे देहस्य इन्द्रियस्य मनसः बुद्धेः प्राणशून्यादेर्वा स्पर्शो न भवति अथवा एतेषां स्पर्शलेशस्य भाने सत्यपि अनादरो भवति। तत्राऽपि एष पराहम्भावः तिष्ठति। इदन्तु सुस्पष्टम्; मयि स्थिते एव अन्यवस्तूनां भानं भवति, मयि अभाते तु कुत्रापि कदापि किञ्चिन्नैव भाति। अतएव शिवरूपाद् मत्तः किञ्चिदपि भिन्नम् न भवति। यदि किमपि भिन्नं स्यात् तर्हि तेन अहं बद्धः भवितुं शक्नुयाम्, नास्ति कश्चन प्रकाशरूपाद् मत्तः भिन्नः अतः कथमपि अहं बद्धो भवितुं नार्हामि। यदि बद्ध एव नास्मि तर्हि मुक्तेः का वार्ता। अहं तु परिच्छिन्नरूपवर्जितः एक एव सदा विलसामि तत्तत् सर्वं रूपं गृह्णन् सर्वरूपो वा भवामि। योऽयं देहः, याश्चेमाः देहक्रियाः, ये प्राणाः, यन्मनः, या बुद्धिः, या वा तास्ताः कल्पनाः ताः सर्वाः अपि मयि प्रकाशमाने एव भासन्ते। सर्वमप्येतद् मम वैभवमेव भवति। न तु मां विकारिणं करोति।

**सर्वाधारः प्रभुः शिवः**

स्वरूपं[२] तुं शुद्धं विद्यते। नास्ति तत्र काचन विक्रिया। आद्यन्तवर्जिते नित्ये चिदाकाशे कस्यचिद् आधारस्य कल्पना न सम्भवति यतो हि स्वात्मा एव सर्वाधारः

---

१. (क) परिच्छिन्न-प्रकाशत्वं जडस्य किल लक्षणम्।
जडाद् विलक्षणो बोधो यतो न परिमीयते॥ श्रीतं.आ., ३/१०१.

(ख) जडस्य हि लक्षणमुक्तम् - नास्यात्मीयः प्रकाश इति।

२. (क) यत्तु गृहीततारूपसंवित्संस्पर्शवर्जितम्।
शुद्धं जडं तत्स्वरूपम् .............॥ श्रीतं.आ., १०/१८२.

(ख) इत्थं क्रमोदितविबोधमहामरीचि-
सम्पूरितप्रसरभैरवभागभागी।
अन्तेऽभ्युपायनिरपेक्षतयैव नित्यं
स्वात्मानमाविशति गर्भितविश्वरूपम्॥ श्रीतं.आ., ३४/३.

स्वयं तु निराधारः। परमेतस्मिन् अमृतमये चिद्रूपे[१] तमसः परिकल्पना नैव सम्भवति। एक एवाऽयं स्वयमेव देशो भवति, रूपं भवति, क्रिया, कालः, द्रष्टा, ज्ञाता च भवति। भोगः भोक्ता, सुखं, दुःखं भवो[२] भावश्च स्वयमेवासौ भवन् भाति। यः अज्ञानाद् बाह्यार्थं पृथक् कुरुते स्वात्मनः, नासौ विजानाति "बाह्योऽर्थः पूर्णाहन्तायाः विघटको नास्तीति।" बाह्यार्थव्यावृत्त्या यद् देहमात्रे अहन्तास्पदतां स्वीकुरुते तदेव देहस्थैर्यम् अभिलषतः तस्य जनस्य अपूर्णता, तं क्लेशयति। अतः सावधानैः साधकैर्भाव्यम्। न बहिः न वा अन्तःलौल्याद्[३] इतस्ततः धावनं विधातव्यम्।

**देहो नास्मि न चास्मि माननिवहः।**

स्वरूपं निराभासं[४] विद्यते। तत्रैव रमणं विधेयम्। प्रयत्नेन विषयाणां ग्रहणं यथा न विधेयं तथैव अक्षिणी न निमीलयितव्ये यत्नतः। यद् भानं विशुद्धं भवति, सर्वान् भावान् प्रकाशयति अथ स्वयं प्रकाशते परानपेक्षं तद् भास्कर इव प्रकाशवपुः-स्वरूपं सदा विजृम्भते। यथा भगवान् भास्करः तानि तानि वस्तूनि प्रकाशयन् तद्रूपतां न प्रयाति तथैव प्रकाशात्मा स्वात्मा वस्तुजातं प्रकाशयन् तत्परिच्छेदजातं नाकलयति।

रविसन्निधौ न रात्रिन्दिव-परिकल्पना प्रक्रमते। तथैव स्वात्मसन्निधौ ज्ञानाज्ञानप्रविभागः नोज्जृम्भते।

---

१. यत्स्वयमेव प्रकाशते, नान्यतः, प्रकाशत एव च,न तु प्रकाश्यतेऽन्येनेति, तदेव तत्त्वतश्चिद्रूपम्। ई.प्र.वि.वि., खं. १, पृ.९१.

२. (क) मायादिरवीच्यन्तो भवः ......। श्रीतं.आ., ८/३५२.

(ख) भूम्यादिसदाशिवपर्यन्तं भवाभवातिभवात्मकं विश्वम्। स्प.सं., पृ. १.

(ग) तस्मात् स्वयं स्वभावेन भावैर्भावी भवेद्भवः। शि.दृ., ४/५१.

३. (क) तिरोधिः पूर्णरूपस्यापूर्णत्वं तच्च पूरणम्।
प्रतिभिन्नेन भावेन स्पृहातो लोलिका मलः।। श्रीतं.आ०, १३/१११

(ख) अणूनां लोलिका नाम निष्कर्मा याभिलाषिता।
अपूर्णम्मन्यताज्ञानं मलं सावच्छिदोज्झिता।। श्रीतं.आ., ९/६२.

(ग) मलोभिलाषश्चाज्ञानमविद्या लोलिकाऽप्रथा। पू.प्र.का., १/४४६.

४. (क) निराभासो ह्यसौ। तस्य हि सर्वमाभासते। न तु कस्यचित् सः।
ई.प्र.वि.वि., खं. ३, पृ. १९.

(ख) नाहमस्मि न चान्योस्ति निराभासस्तदा भवेत्।
सावस्था परमा प्रोक्ता शिवस्य परमात्मनः।। ने.त., ८/३९.

## भूत्वाहं भविता नहि

स्वात्मा सदा पूर्णस्तिष्ठति। तज्ज्ञोपि पूर्णो भवति। देहस्थितोप्यसौ महेश्वर इव देहसम्बन्धेन परिच्छिन्नतां नाश्नुते। गुरुः साधकं शास्ति-त्वं देहो नाऽसि, न वा देहस्तवास्ति। त्वं तु केवलः प्रकाशोऽसि, त्वं न स्थिरोऽसि न वा चंचलोऽसि, स्पृहारहितस्त्वं त्वमेवाऽसि।[१] यदा तु साधकः पूर्णतायाः प्रकाशोदयेन सिद्धो भवति तदा नित्यपूर्णस्य अस्य, कस्य पूर्त्यै इच्छा समुदियात्, नित्यमुक्तस्य अस्य न कश्चन स्पृहा-सम्बन्धः, नाऽयं विधिनियन्त्रितः निषेधयन्त्रितो वा भवति। यथासुखमसौ सर्वान् प्राणिनः सुखयन् विहरति। अहं सदा प्रकाशमान एवास्मि, किमपि भूत्वा भविता नास्मीति।

## भास्यन्ते संविदा त्वमी

यत्किमपि भवनं तस्य सर्वस्य अहमेवास्मि भासकः। अवभासनमेव चैतन्यम्। तच्च उच्छलितैश्वर्यस्य मम स्वभावभूतमस्ति। अस्माभिः सदैव एतदनुशीलनीयं यद् मयि एव ते ते भावाः भान्ति किन्तु परिवर्ततां तेषां तेषां भावानां नश्वरी स्थितिः आगत्य विनश्यति परं या प्रकाशवपुषः मम स्थितिः सा सर्वान् आलम्बनदानेन उपकुर्वन्ती स्वयं सत्या स्वच्छा स्थिरा च सदा राजते। कदाचिदपि न नश्यति।

## हकलायामिदं विश्वममि देवो महेश्वरः

एतदत्र रहस्यं यद् आचार्यवान् पुरुषः देहवर्जनपुरःसरं स्वरूपस्थः सन् सदा पूर्णो भाति। यस्तु नाचार्यवान् स तु देहवान् केवलं मोहादेव पूर्णत्वम् अन्विष्यन्नपूर्णतां व्रजति। अतः अस्माभिः इदं ध्येयं यत् शुद्धचैतन्यं स्वरसतः विषयवर्जं भाति, तदिदं तस्य विश्वोत्तीर्णं स्वरूपम्। यदा त्वेतद् देहं गेहमन्यद् वा विषयजातं स्पृशति तदा अस्य एतद् भानं विश्वाकारमयं भवति। इदन्तया भाने त्रिविधं रूपं चकास्ति- स्थूलं सूक्ष्मं परञ्चेति। तच्च हकलारूपं भवति। सर्वमिदं विश्वं हकलायां विश्राम्यति। अकारे मकारे च कलावान् महेश्वरो भाति। एवञ्च अहमिति स्वरूपे देहादिः इदन्तास्पदीभूतो हकलायां विश्राम्यति किन्तु तस्य आदौ अन्ते च देवो महेश्वरोऽयं विराजते। मयि मत्त एव उन्मेषो वा भवेद् निमेषो वा भवेत्, प्रवर्तमानो भवति। उन्मेषादिः यस्य यस्मै वा प्रवर्तते स एकरसः सदा अहं विलसितो भवामि।

यस्य अहमर्थः न देहादिः अपितु शिवः, स एव व्यापकः सूक्ष्मः विलक्षणश्च भवन् सिद्धः, सर्वज्ञः, नित्यपूर्णः अविक्रियश्च आस्ते। साधकैः इदन्तु ध्येयं यद् अहं यत्र भवामि, यथा भवामि तत्र तथा स्वयं स्थितोऽस्मि परिकल्पितायै स्थित्यै

---

१. नासीदृशस्त्वं न च तादृशस्त्वं त्वं कीदृशोसीत्यनुयोगशून्यः।

त्वं यादृशोऽसीत्यपि नैव वक्तुं योग्योसि शम्भो त्वमसि त्वमेव।। सं.स्वा.,७

उन्मनायमानेन यत्नाद् यत्नान्तरं नैव आस्थेयम्। अहं प्रकाशवपुरस्मि। स्वभावो नास्मि प्रत्युत स्वभावी अस्मि। चिदात्मनो मे यत्स्वरूपं यद् वा विश्वरूपं तत् परस्परं नैव भिद्यते।

## अनुरक्तां सतीं हित्वा नोपैत्यन्यां महेश्वरः

शिवयोगी चिन्मयीं प्रियां स्वसंविदम् अवलोकयति। नासौ प्राणमनोबुद्धीन्द्रियाणि अनुगच्छति। देहावलोकनमसौ रोगं मनुते, स्वात्मावलोकनं योगमवगच्छति। अस्त्यनयोर्दृष्ट्योः महान् प्रभेदः। देहः परिच्छेदवान् भवति स्वात्मा तु परिच्छेदं न सहते। नाडीत्रयाधारिते मानवजीवने इडायां पिङ्गलायां वा या स्थितिः सा देहात्मना स्थितिरित्युच्यते या तु मध्यनाड्यां कुण्डलिन्यां स्थितिः सा स्वात्मस्थितिरित्यभिधीयते।

श्रीगुरुरस्मान् प्रबोधयति; यो जनः स्वं देहं वशीकर्तुं न प्रभवति तस्यान्यत् किमपि कथं वशं भवेत्। यः स्वात्मस्थितिर्भवति तस्य तु देहोऽपि चिदानन्दरूप एव भाति। सन्त्यक्तदेहसम्बन्धः साधकः स्वरूपानुरागी भवति। नासौ क्षयशीले विनश्वरे देहे नितराम् अनित्ये कमपि रागमाविष्कुरुते।

## भास्यानां भासकश्चैष आदिसिद्धो महेश्वरः

यद् यद् भास्यं भवति तस्मात् तस्माद् भासकः पूर्वसिद्धो भवति यस्माच्च समेषां भास्यानामहमेव भासकोऽस्मि तत एव पूर्वसिद्धः नित्यः नित्यसिद्धश्चास्मि, कथमपि अहं साध्यो न भवामि। अतएव गुरोः शिक्षणमीदृशम् प्रवर्तते; यं स्वात्मानं महेश्वरम् अन्वेष्टुम् इतस्ततः परिभ्रमसि स स्वयमेव त्वं नित्यसिद्धश्चकास्सि। कदाचिदपि भासकः भासक एव भवेद् भास्यं भास्यमेव भवेद् नहि भासकस्य भास्यत्वमापादनीयं भवति। भास्यं भासकसंलग्नं सदेव भासते इति तस्य पारतन्त्र्यं जाड्यं च भवति। भासकस्तु भास्यनिरपेक्षः सन्नवभासमानो नितरां स्वतन्त्रो भवति।

## समे साम्यं प्रतिष्ठितम्

अयि भोः सुहृदः! समता समे ब्रह्मणि परशिवे भवति। न देहे विषमे साम्यं जातुचित् तिष्ठेत्। यदिदं साम्यं स समस्य धर्मः अस्ति। स्वभावस्यैव धर्मरूपता भवति। समे स्वात्ममहेश्वरे यत्साम्यं स्वभावभूतो धर्मो विद्यते तस्य साम्यस्य धर्मस्य आनयनाय अपाकरणाय वा क्रियमाणो यत्नो विफल एव भवति। यतो हि स्वभावभूतं साम्यं समे स्वात्मनि प्रतिष्ठितमेव भवति।

गुरुभिः प्रबोधितः साधकः पूर्णतां प्रत्यभिजानाति, सर्वतो विसारिणीम् समतां परिचिनोति, स्पन्दात्मिकां क्रियां सत्करोति अथ स्वां विभुतां परिज्ञाय नितरां मोदते।

अयि सुहृदः! अस्मिन् जन्मनि इतः पूर्वस्मिन् वा जन्मनि अद्यावधि देशेन

कालेन वा परिच्छिन्ना क्रिया अस्माभिरनुष्ठिता यत्किमपि भोग्यमुपार्जितं तत् सर्वं विनश्वरमेव। नश्वरक्रियया नश्वरभोग्यमुपार्जयतामस्माकं जन्म जन्मान्तराणि व्यतीतानि, शान्तिर्नैव लब्धा। अतः इदानीमपि तादृशकर्मानुष्ठाने न मनो देयम्। यदपरिच्छिन्नं तदेवात्मतत्त्वमुपास्यं येन अविनाशि आनन्दमयं धामावाप्येत।

प्रभोरिदमनुग्रहकृत्यमस्माभिरवश्यमुपास्यम्।[१] तत्फलतया शाश्वतं सर्वथा सिद्धस्वरूपं चिन्मयं स्वस्वरूपमवगत्य पूर्णाहन्तायां विश्रान्तिर्लभ्या। तद्विपरीतं तु प्रभोः निग्रहाख्यं कृत्यम्। यद्वशेन स्वं रूपं निर्मातव्यं मत्वा निर्माय तत्प्राप्तव्यम्, ततो ग्राह्यं तद्भविष्यतीति योऽयं भावः स नूनं निग्रह एवास्माकम्। नात्र निग्रहकृत्ये अवस्थाने कदाचिदपि पूर्णता, पूर्णाहन्ता, पराहन्ता, वास्माकं प्रकाशितुं शक्यते।

## सम्पन्नारायणस्मृतिः

अतः प्रभोः अनुग्रहप्राप्त्यै स्वरूपविस्मृतिं परिहाय स्वरूपस्मृतिरनुसर्तव्या- येन सर्वदा सर्वत्र स्थितं सनातनं दिव्यं चिन्मयं स्वरूपं प्रकाशेत। ततश्च इच्छामात्रेण सर्वं वस्तु अवाप्तुं शक्यते। या देहात्मदृष्टिः सा प्रभोर्निग्रहोऽस्मासु तदनुग्रह-प्राप्तिपुरःसरम् देहात्मतां परित्यज्य प्राणस्थितिं व्युदस्य प्रकाशैकस्वभावमवाप्य सर्वं देहादिकं वस्तु स्वस्मिन् प्रकाशनीयम्।

## इच्छाशक्तिः महेशानी

शिवस्य इच्छाशक्तिः सर्वार्थसाधिका भवति, सा ज्ञप्तौ ज्ञानात्मिका देहे तु क्रियात्मिका सती चकास्ति।

पूर्णम् आनन्दनिर्भरं वर्तमानं स्वरूपं परित्यज्य भविष्यद्भूतचिन्ताप्तो यदि कश्चिद् भवेत् स न साधुकारी भवेत्। अतश्च विद्यमानं शान्तं शुद्धं निजानन्दमयं स्वरूपं विहाय नैवास्माभिः इतस्ततः परिधावनं विधेयम्। प्रत्युत स्वतः सिद्धम् पूर्णानन्दात्मकं स्वरूपं मुहुर्मुहुः विमृश्य व्यक्तं तद्रूपं दर्शं दर्शं स्मारं स्मारं वा सुस्थिरा शान्तिरवाप्या।

यदि कश्चिदपि जनः नित्यमपि स्वरूपं निर्मातुमिच्छति तर्हि स नूनम् अनित्यत्वमेव तत्र साधयितुं यतते। असौ किल स्वयं पूर्णत्वं स्वयमेव आच्छाद्य

---

१. बध्नाति काचिदपि शक्तिरनन्तशक्तेः
क्षेत्रज्ञमप्रतिहता भवपाशजालैः।
ज्ञानासिना च विनिकृत्त्य गुणानशेषा-
नन्या करोत्यभिमुखं पुरुषं विमुक्तौ॥ प.सा.वि., पृ. ३०.

अपूर्णत्वं तत्रोद्भावयति। अस्माभिरिदमेव सततं ध्येयं यत्; शिवः सततम् अहन्तया परिभासमान आस्ते। .नास्य कश्चिद् आकृतिविशेषो रूपविशेषो वास्ति। स च सदा सन्नेव भवति। स्वयंसिद्धोऽसौ सदा निर्मलस्वरूप आस्ते। अत्रैव निजस्वरूपे यथा दृढ़ा भक्तिरुदियात् तथा श्रीभक्तिनाथो विश्वनाथः कृपां मयि विदध्यात्।

## शिवयोगी शिवायते

जागतिकं कर्म कदाचित् सुखहेतुतां दुःखहेतुतां वा स्वात्मनि बिभर्ति किन्तु स्वरूपसाक्षात्कारद्वारेण तादृशं कर्म अविगणय्य दूरीकृतसर्वव्यथः साधकः स्वात्ममहेश्वरमेव सर्वतो विजयिनमभिनन्दयति। ईदृशं महामहिमशालिनमीश्वरमात्मानं विज्ञाय तदीयं मुख्यमैश्वर्यम् अवाप्य शिवयोगी संसारे विहरन् देही सन्नपि न जीवायते प्रत्युत शिवायते।

ध्येयमेतद् यत् स्वात्ममहेश्वरे यथार्थाक्षरे यद् वयमनुभवामस्तदेव प्रकाशामहे। नहि अनुभवप्रकाशयोः कश्चन भेदलेशोपि भवति। वस्तुतस्तु स्वयं भानमेव भानविषयः सद् भासते। भानं स्वरूपतया विषयतया च भासते। हेयोपेयमतिस्त्याज्या स्वकीया सर्वात्मता यद्यपि स्वभावसिद्धा तथापि तस्य प्रकाशनं दृढ़ेन विमर्शेनैव विकल्परहिते हृदये भवति। साधकेन निर्विकल्पे सिद्धे स्वात्मनि रतिर्विधीयते, न तु भाताकृतौ स्पृहा विधीयते। जगति यत् किमपि मेयं ज्ञेयं वा विद्यते तत्सर्वं ममैव स्वरूपमस्ति। नात्र हेयोपादेयबुद्धिराविष्कार्या। इदं हेयम् इदन्तूपादेयमित्येवं या मतिः सा नूनं स्वात्मविश्रान्तिं निरुणद्धि।

निजात्मा देशेन कालेन वा परिच्छिन्नो न भवति। निराधारोऽसौ सर्वाधारभूतस्तिष्ठति। सदा सन्तमेनं स्वप्रकाशं चिदानन्दमयं[१] शिवयोगिनो मुहुर्मुहुः अहमात्मना परामृशन्तो जयन्ति।

अनादिनिधनः स्वात्ममहेश्वरः शान्तः सन्नपि अशान्त इव कदाचिद् भाति यावत्, तावद् विद्यामाश्रयते। विद्याश्रितस्तु प्रशान्तमेवात्मानं परिपश्यन् निजानन्द-[२] परिप्लुतोऽसौ राराजते।

## ताभिः किं विक्रियामेमि स्वोर्मिभिश्च सुधाम्बुधिः

जगति तेषु तेषु विषयेषु इन्द्रियादिना ये आनन्दकणा अवाप्यन्ते, ते वस्तुतः स्वस्वरूपात् स्वात्ममहेश्वरादेव समुद्गता भवन्ति। यथा सागरे अनन्ता बुद्बुदा उद्भूयन्ते

---

१. परशिवतत्त्वस्य स्वरूपं चित्। स्वभावश्चानन्दः। स्वस्वरूपानुप्रविष्टचिन्निर्वृति-रूपशक्तिद्वयः प्रकाशानन्दमयः पूर्णः परमेश्वरः शिवः ...। शि.दृ.वृ., पृ. २३.

२. षट्सु आनन्दभूमिकासु प्रथमा भूमिः निजानन्दरूपा भवति।
निजानन्दे प्रमात्रंशमात्रे हृदि पुरा स्थितः। श्रीतं.आ.वि., ५/४४.

परन्ते भवन्ति अत्यन्तं चञ्चलाः। सागरस्तु अनन्त-बुद्बुदान् स्वात्मनि न केवलम् उद्भावयति, प्रत्युत तान् धारयन् स्वस्मिन् स्थापयति अथ विलापयति। एवमेव आनन्दसागरः स्वात्ममहेश्वरः स्वैरमात्मानमहन्तया इदन्तया च प्रथयति। केषुचिद् इदन्तास्पदेषु देहेन्द्रियादिषु तद्भोग्येषु च बुद्बुद्सदृशान् आनन्दकणान् अपि उद्भाव्य स्थापनविलापनमयीं क्रीडामसौ वितनोति। परं चञ्चला आनन्दबुद्बुदा यदि मनोरमा भान्ति तर्हि आनन्दसागरस्य कीदृशी मनोज्ञता श्रद्धेयता च भवेदिति बुधैः सुतरां ध्येयम्। अतश्च प्रतिभाते वेद्यवस्तुनि आनन्दप्राप्त्याशालौल्याद् विच्युत्यवश्यम्भावौ-चित्याद् मनो निवर्त्य स्वस्वरूपे सुस्थिरे ह्यानन्दधाम्नि स्थितिमिच्छन्तः साधका जयन्ति। अस्थिरे प्रतिभाते स्थितिमबुधा एव कामयन्ते बुधास्तु स्थिरे स्वात्ममहेश्वरे शाश्वते निजानन्दनिर्भरे स्वस्वरूपे। येन तु प्रतिभाते वेद्ये एव आनन्दान्वेषणं विधीयते, आनन्दधामभूतः प्रतिभानभूः स्वात्मा सच्चिदात्मा तु न श्रद्धया पौनः पुन्येन स्मर्यते, स आनन्दस्वरूपात् प्रच्युत इव दुःखभवाब्धिमध्ये पुनः पुनः प्रक्षिप्यते। तदेतत् परिभाषितं भवति- **''आत्मैव रिपुरात्मन''**इति।[१]

## विश्वासैकभूः स्वात्मशिवः

यस्तु शिवगुरुकृपया परिपूतो भवति, श्रद्धाधनो विश्वासैकभुवं स्वात्मशिवं शरणीकुरुते तस्य स्वानन्दसिन्धुप्रपत्तिर्भवति, याऽस्मै सार्वात्म्यसिद्धिं प्रयच्छति। एतादृशो निभृतपुण्यसम्भारो व्रती स्वरूपसंकोचप्रवणान् मितान् विषयव्रातान् उपेक्षते, परित्यजति किलैष सुखाभासान्वितान् तृणोपमान् विषयान् स्वात्मधान्यार्थी विद्वान्।

## विकल्पसंस्क्रिया

यादृशोऽहमस्मि सोहं नास्मि सुखी अथ तादृशो भवामि येन स्यामहं सुखी इत्येवं शतशो विकल्पान् उत्पादयन् कियत्कालमेव तान् स्थापयन् मुहुर्मुहुस्तत्र विश्रान्तेरलाभाद् तान् विलापयन् सर्वो जनो जनिमृतिमयं जीवनं गमयति जीवनान्तरं च प्रयाति। कश्चिदेव साधकः प्रत्यभिज्ञामार्गमवलम्बमानो विकल्पान् अविकल्पमयान् कुर्वाणो विनश्वरान् सुखतदुपायान् उपेक्षते। अपेक्षते चासौ सुखस्रोतोभूतं सहजानन्द-समुल्लासभरमद्वितीयमात्ममहेश्वरं स्वपरप्रकाशमनुत्तरमुत्तमोत्तमं धाम स्वप्रकाशम्।

## अप्रमत्तः सदा तिष्ठेत्

परं परमं रहस्यमयं शरण्यं तत्त्वमेतत् क्षणं बुध्वापि बुधाः केचन प्रमादिनो भवन्ति[२] अविद्याग्रहमत्यजन्तः। अविद्यायामन्तरे वर्तमाना देहेन्द्रियादिष्वनात्मसु

---

१. श्रीम० भ० गी० ,६/५.

२. नित्यं निरावरणमप्रतिमस्वरूपं
 शम्भुं स्वभावविमलं हृदि संस्फुरन्तम्।

आत्मत्वमभिमन्यमानाः न च शक्नुवन्ति भासितुं विद्यां, स्थापितुं वा तत्र स्वात्मानम्। मुहुर्मुहुरेते अविद्यातः अविद्यान्तरं प्रक्षिपन्तो ब्रह्मपदवीतो वराककोटौ आत्मानं पातयन्ति। तत एव तु प्रमाणैरप्रपञ्चितम् अनिर्देश्यमपि स्वरूपं निर्दिश्य दिदृक्षावन्तः सन्तो द्रष्टारमात्मानं दृश्यतया अन्वेष्टुकामा इतस्ततोऽजस्रपरिभ्रमणश्रममुद्वहन्तः समाधिसुखाद् दूरे वर्तमाना वञ्चितात्मानो भवन्ति गर्हितात्मानः। यथाह भगवान् वासुदेवः-

**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्।** ।इति।[१]

नहि किमपि वस्तु स्वस्माद् भिन्नं लब्धात्मभावं भवेत्। यत्स्वभेदानुयोगि भवति तदेव स्वभिन्नमित्युच्यते। स्वत्वं च प्रकाशमानत्वम्, न त्वन्यत्। तादृशं स्वत्वं वस्तुत्वं वा प्रकाशे प्रकाशसंलग्ने प्रकाश्ये वा यदि विजृम्भते तर्हि कस्यापि वस्तुनः स्वभिन्नत्वं कथमपि नैव सम्भाव्यते। ततश्च समस्तशास्त्राणामयमेव उपदेशसारः प्रवर्तते यद् निखिलस्य जगतः प्रकाशको भानभूः स्वात्मैव स्वैरमितरानपेक्ष एव वैचित्र्येण अन्योन्यभेदेन च वेद्यजातं वितन्वानः द्वैतमयविश्वप्रपञ्चरूपेणापि भासमानः अद्वयमयस्वरूपादविच्युत एव सन्नवभासमानवपुर्विजयते। निखिलवेद्यानां विज्ञातुः विज्ञेयेन केनचिदपि प्रकाशनाय या समीहा सा रिक्तैव भवेन्न तु सार्थिका। ज्ञातव्यानां च सारभूतमात्मस्वरूपमेवेति तदतिरिक्तस्य प्रतिभासितस्य ज्ञातव्यत्वेन साध्यत्वेन वा निर्धारणं न केनचित् प्रतिपत्रा अनुशंस्यते। यथाह भगवती श्रुतिः-विज्ञातारमरे केन विजानीयादिति।[२] देहं देहोद्गतं वा स्पन्दं श्रद्दधतो जनान् सुस्पष्टं भर्त्सयति शास्त्रम्। यतो हि तादृशा जना नैव प्राप्नुवन्ति पूर्णतां न वाधिगच्छन्ति सुखमयीं शान्तिम्।

पूर्णशक्त्या स्वतः स्फूर्तया हि आत्मनो मुख्यमैश्वर्यं प्रसरति। तमेनं प्रसरणक्रमं निरुन्धन्निव भेदोन्मुखीभूतया स्वल्पशक्त्या कश्चन अविवेच्यकारी एव प्रभवेन्नान्यः। यतश्चानेन निरोधेन वस्तुत आत्मैव निरुध्यते सोऽयमात्मापराधः। न चात्मापराधं क्षमापयितुं शास्त्रमपि क्षमते। श्रीगुरवस्त्वेनं महापराधमाहुः।

**स्वापरामर्शनं ह्येतदपराधो महान्ननु।**
**अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः।।**[३]

---

पश्यन्ति नैव कृतिनः सुकृतैर्भवन्तं
यावद् भवान्न गुरुरूपतया विभाति।। सं.स्वा., ४७६.

१. श्रीम० भ० गी०,६/६.

२. तै०वा०श्लो० २/९/८७.

३. पू.प्र.का., २/२६१.

## स्वभावसिद्धं कथमाप्नुयुः शिवम्

अतोऽयं विवेको नूनमनुसर्तव्यो यद् देहस्पर्शमन्तरेण यस्य विद्यमानता भवति तस्यैव स्थिरता आनन्दरूपता चेष्यते यस्तु देहसम्बन्धमन्तरा न प्रथते तस्य अस्थिरता अपूर्णता अस्वभावतैव वा इष्यते। कीदृशीयं विडम्बना यत् सर्वथा स्वतः पूर्णः स्वयमसौ अपूर्णमेव देहादिकं पूर्णम्मनुते। वस्तुत इयमेव मायेत्युच्यते यदयं सर्वो जनः स्वयम्प्रकाशः सन्नपि पुनः प्रकाशितुं यत् किञ्चिन्नूतनं भूत्वा भवितुमिच्छति तदिदं तत्स्वरूपावृतिर्मायेत्युच्यते, सैवैषा अपूर्णता किल अविद्याभिधाना।

हा हन्त! सर्वेभ्यो भातेभ्यो भासकतया पूर्वतः सिद्धस्य सदा विद्यमानस्य निरपेक्षं प्रकाशमानस्य या काचन बुभूषा समुदेति सा नूनं महामाया यद्वशगा जना जन्मजन्मान्तरेऽपि भ्राम्यन्तः सन्तः स्वभावसिद्धं शिवमात्मानमवाप्तुं नैव प्रभवन्ति।

## प्रकाश एव भावानां स्वभावः सर्वसम्मतः

किमपि वस्तु स्वात्मनो भिद्यमानं यदि नाम भवेत् तदा कथंचित् तत्प्राप्त्या तत्प्राप्त्यभिलाषेण वा स्वात्मतोषणाय कश्चन प्रभवेदपि यदा तु भावानां प्रकाशस्वभावतैव विजृम्भते तदा वराकिनी बुभूषा किमिव नूतनं सम्पादयन्ती हितमावहेत्। अतोऽस्माभिर्विकल्पहीनैर्भाव्यम्। तास्ता विकल्पना एवास्मान् दुःखे दुःखमये वा मार्गे विक्षिपन्ति। स्वातन्त्र्यशक्त्या समेधितैरस्माभिस्तु स्वस्मिन्नेव स्वरसतः रामणीयकं सुस्वादु किञ्चिद् रसयितव्यम्। वृथा दारिद्र्यमुपकल्प्य दैन्यं भजतां दुःखदावाग्नावेव समुपनिपातनमात्मनो लाभो नान्यः।

## महिमा स्वातन्त्र्यस्यास्य दृश्यताम्

सर्वोऽयं लोकः परमेश्वरेण सर्वासां शक्तीनाम् आस्पदभूतया स्वातन्त्र्यशक्त्या योजितो विद्यते। तदवलोकनप्रसादेन न कापि सदिच्छा या न भवेत् सार्थिका। सदा स्वभावभूता साक्षात्कृता चैषा स्वातन्त्र्यशक्तिः केनापि न्यक्कर्तुमपि यदि न पार्येत अथापि मोहेनावृतिर्यदि जनस्य, तस्मादधिकं वैगुण्यं किन्नु सम्भवेत्। अतएव दयापारवश्यमयी श्रीमद्भगवदुक्तिर्विलसति-

**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः**।इति।[१]

सर्वोऽयं लोकः स्वयमेव निःसंशयं प्रकाशते, न केनापि कोपि यत्न आस्थीयते स्वं प्रकाशयितुम्। न वा आत्मनोऽस्तित्वविषये कश्चन किमपि कर्मानुतिष्ठति। नित्यसिद्ध एव सर्वः स्वात्मानमवाप्नोति सर्वथा सम्प्राप्तमेव। एतावता स्वस्य साध्यता प्राप्यता वा प्रयत्नशतेनापि शिरसासनसहस्रव्यापारेणापि नैव उपपादयितुं शक्या। यस्तु अपूर्णः, प्रकाश्यः, प्राप्यः, उत्पाद्यः, स्थाप्यो विलाप्यो वा भवति तस्य पूर्णता, इन्द्रसहस्रेणापि

१. श्रीम०भ०गी०,५/१५.

न भवति शक्यसम्पादा। अथापि पूर्णस्य स्वात्मनः कञ्चन अतिशयं साधयितुं जनो यतते, बुभूषामेव वराकीं समस्तसम्पत्समवाप्तिहेतुमभिमन्यते सर्वो लोक इति महदाश्चर्यकरमेवैतदिति प्रत्येमि।

हा हन्त! सर्वस्मिन् जने ईशकृपयैव समस्तवैभवमयी शक्तिः विलसति, सोऽयं सकलो लोकः स्वस्मिन् देहाद्याभाससमुद्भवान् नानाभावविकारान् प्रकल्पयन्, तेष्वेव स्वकल्पितेषु इदन्ताख्येषु जालेषु बद्धो दुःखाद् दुःखमनुव्रजन् निपततीव। उन्मेषं-निमेषं, विकल्पं-संकल्पम्, पूर्णत्वम्-अपूर्णत्वम्, साम्यं-वैषम्यम्, सुखं-दुःखं वा द्वन्द्वात्मकं विकल्पजालं प्रविष्टस्य ततो निःसृतिरवश्यं दुःशकैव प्रतिभाति। तमेनं विकल्पजालमेवावलोकितुं तत्परो विकल्पधनः विकल्पमेव मुहुर्महुरुद्ग्रहीतुमुद्युक्तस्तत्स्वरूपं स्वस्वरूपमिवानुमन्यमानः क्षणात् पशुतां गतः चिराय तत्रैव संसक्तो दुरुद्धरदुर्भरो दैन्यदैन्यं प्रयाति।

## भानभूर्भगवान् भवान्

कथन्न वेत्ति भवान्? अरूपः, एकरूपो बहुरूपो वा समेषां तत्तद्भावानामवभासको भवानेव नान्यः। यो भवान् तत्तद्रूपं परिकल्पयन् स्वयमेव नानारूपतां व्रजति, नानारूपं भजन्नपि स्वरूपाद् न हीयते, तदेव स्वरूपमेकमात्रं श्लाघ्यं नान्यत्। स्वरूपमेव स्मृतिपथमानीतं सर्वं प्रयोजनं साधयति। तदेव सर्वविधं सुखं प्रयच्छति। वस्तुतः स्वरूपस्मृतिरेव भक्तिरस्ति परमेश्वरस्य। सैषा स्मृतिरेव स्वात्मसंस्थितिरस्ति। अमुमेव स्वात्मरतिं वदन्ति तज्ज्ञाः। या च सत्क्रिया सापि स्मृतिं नातिरेचयति। अस्यामेवान्तर्भवन्ति अणिमादयः सिद्धयोपि।

एतदस्ति किमपि रहस्यम्। स्वात्मा नास्ति साध्यः। स तु स्वयं सदा सर्वत्र सिद्ध एवास्ति। किन्तु प्रत्येकं जीवः दुःखदुःखितो यदास्ते तत्रायमेव हेतुर्यदसौ सिद्धेन स्वात्मना सह तादात्म्यं न विजानाति। स्वात्मना सह सिद्धे तादात्म्ये तु साधनातत्परो जीवोऽपि सिद्धिमधिगच्छति अन्यथा नासौ सिद्धिमेति। तस्य सदा सिद्धस्य स्वात्मनो धर्मः स्पन्द इत्याख्यायते। तस्यैवापरं नामधेयं विद्यते चैतन्यम् इति। परन्तु बद्धानां जीवानां यो देहसम्बन्धस्तत्प्राबल्येनैवासौ प्राणनपरायणः सन् अपूर्णम्मन्यो भवति। यस्तु देहस्पन्दः स जीवपरिकल्पितत्वात् कृत्रिमो भवति। कृत्रिमस्पन्दवान् जीवो नित्यं स्पन्दमवाप्तुं[१] न प्रभवति तत एव दुःखी इतस्ततो भ्राम्यति। ये कृत्रिमं

१. (क) तत्र परमेश्वर; पूर्णसंवित्स्वभावः पूर्णतैव अस्य शक्तिः कुलं सामर्थ्यम्, ऊर्मिः, हृदयम्, सारः स्पन्दः, विभूतिः ...... अभिधीयते। तं.सं.,पृ. २७.

(ख) सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः।। शि.स्तो., २०/९. .......

स्पन्दमेव दुराग्रहवशतः स्वं स्पन्दं मन्वते त एव अविद्वांसो भवन्ति। एते देहसंसर्गवशात् पुत्रदारादौ परिच्छिन्ने वस्तुनि यथा रमन्ते न च दुःखविमुक्तिं भजन्ते तथैव परिच्छिन्ने एव प्रमातरि भोगे वा भूयोभूयो रममाणा अपि बद्धा एव तिष्ठन्ति।

## द्विविधःस्पन्दः

स्पन्दो द्विविधो भवति। अकृत्रिमः कृत्रिमश्च। द्विविधयोरप्यनयोः स्पन्दयोः ज्ञाता एक एव भवति किन्तु अकृत्रिमस्पन्दवान् ज्ञाता व्यापको भवति। कृत्रिमस्पन्दवान् स एव ज्ञाता व्याप्यो भवति। स्पन्दस्यैव अकृत्रिमस्य सर्वं महत्त्वं माहात्म्यं वा वरीवर्ति। अत एव स्पन्दं बहुमानं सम्मानयन्ति आगमिनः। एनं स्पन्दमाश्रित्य एक एव ज्ञाता स्तुत्यः स्तोता स्तुतिश्च भवितुं प्रभवति। वाच्यो वाचको वचनमप्यसावेव भवति। कार्यं कर्ता क्रिया देशः कालो वस्तु चेति सर्वरूपतया स्पन्दमहिम्नाऽसौ चेतनः प्रथते।

अयि धीधनाः! अविकल्पको बोधः सर्वस्मिन् काले सर्वत्र देशे च स्वत एव सिद्धश्चकास्ति। परमज्ञो जनो विकल्पभूमिं स्पृशन् तामेव च स्वामभिमन्यमानः परिच्छिन्नो भवन् नित्यसुखितां विजहाति। यो जनः परिच्छिन्नमेव देहादिकं विकल्पयति स बन्धमध्ये निपतति। यस्तु अपरिच्छिन्नस्य स्वात्मनो विकल्पनं विदधात्यसौ मुक्तिश्रियालिङ्गितो भवति। इह जगति ये ये पदार्थाः सन्ति ते सर्वे आभाससिद्धाः सन्तः प्रतीयन्ते। अतश्च सुयोगिनां यः परमार्थः सोपि आभाससिद्धः सन्नेव भासते।

## आभाससारःशिवः

सोऽयमाभासः स्वात्मनियन्त्रितो भवति। स्वात्ममहेश्वरो देवः आभासने पूर्णं स्वातन्त्र्यमात्मनि बिभर्ति। ततश्च स्वात्मा बाह्यम् आन्तरं वा यद् यदिच्छति तद् निर्बन्धमाभासयति। अद्यावधि जगत आभासनं यज्जातम्, यच्चाभासनं भविष्यति करिष्यते, यद्वा क्रियमाणमास्ते, तत्सर्वम् अविकल्पबोधात्मना स्वात्मनैव क्रियते।

---

(ग) अनन्तभावसम्भारभासने स्पन्दनं परम्।
उपोद्घातायते यस्य तं स्तुमः सर्वदा शिवम्।। ई.प्र.वि., खं. १, पृ.२८.

(घ) किञ्चिच्चलनमेतावदनन्यस्फुरणं हि यत्।
ऊर्मिरेषा विबोधाब्धेर्न संविदनया विना।। श्रीतं.आ., ४/१८४.

(ङ) दशादिक्कालाद्यैरकलितचिदालोकवपुषः
सदा तादृक्स्वात्मानुभवितृतया विस्फुरति यः।
निजो धर्मः शम्भोरनुपमचमत्कारसरसः
परं शाक्तं तत्त्वं जगति जयति स्पन्द इति तत्।। स्प.वि., पृ. १.

देशः कालो वा यदवभासते स सर्वो महिमा, बोधसुन्दरस्य स्वात्ममहेश्वरस्यैव, नान्यस्य कस्यचन इदन्तात्मनो भासितस्य।

यद्यपि अचिन्त्यो महिमा स्वात्मनो महेश्वरस्य प्रकाशाख्यस्यानाख्यस्य अथापि विमर्शपरिचेयोऽसौ चकास्ति। एष प्रकाशः अदेहः सन् वेदप्रवक्ता भवति। देही गुरुर्भवन् निखिलागमानामुपदेष्टा भवति। अथ सर्वं जगत् स्वस्मिन् उद्भावयन् संस्थापयन् विलापयंश्च स्वसंस्थं विमृश्य स्वस्थः सुखभूर्भाति।

अयि सुहृदः! अहमामर्शमयो हि भगवान् स्वात्मा। सोऽयं निर्बन्धः परिच्छिन्नस्वरूपं दिग्देशकालादिकमवभासयति। परन्तु अनित्यस्पन्दभाग् अज्ञः, भास्यनिष्ठं परिच्छेदमात्मनि समुपकल्पयन् परिच्छेदमङ्गीकृत्य खिद्यते। अतश्चावधानधनैरहमामर्शमये अविकल्पके स्वात्मनि स्थेयं, नत्विदन्तया प्रतिभासितं वस्तु अनुगन्तव्यम्।

## विमर्शः सोऽहमित्ययम्

परो हि परामर्शः अहमित्येवं स्फुरणशीलः। स एव परिच्छेदनमाभासयन् सप्रजेन इदमात्मना परिणमते। ये शब्दा ये चार्थाः इदमात्मना परामृश्यमाना भवन्ति ते विकल्पप्रसवा नितरां हेयात्मानो भवन्ति। यतो हि तैरेवैतैः बोधात्मनः स्वात्मनः अल्पत्वसम्बोधः प्रकाश्यते। अहमात्मना प्रकाशमानस्तु स्वात्मा अमृतमयश्चकास्ति, नवनवस्फुरणवानस्ति, व्यापकः चिद्घनः परमार्थश्च भवति। ततश्चायमहम्परामर्शो नितरां श्लाघ्यो विजयतेतमाम्।[१]

एष एवाहमात्मा परामर्शः संविद्-देवी[२] इत्यभिधीयते। सेयं स्वात्ममहेश्वरस्य

---

१. स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः।
विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहितः।। ई.प्रत्य. श्लो. १, पृ. ३५५.

२. (क) संविच्च कालकलनां सहेत यदि तत्स्फुटम्।
भुञ्जीमहि निशातासिच्छिन्ना व्योमांशशर्कराः।। मा.वि.वा., १/४१९.

(ख) ये त्वभ्यासपथेन संविदमिमां संस्कर्तुमभ्युद्यतास्
ते किं कुत्र कुतः कथं विदधतामित्यत्र संदिह्महे।। मा.वि.वा., २/४.

(ग) विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः।
परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः।। प.प्रा., पृ. १.

(घ) तेन संवित्तिकात्मैक-मातृमानप्रमेयता।
गृह्णती स्वप्रकाशत्वं स्वभावादेव भासते।। मा.वि.वा., १/४३३.

(ङ) सा चान्तःस्थितमन्त्रात्मशब्दनामर्शसुन्दरा।
अनपेक्षान्यविरहात् प्रमाणं स्वत एव हि।। मा.वि.वा., १/४३४.

सुतरां प्रिया तदभेदेन विलसति। वशवर्तिन्यामस्यां देव्यां स्वात्मन: काचिदपि सिद्धि: नैव असम्भविनी। संवित्तिदेव्या एव प्राणसंवित् प्रक्षुभिता भवति। अनयैव सर्वा नाड्य: संक्षुब्धा: क्रियन्ते स्ववशगा:। अनयैव शिवयोगिन: सर्वं स्ववशं कृत्वा नित्यसुखिनो जयन्ति। सैषा संविदेव नितरामुपादेया परोपेया सुतरां समाराध्येति काचन आगममर्यादा।

सुयोगिभिरिदमेव ध्येयं यत् संविद्-देव्या प्रतिभास्यतां गतं सर्वमल्पमेव भवति। तत्प्रतिभासितमेव देहेन्द्रियमनोबुद्धिप्राणशून्यात्मकमिति सुतरामल्पता चैषाम्। निगमानामागमानां चैष समुद्घोष:; ''नाल्पे सुखमस्तीति।''[१] अत: प्रतिभासितमल्पं न परिभावनीयमिति श्रीगुरूपदेशना काचिद् विजयते।

अनुत्तरस्वभाव: प्रकाशस्तु विश्ववेद्यस्य प्रकाशक: सन् तस्य स्वात्मा। अयमेव च सच्चिदानन्दमयो निजात्मा भूमा स्मृतिपथं नेयो योयं विश्वमयोपि विश्वोत्तीर्ण: स्वतन्त्र:। यदाम्नायते; ''भूमा वै सुखमिति।''[२]

इदमत्र सविशेषमवधेयम्; य: स्पन्दो मायाकलादिजन्य:, परिच्छिन्न: अल्पो वा भवति तत्र नात्मा योजनीय:। प्रत्युत अन्तर्बहि:प्रभेदशून्य: सततप्रवृद्ध: अकृत्रिमस्पन्दो य: संविदात्मा, तत्रैव आत्मनोऽवधाने जाग्रति स्वस्य सूक्ष्मता, व्यापकता, सहजता, निर्मलता, भगवत्ता, महेश्वरता च प्रकाशमाना स्वस्मै परस्मै च कल्याणपरम्परां सूते।

सेयं संवित्स्वातन्त्र्यलक्षणा निरामया भाति। इयमेव सर्वतोगामिनी समता इत्युच्यते। अपरिच्छिन्नतया अनिरुद्धा एषैव पूर्णता इत्यभिधीयते। समस्तवैभवमयी चेयमेव क्रिया स्पन्दशक्तिरिति गीयते। सैषा नितरां ध्येया स्तुत्या च शिवयोगिनाम्।

---

(च) यथाग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते।
तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्।। स्प.प्र., पृ. ३६.

(छ) संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम्।
तन्मेयमात्मन: प्रोज्झ्य विविक्तं भासते नभ:।।

तदेव शून्यरूपत्वं संविद: परिगीयते।
नेति-नेति विमर्शेन योगिनां सा परा दशा।।

स एव खात्मा मेयेऽस्मिन् भेदिते स्वीक्रियोन्मुख:।
पतन्समुच्छलत्त्वेन प्राणस्पन्दोर्मिसंज्ञित:।।

तेनाहु: किल संवित्प्राक् प्राणे परिणता ......। श्रीत.आ.६/९-१२.

१. छान्दो. ७/२३.

२. छान्दो. ७/२४.

**बैन्दवममृतरसमयं वेद्यं योऽनुत्तरे निजे धाम्नि।**
**पूर्णीभावयतितमाममृतेशं तं नमस्यामि।।** [१]

श्रीगुरु-स्वात्ममहेश्वरयोः परस्परस्तुत्यभावो विजृम्भते। आगमेषु सुस्पष्टमवलोकयितुं शक्यते श्रीगुरुणा महेश्वरःस्तूयते महेश्वरेण तु श्रीगुरुः स्तूयते। यथा रत्नमाला पुष्पमाला वा सूत्रे पिनद्धा भवति तथा पारमार्थिकी भवतु व्यावहारिकी वा भवतु "संविन्माला" आनन्दसूत्रेणैव पिनद्धा भाति। आगमशब्दसूक्ष्मार्थोपि "आ" कारेण आनन्दशक्तिः, "ग" कारेण गतिरवगतिरवबोधः, "म"कारेण मतिर्निश्चयात्मिका दृढ़ा च। सोऽयं समस्तोऽप्यागमः आनन्दशक्तेरधिगमे मनने चिन्तनेऽनुसन्धाने वा केन्द्रित आस्ते। स्वाभाविकमप्येतत् पुत्रवत्सलाया जगज्जनन्याः समुपन्यस्तानां जीवसमस्यानां समाधानार्थं परमेश्वरप्रोक्तत्वादामागमानाम्।

**स्वच्छस्वच्छन्दचिन्मात्ररूप एव महेश्वरः।**
**उपायोपेयरूपेण स्फुरन् भामि स्वतेजसा।।** [२]

जगदम्बा किल परमेश्वरप्रोक्तागमान् प्राथम्येन श्रवणाञ्जलिपुटपेयान् विदधाति। आगमाः परमेश्वरमुखाद् आगता भवन्ति, परमेश्वरीश्रुतिषु अनुगता भवन्ति, श्रीनारायणेन मता अनुमता भान्तीति स्फुटार्थोऽयं श्लोक आभाति-

**आगतं शिववक्त्रेभ्यो गतञ्च गिरिजाश्रुतौ।**
**मतं च वासुदेवस्य तस्मादागम उच्यते।।**

शिवः चिदानन्दमयः, शिवापि आनन्दमयी, नारायणस्तु आनन्दकन्दभूतः। शिव-शक्ति-नरादिकं विविधं त्रिकमपि देहलीदीपन्यायेन शक्तिमयम् आनन्दमयमेवाभाति। शिवस्य अवियोज्या काचन शक्तिः किलानन्ददा या निगीर्णेदन्ता निजानन्दमग्ना उद्गीर्णेदन्ता तु जगदानन्दमयी भाति। आनन्दसमुल्लासस्य सततसंवाहिनी कापि अजस्रलहरी चिदब्धिमापूरयन्ती काचित्स्वतन्त्रा अखण्डा एका सत्यपि अनन्ता इदन्ताव्यक्तीराभासयति। क्रीडारसे सस्नेहमिदन्ताव्यक्तीरालोडयन्ती किलानन्दशक्ति-रात्मास्तित्वमपि कदाचित् विस्मरन्तीवाभाति। निर्मितिक्रीडासमकालमेवासौ स्थित्यपीतिलीलामपि नाटयन्ती विस्मृतप्राया चेद् आनन्दहीना वयं न शक्नुमः पूर्णतामनुभवितुमपि तु विवशा भवामो रिक्ततामिव स्वीकर्तुम्। तदा काचन गुरुशक्तिः पूज्या अस्माननुगृह्णन्ती किल स्मारयति निजपूर्णताम् पूर्णताप्रत्यभिज्ञां स्वात्ममहेश्वराभिख्यामानन्दलालिताम्। सद्गुरुरुपदिश्य प्रबोधयति; अस्माकमानन्द-

---

१. ई.प्र.वि.वि.-तत्त्वसंग्रहा., प्रथमविमर्शः, १.

२. पू.प्र.का. -१/२.

मयीमस्तितां संवित्प्रकाशविमर्शमयीम्। नहि संविदात्मप्रकाशने परापेक्षामनुभवति- अतश्चेयमुच्यते स्वयम्प्रकाशा। अथ विश्वमपि प्रकाशयतीत्युच्यते परप्रकाशिकेति। सेयं स्वपरप्रकाशिका संविदेव अगाधं निजमहिमानं परिशीलयेत् विविधाम् आनन्दानुभूतिमङ्गीकर्तुं बाह्यप्रसरं वा यथेच्छमभिलषेत् नास्ति किञ्चिदपरं स्वस्माद् विभिन्नं किल। तथा च विश्वभावस्वभावोपि स्वात्ममहेश्वरः स्वस्मात् चिदानन्दरूपात् पृथक्कृतो नैव भवति।

श्रीगुरुपरम्पराप्राप्तनैजैश्वर्यसमुल्लसितश्रीगुरुणा कृपया विस्मृतमानन्द-निधिं स्वस्वरूपं प्रयच्छता महानुपकारोऽस्माकमाक्रियते। अथोदेति कश्चन आगमाश्रितो बोधो महार्थः। यत्रेयं जागर्ति प्रत्यभिज्ञाअतिदूरातिसमीपतटयोर्मध्यवर्तिनी काचित् पुण्यसलिला तटिनी देदीप्यमाना ''संविद्'' सविमर्शा सुप्रकाशा। सेयं गुरुशक्तिर्दीक्षाशक्तिपातमाध्यमेनानुग्रहं वितरन्ती गोमातेव सम्पूज्या न केवलमस्मान् संवर्धयति प्रत्युत विविधेभ्योऽपायेभ्यः परिरक्षत्यपि।

महेश्वरानुग्रहादेव श्रीगुरुदीक्षा प्राप्ता भवति। या चास्मभ्यं प्रयच्छति चितेः सुविशाले प्राङ्गणे विचरन्तीमानन्दपयस्विनीम्। यदनुस्मृतिमात्रेण पुष्पितेन हृदम्बुजा शिवगुरु-स्वात्ममहेश्वरार्चनपराः कृतार्था भवन्ति सुधियः साधकाः। दीक्षया जागृता चिज्ज्वालामाला ममतामूलामासक्तिं दहति। साधनातपः- शुष्कीकृतदेहेन्द्रियमनोबुद्धि-प्राणाश्रितमिताहम्भावस्वरूप इन्धनमहाराशिः चिज्ज्वालामालया दन्दह्यते। मिताहम्भावभस्मीकरणसमकालमेव चिज्ज्योतिः सद्गुरु-शिव-साधकत्रिकभावं निगीर्य, आनन्दभरितं शान्तं जेगीयते-

**अभिन्नं वेत्ति यो विद्वान् स्वात्मानं च गुरुं शिवम्।**
**तन्नौमि मुक्तमात्मानं विद्याविद्योभयात्मकम्।।** [१]

सेयमानन्दशक्तिराराध्याराधकभावविसर्जनेन अद्वयमयी भूताकाशमपि व्याप्नोति।

शिवशक्त्योः सामरस्यभूः ''यामलं रूपमिति'' ''संघट्ट'' इति ''आनन्दशक्ति''-रिति वा पदकदम्बैरभिधीयमाना अभिनन्द्यमाना च ''पूर्णाहम्भावं'' संविद्विश्रान्तिं चाधिगमयतीति नितरामेषा धन्या। आगमस्वाध्यायः सुतरां प्रबोधयति; स्वात्ममहेश्वर एव इच्छानुसारं चिदानन्दशक्त्या शक्तिः, माया, प्रकृतिः पृथ्वी चेति अण्डचतुष्टय-विभाजितं विश्वप्रपञ्चं स्वात्मनि प्रकाशयन्नपि विश्वोत्तीर्णः सन् स्वे महिम्नि प्रतिष्ठितो राजते।

पारमेश्वरी आनन्दशक्तिरुपलम्भयति नो विचित्राणि शरीराणि, इन्द्रियाणि भुवनानि च- तत्क्रमेऽसौ प्रकाशयति अनन्तानि स्वरूपाणि। अथापि श्रीगुरोर्मार्गदर्शने ''अणु'' -भावमपि ''स्व''-भावं दर्शयन्ती जगदानन्दनिजानन्दाभ्यां स्निग्धबाहुभ्यां स्मृतिपटाक्षेपं वारयन्ती आचार्यवतोऽस्मान्नितरामनुगृह्णाति। शक्तिरेषा एका सती अपि

---

१. उद्धृ०, आ० नि०, पू० प्र० पृ०- ७

अनेकरूपतामुपागच्छति। एका सती "आनन्दशक्ति"- रित्युच्यते त्रिकरूपा चेयम्- "इच्छा-ज्ञानक्रिया"मयी भवति, पञ्चरूपा प्रसरन्ती चैषा चिदानन्दैषणाज्ञानक्रिया-शक्तिरूपेण प्रथते। विश्वप्रपञ्चमञ्चे निखिलनामरूपमयी भासमानापि शिवाभेदमियं न जहाति। भूयोभूय आनन्दशक्तिं प्रकाशयन्तीं गुरुशक्तिमेव जयन्तीं नमामि-

**स्वानन्दरसकल्लोलैरुल्लसन्नस्म्यहर्निशम्।**
**यद्-दृष्टिपरिपूतोऽहमाश्रये तत्पदद्वयम्।।**
**गुरुशक्तिर्जयत्येका मद्रूपप्रविकासिका।**
**स्वरूपगोपनव्यग्रा शिवशक्तिर्जिता यया।।**[१]

अथेदानी प्रत्यभिज्ञावीरशैवदर्शने अधिक्रियेते शक्तिशक्तिमतोस्तुलनामध्येतुम्। तत्र च सिद्धान्तशिखामणिः पूर्णताप्रत्यभिज्ञा चेति जीवातुस्वरूपे ग्रन्थरत्ने भवतः।

## अस्ति त्रिविधं दुःखं, तज्जिहासा च

सन्ति तावत् प्राणिनो निजसामर्थ्यमनुसरन्तः सरन्तः संसारसागरमपारं सन्ततं चेष्टमानाः। सा चैषा चेष्टा प्रतिकूलवेदनीयानि दुःखानि व्यपोहितुमनुकूलवेदनीयानि सुखानि चावाप्तुमनवरतमनुष्ठीयते।

## अध्यात्मदर्शनमेव दुःखं समूलघातं हन्ति

तत्र गुरुपरम्परापूतागमानुगृहीतैरेव मानवैर्निश्चीयते यत् सत्स्वपि लौकिकवैदिकेषु शतधारेष्वथ सहस्रधारेष्वपि क्षयातिशययुक्तेषु सदसदुपायेष्वध्यात्मदर्शन-मेवोभयविलक्षणो वरेण्यः क्षयातिशयवर्जितः शिवमयो जयशीलः पन्था इति। यथाहुरत्रभवन्त आर्याभ्यामीश्वरकृष्णाचार्याः-

**दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्।।**

**दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।**
**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ।।इति।**[२]

तदिदं निगमागमसंविभक्तमध्यात्मदर्शनं नानाप्रस्थानभेदभिन्नं स्वसादृश्यमुपेयुषे समुपदिष्टं मङ्गलशतैरनुविद्धममङ्गलभञ्जकमुल्लसत्प्रतिभाविराजितमारादाराजते। न च तत्र न्यूनाधिकविकल्प-कल्पनमधिकल्पनाधिनाथमवकल्प्यते। यथाहुराचार्यानुगृहीतात्मानः सदाचारपूतात्मानः शिवात्मानो गुरवः-

**साख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**एतानि मानभूतानि नोपहन्यानि युक्तिभिः।।इति।**[३]

---

१. पू०प्र०का०, २/२, १/९.  २. सां०का०- १-२,  ३. सि.शिखा. ५/४.

**शैवः शाक्तस्तथा वेदपाञ्चरात्रादिभेदतः।**
**आगमो विविधो नित्य ईश्वरेणैव दर्शितः।।**[1]

**यथैव जीवनोपायाः फलभेदविवर्जिताः।**
**दृश्यन्ते विविधा लोके विविधा आगमास्तथा।।**[2]

**अतोऽधिकारिणं भिन्नं भिन्नमुद्दिश्य वर्तते।**
**शास्त्रं गुरुश्च विविधं स्वसंविदुपकारकम्।।**[3]

## निगमागमशब्दव्युत्पत्तिः

तत्र निःशेषेण गमयत्यवबोधयति निषेधप्राधान्येन विप्रकृष्टमप्यर्थजातमिति निगमो वेदः। आसमन्तात् प्रतीयमानं वस्तुजातं विधिमुखेन अहमर्थतया गमयतीति आगमस्तन्त्रः। अभयत्र निगमागमयोः प्रतिपादितानि प्रस्थानशतमनोरमाणि सकलानि किल दर्शनान्यागम-शब्दैकशब्दितानि भवन्ति, "आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः" इति व्युत्पत्तेः।

## तन्त्रमेवागमः, तन्त्रं त्रिविधम्

**आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ।**
**मतं श्रीवासुदेवस्य आगमस्तेन कीर्तितः।।**

इति निरुक्त्या तन्त्रपरको ह्येष यदागमशब्दः। तदेतत् तन्त्रं त्रेधा विभज्यते- ब्राह्मणतन्त्रम्, बौद्धतन्त्रम्, जैनतन्त्रं चेति। यथोक्तम्-

**चित्तभेदान्मनुष्याणां शास्त्रभेदो वरानने।।इति।**[4]

तत्र फलभेदवर्जितम्, उपास्यदेवताभेदभिन्नं ब्राह्मणतन्त्रं त्रिधा प्रभिद्यते-शैवं शाक्तं पाञ्चरात्रं चेति। तत्र शैवतन्त्रे चत्वारो दर्शनस्कन्धा राजन्ते-सिद्धान्तशैवं द्वैतप्रतिपादकम्, प्रत्यभिज्ञादर्शनमद्वैतप्रतिपादकम्, लकुलीशपाशुपतं द्वैताद्वैत-प्रतिपादकम्, वीरशैवं शक्तिविशिष्टाद्वैतप्रतिपादकं चेति।

## शिवाशिवयोः समो महिमा

सर्वेषां शैवतन्त्राणामुत्तरं तन्त्रं सिद्धान्तशिखामणिरिति संज्ञया गीयते[5]। तत्र

---

१. पू.प्र.का. १/२८५.

२. पू.प्र.का. १/२९१.

३. पू.प्र.का १/३१०.

४. मा.वि.त. उद्धृ. पू.प्र.का. १/३०८.

५. सि.शिखा. १/३१.

मङ्गलमाचरद्भिः श्रीशिवयोगिशिवाचार्यैः परशिवाय स्वातन्त्र्यशक्त्या स्वस्मिन् जगच्चित्रमातन्वते प्रह्वीभावः प्राकट्यमुन्नीतः-

**त्रैलोक्य - सम्पदालेख्य-समुल्लेखनभित्तये।**
**सच्चिदानन्दरूपाय शिवाय ब्रह्मणे नमः।।** [१]

शिवस्तुतिकृतोऽप्याहुः-

**निरुपादान - सम्भारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने।।इति।** [२]

शक्तिमान् उपायोपादानादिनिरपेक्षो भगवान् भूतभावनो भावाभावमण्डल-प्रपञ्चाविर्भावहेतुः सच्चिन्निरतिशयसुखात्मा; शक्तिश्चैतदीयाम्बाऽस्माकं गर्भीकृत-शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वनिचया शिवाङ्कगा शिवानुग्रहशालिभिरुपास्यते-

**सच्चिदानन्दरूपाय सदसद्व्यक्तिहेतवे।**
**नमः शिवाय साम्बाय सगणाय स्वयम्भुवे।।**

**सदाशिवमुखाशेष -तत्त्वमौक्तिकशुक्तिकाम्।**
**वन्दे माहेश्वरीं शक्तिं महामायादिरूपिणीम्।।** [३]

## देवाधिदेवो महेश्वरः

अनुत्तरः परशिवो ह्येष प्रत्यक्षतन्मूलप्रमाणसिद्ध्यपेतो मानप्राणसमर्पणोऽपरिच्छिन्नविभवो भवः प्रपञ्चमयस्तदुत्तीर्णश्च प्रोल्लसति। ततोऽनतिरिच्यमानस्वरूपा निरतिशयसमर्चारूपा अर्च्यैरर्चनीया गीतगतिमहिमाऽक्षुद्रा रुद्राणी मुद्राभावनादिभिरवेद्या सद्वेद्यान्नपूर्णा च पराम्बा-

**परिच्छेदकथाशून्यं प्रपञ्चातीतवैभवम्।**
**प्रत्यक्षादिप्रमाणानामगोचरपदे स्थितम्।।**

**तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।**
**समस्तलोकनिर्माण - समवायस्वरूपिणी।।** [४]

परमेश्वर्या उमया सममासीनमेवं परमेश्वरमासेवन्ते त्रयस्त्रिंशत्कोटिदेवताः। यदुक्तम्-

---

१. सि.शिखा. १/१.

२. शिवस्तो. १/४.

३. सि.शिखा. २/१.

४. सि.शिखा. २/१२.

**वन्दारुदेवमुकुट - मन्दाररसवासितम्।**
**रत्नसिंहासनं दिव्यमध्यस्तं परमेश्वरम्।।**

इत्यादिना।

**उमया सममासीनं लोकजालकुटुम्बया।**
**अपूर्वरूपमभजन् परिवाराः समन्ततः।।** [१]

इत्यन्तम्।

## ईश्वरशक्तिर्माया

परमेश्वरानुग्रहेणावाप्तशिवभावनोऽतिप्राकृतोऽपि न्यक्कृतप्राकृतशरीराद्यहङ्कारोऽणिमादिसिद्धिभिराशिलष्यमाणो महदैश्वर्यमश्नुवानो मोदतेऽगस्त्यवत्। यथाहुः-

**न्यक्कृतप्राकृताहन्तं निरूढशिवभावनम्।**
**तृणीकृतजगज्जालं सिद्धीनामुदयस्थलम्।।** [२]

"सर्वज्ञः पञ्चकृत्यसम्पन्नः सर्वेश्वर ईशते" इति बृद्धजाबालश्रुतेः शुद्धोपाधिर्महेश्वरो महामायाशक्तिवशात् सद्योजातादिनानामूर्तिधरो जीवानां बुद्धिप्रेरकः सर्वज्ञः सकलप्रपञ्चरचनानिमित्तकारणं नित्यमुक्तो विलसति। यथाहुः-

**मायाशक्तिवशादीशो नानामूर्तिधरः प्रभुः।**
**सर्वज्ञःसर्वकर्ता च नित्यमुक्तो महेश्वरः।।** [३]

## जीवः

तत्रैव जीवस्तु किञ्चित्कर्ता किञ्चिज्ज्ञश्च भवन् "अहं ब्रह्मास्मि" इति तादात्म्यज्ञानशून्य आणवाद्यनादिमलावृतः पाशबद्धः पशुरविद्यामोहितो निजकर्मानुसारं देवतिर्यङ्मनुष्यादिनानायोनिषु पुनः पुनराबध्यमानो बम्भ्रमीति। यथोक्तं शिवाचार्यैः-

**किञ्चित्कर्ता च किञ्चिज्ज्ञो बद्धोऽनादिशरीरवान्।**
**अविद्यामोहिता जीवा ब्रह्मैक्यज्ञानवर्जिताः।।** [४]

जीवानां कर्मप्रेरकः साक्षी ईश्वरोऽङ्गीक्रियते, योऽसौ हितमार्गोपदेशेन जीवमनुगृह्णाति। अनुगृहीतस्यास्य कस्यचिदेव ज्ञानोदयेन मुक्तिर्भवति।

---

१. सि.शिखा. ३/९,३६.

२. सि.शिखा. ४/३२.

३. सि.शिखा. ५/४६.

४. सि.शिखा. ५/४७.

**परमेश्वरः**

**एतेषां देहिनां साक्षी प्रेरकः परमेश्वरः।**
**एतेषां भ्रमतां नित्यं कर्मयन्त्रनियन्त्रणे।।** [१]

यथा जीवत्वमीश्वरत्वं च परशिवे ब्रह्मणि कल्पिते स्तः, तथैव भोज्यत्वं प्रेरकत्वं च तत्रावकल्पितम्। यथाहुः शिवयोगिनः-

**चन्द्रकान्ते यथा तोयं सूर्यकान्ते यथानलः।**
**बीजे यथाङ्कुरः सिद्धस्तथात्मनि शिवः स्थितः।।**

**आत्मत्वमीश्वरत्वं च ब्रह्मण्येकत्र कल्पितम्।**
**बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्।।**

**गुणत्रयविभेदेन परतत्त्वे चिदात्मनि।**
**भोक्तृत्वं चैव भोज्यत्वं प्रेरकत्वं च कल्पितम्।।**

**गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी।**
**तद्वैषम्यात् समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा।।** [२]

## अनुग्रहं विना चिदात्मनि श्रद्धा नोदेति

परमेश्वरानुग्रहवशात् सत्संस्कारोदयान्नित्यानित्यविवेकिनः कस्यचन पुण्यात्मनो नितान्तनिर्मलस्वान्तस्यानात्मनि प्रपञ्चे हेयत्वभावना, चिदात्मनि च श्रद्धाभावना समुदेति-

**नित्यानित्यविवेकिनः सुकृतिनः शुद्धाशयस्यात्मनो**
**ब्रह्मोपेन्द्रमहेन्द्रमुख्यविभवेष्वस्थायितां पश्यतः।**
**नित्यानन्दपदे निराकृतजगत्संसारदुःखोदये**
**साम्बे चन्द्रशिरोमणौ समुदयेद् भक्तिर्भवध्वंसिनी।।** [३]

## त्रिविधा दीक्षा

नरतनुः शिवगुरुर्दीक्षाविधिना साधकस्य शिवज्ञानविधिना पाशबन्धनक्षयद्वारा पशुपाशभेदनेन पशुपति-शिवरूपतामुन्नयति। सैषा दीक्षा त्रिविधा-वेधारूपा, क्रियारूपा, मन्त्ररूपा चेति।

यथोक्तम्-

---

१. सि.शिखा. ५/५०.

२. सि.शिखा. ५/३९-४२.

३. सि.शिखा. ५/७७-७८.

दीयते च शिवज्ञानं क्षीयते पाशबन्धनम् ।
यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः।।

सा दीक्षा त्रिविधा प्रोक्ता शिवागमविशारदैः।
वेधारूपा क्रियारूपा मन्त्ररूपा च तापस।।[१]

**जगतःकारणं शिवः**

समस्तस्य चराचरस्य जगतोऽभिन्ननिमित्तोपादानकारणं भगवान् शिव एव स्वातन्त्र्यशक्तिसंवलितः। मुमुक्षुभिरभिलषितायां मोक्षसम्पदि; हेतुः- आत्ममहेश्वरानुसन्धानम्, अध्यात्मविद्यासमालोडनम्, गुरुभक्तिश्चेति प्रतिपादितमनुग्रहशालिभिराचार्यैः-

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
आद्यमन्त्येन संयोगादहमित्येव जायते।।

चिद्रूपं हि परं तत्त्वं शिवाख्यं विश्वकारणम्।
निरस्तविश्वकालुष्यं निष्कलं निर्विकल्पकम्।।

सत्तानन्दपरिस्फूर्तिसमुल्लास - कलामयम्।
अप्रमेयमनिर्देश्यं मुमुक्षुभिरुपासितम्।।इति।[२]

अकारःशिव आख्यातो हकारः शक्तिरुच्यते।
शिवशक्तिमयं ब्रह्म स्थितमेकमहं भजे।।

अन्तर्लिङ्गानुसन्धानमात्म - विद्यापरिश्रमः।
गुरूपासनशक्तिश्च कारणं मोक्षसम्पदाम्।।इति च।[३]

देवाधिदेवस्त्रिकालपरिशुद्धो देशकालाकृतीनामपि जनकः सच्चिद्घनानन्दमयस्वभावः स्वपरप्रकाशोऽसौ परमेश्वरोऽशेषमङ्गलास्पदीभूतस्त्रियम्बकः शिवशब्देनाभिधीयते-

**शिवाभिधानहेतुः**

आदितः परिशुद्धत्वान्मलत्रयवियोगतः।
शिव इत्युच्यते शम्भुश्चिदानन्दघनः प्रभुः।।

---

१. सि.शिखा., ६/११-१२.

२. सि.शिखा. ६/३२-३३,२०.

३. सि.शिखा. ६/३८,४४.

**आस्पदत्वादशेषाणां मङ्गलानां विशेषतः।**
**शिवशब्दाभिधेयो हि देवदेवस्त्रियम्बकः।।**

**तस्मान्मुख्यतरं नाम शिव इत्यक्षरद्वयम्।**
**सच्चिदानन्दरूपस्य शम्भोरमिततेजसः।।** [१]

सोऽहमित्यनुसन्धानात्मा योऽसौ परामर्शः, स जीवशिवयोरभेददर्शको मन्त्रः। तत्र भक्तिमार्गप्राशस्त्याय- **''अद्वैतकल्पितं द्वैतमद्वैतादपि सुन्दरम्''** इत्यभियुक्तोक्त्या दाशब्दस्य आदौ सन्निवेशाद् दासोऽहमिति बुद्ध्या इष्टानुसन्धानसमावेशात् सशब्दानुवेधे सदा सोऽहमित्यनुभवावसानतां गच्छति। एवं दासदासोऽहम् , सदा सदा सोऽहमिति पर्यवसानक्रमः समूह्यः।

## प्रणवस्वरूपम्

अत्रेदमवधेयम्-चन्द्रबीजत्वेन वेधरूपस्य सकारस्य, अर्कबीजत्वेन वेदनरूपस्य हकारस्य चेति वर्णद्वयस्य त्यागाद् वृत्तिशून्यः स्वभावादेव वेधशून्यो वेदकमात्रतनुः प्रकाशाख्योऽनुत्तरशिवोऽनाख्यनामधेय ओमित्येकाक्षरब्रह्मपदवेदनीयः प्रपञ्चोत्तीर्णः **''अत्रायं पुरुषः स्वयंज्योतिः''** इति श्रुतिसमधिगम्यः प्रणव इत्याख्यायते। यदाहुर्गूढगहनप्रतिपादननिपुणाः श्रीगुरवः-

**परमात्ममनुर्ज्ञेयः सोऽहंरूपः सनातनः।**
**जायते हंसयोर्लोपादोमित्येकाक्षरो मनुः।**
**प्रणवेनैव मन्त्रेण बोध्यते निष्कलःशिवः।।** [२]

नमः शिवायेति पञ्चाक्षरो मन्त्रः, यज्जपेन जीवः शिवतां व्रजति। यदाहुः श्रीरेणुकभगवत्पादाः-

**अशुद्धो वा विशुद्धो वा सकृत् पञ्चाक्षरेण यः।**
**पूजयेत् पतितो वापि मुच्यते नात्र संशयः।।** [३]

## नवधा भक्तिः

शिवकथाश्रवणम्, स्तोत्रम्, ध्यानम्, पादमर्दनम्, पूजनम्, नतिः, भृत्यत्वम्, मित्रत्वम्, स्वात्मसमर्पणम्- इत्येवं नवधा भक्तिः शिवप्रीतिं जनयति। यथाहुराचार्यचरणाः-

**श्रवणं कीर्तनं शम्भोः स्मरणं पादसेवनम्।**

---

१. सि.शिखा. ८/११-१३.

२. सि.शिखा. ८/२०-२१.

३. सि.शिखा. ८/३८.

**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।**
**एवं नवविधा भक्तिः प्रोक्ता देवेन शम्भुना।।** [१]

वीरशैविनामेकेनैव जन्मना मुक्तिर्भवति-

**एकेन जन्मना मुक्तिर्वीराणां तु महेश्वरि।** [२]

शिवयोगी गुरुरपरो विग्रहः शिवस्येत्यजङ्गमशिवभक्तिरिव जङ्गमशिवगुरु-भक्तिरपि नितरां गरीयसी। शिवयोगिनि तृप्ते शिवः शिवमयं विश्वं च तृप्तिं विन्दतीति न शिवगुरुपूजनं विना अजङ्गमगुरोर्ज्ञानं समुपासनं वा सम्भवतीत्यात्म-गुरु-शिवैक्यबोध एव जीवन्मुक्तलक्षणमभिहितमागमिभिः। यथोक्तमभियुक्तैः-

### स्वात्मगुरुमहेश्वराणामभेदः

**अभिन्नं वेत्ति यो विद्वान् स्वात्मानं च गुरुं शिवम्।**
**तन्नौमि मुक्तमात्मानं विद्याविद्योभयात्मकम्।।** [३]

शिखामणिकृद्भिरपि गीतम्-

**गुरोरभ्यर्चनेनापि साक्षादभ्यर्चितः शिवः।**
**तयोर्नास्ति भिदा किञ्चिदेकत्वात् तत्त्वरूपतः।।इति।** [४]

### अद्वैतकल्पितं द्वैतमद्वैतादपि सुन्दरम्

इदमत्र रहस्यम्-जङ्गमाजङ्गमगुरुपूजने निर्द्धूताद्वैतभावो द्वैतभावमेवाश्रयेत् साधक इति शास्त्रानुशासनम्। तथा चोक्तमभियुक्तैः-

**प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मानमेव च।**
**भेदात् तं पूजयेन्नित्यं न चाद्वैतपरो भवेत्।।इति।** [५]

**विश्वेश्वरो हि सुधिया गलितेऽपि भेदे**
**भावेन भक्तिसहितेन समर्चनीयः।**
**प्राणेश्वरो दयितया मिलितेऽपि भावे**

---

१. सि.शिखा. ९/२.

२. वीरागमः २१.

३. पू.प्र./आ०निवेदनं पृ०-६.

४. सि.शिखा. ९.४१.

५. सि.शिखा. १०.३९.

**चैलाञ्चलव्यवहितेन निरीक्षणीयः।।** [१]

शक्तिविशिष्टाद्वैतसिद्धान्ते परशिवस्य पृथिव्याद्यष्टमूर्त्यधिष्ठातृत्वं प्रतिपाद्यते। ''यस्य पृथिवी[२] शरीरम्'' इत्यारभ्य ''यस्यात्मा शरीरम्'' इत्यन्तं बृहदारण्यकवाक्यं विश्वपरमात्मनोः शरीरशरीरिभावं स्पष्टमभिधत्ते। शरीराणां चान्योन्यभिन्नत्वं विद्यते। यथोक्तम्-

**द्वयमुष्णं द्वयं शीतमनुष्णाशीतलं द्वयम्।**
**द्वयमस्पर्शमित्यष्टौ पान्तु वो हरमूर्तयः।।इति।** [२]

घटादिकस्य कर्ता कुलालादिर्यथा ततो न नातिरिच्यते, एवं कार्यस्य पृथिव्यादिकस्य कर्ता महेश्वरोऽपि। एवं च यथा न घटकुलालयोरभेदः, तथैव पृथिव्यादिमहेश्वरयोरपि। अथापि व्यापकस्य शिवस्य प्रपञ्चव्यापित्वं न विरुध्यते। एवं पृथिव्यादिशिवयोः शरीरशरीरिभावः, जीवपरमात्मनोः प्रेर्यप्रेरकभावश्च शास्त्रसम्मतः। नैतावता अचेतन-किञ्चिज्ज्ञ-सर्वज्ञानामेकरूपत्वं सम्भवति। यथाहुः-

**पृथ्व्यादिकमिदं सर्वं कार्यं कर्ता महेश्वरः।**
**नैतत्साक्षान्महेशोऽयं कुलालो मृत्तिका यथा।।**

**पृथिव्याद्यात्मपर्यन्तः प्रपञ्चो ह्यष्टधा स्थितः।**
**तनुरीशस्य चात्मायं सर्वतत्त्वनियामकः।।**

**शरीरभूतादेतस्मात् प्रपञ्चात् परमेष्ठिनः।**
**आत्मभूतस्य देवस्य नाभेदो न पृथक्स्थितिः।।**

**अचेतनत्वात् पृथ्व्यादेरज्ञत्वादात्मनस्तथा।**
**सर्वज्ञस्य महेशस्य नैकरूपत्वमिष्यते।।** [३]

## नाष्टौ मूर्तयःशिवादतिरिच्यन्ते

अत्राहुराचार्याः- यथा मृदो न भिद्यते कुम्भादिकम्, तथैव शिवाभिन्न-स्वातन्त्र्येच्छाशक्तिसम्भिन्नाकारादिकमष्टकं वपुरपि ''तदभिन्नाभिन्नस्य तदभिन्न-त्वनियमः'' इति नयेन शिवान्न भिद्यते, **''तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः''** इत्यादिश्रुतेः। यथा वा तन्तुभ्यो पटो न भिद्यते, एवं शिवाच्चराचरं जगन्न भिद्यत

१. श्रीदेवस्वरूपगुरोः प्राप्तः, १.

२. (क) बृहदा.

(ख) तु.शाकुन्तल-नान्दी.

३. सि.शिखा. १०/५०-५३.

इति विश्वात्मत्वं शिवस्य प्रतिपादितं भवति। शिवभक्तो हि ज्ञाननिर्धूतमलकल्मषः सम्प्राप्तशिवैश्वर्यो विभाति। यथोक्तम्-

**नित्यं सन्तोषयुक्तानां ज्ञाननिर्धूतकर्मणाम्।**
**माहेश्वराणामन्तःस्थो विभाति परमेश्वरः।।इति।** [१]

शिवयोगिनो विश्वमेतत् शिवमयमाभाति-

**प्रसादे शाम्भवे सिद्धे परमानन्दकारणे।**
**सर्वं शिवमयं विश्वं दृश्यते नात्र संशयः।।** [२]

## स्पृहणीयतमं शिवदास्यम्

शिवभक्त्युद्रेको हि दुर्लभः। तस्य च समस्तसम्पत्समवाप्तिहेतुता प्रत्यभिज्ञानेन प्रसिध्यतीति प्रत्यभिज्ञाकृतः प्राहुः-

**कथञ्चिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्।**
**समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि।।** [३]

सच्चिदानन्दलक्षणो विश्वसम्भवो भवो लिङ्गमित्यभिधीयते, लीनमात्मनि व्याप्तमर्थं विश्वप्रपञ्चं गमयति बोधयतीति व्युत्पत्तेः। यथाहुर्गुरवः-

**चिदानन्दमयः साक्षाच्छिव एव निरञ्जनः।**
**लिङ्गमित्युच्यते नान्यद् यतःस्याद् विश्वसम्भवः।।** [४]

तमिमं लिङ्गात्मकं शिवमात्मतया स्वरूपाधिगमभावनया विपश्यन् साधकः सहभोजीत्युच्यते। नास्य भेदबुद्धिरवशिष्यते शिव-गुरु-विश्व-प्रमातृषु विश्ववृत्तीनामात्मसात्करणादवाप्तशक्तिपातस्य विश्वभुजः साधकस्य। यदुक्तं कृपालुभिर्गुरुभिः-

**शिवं विश्वं गुरुं साक्षाद् योजयेन्नित्यमात्मनि।**
**एकत्वेन चिदाकारे तदिदं सहभोजनम्।।**

**अयं शिवो गुरुश्चैष जगदेतच्चराचरम्।**
**अहं चेति मतिर्यस्य नास्त्यसौ विश्वभोजकः।।इति।** [५]

---

१. सि.शिखा. १०/७६.

२. सि.शिखा. ११/७४.

३. ई.प्र.का. १/१.

४. सि.शिखा. १२/३४.

५. सि.शिखा. १४/३५-३६.

**विश्वहोमी**

विश्वमेधमययज्ञयाजी ह्यसौ स्वात्ममहेश्वराग्नौ पराहन्तात्मनि इदन्तामयहव्यसमर्पणशीलो "विश्वहोमीति" संज्ञया विभूषितो भवति-

**पराहन्तामये स्वात्मपावके विश्वभास्वति।**
**इदन्ताहव्यहोमेन विश्वहोमीति कथ्यते।।** [१]

**सर्वभावमयभावमण्डलं विश्वशक्तिमयशक्तिबर्हिषि।**
**जुह्वतोऽस्ति मम कः समः परो विश्वमेधमययज्ञयाजिनः।।** [२]

**दीक्षागुरुः**

**दीयते परमं ज्ञानं क्षीयते पाशबन्धनम्।**
**यया दीक्षेति सा तस्यां गुरुर्दीक्षागुरुः स्मृतः।।**

**ददाति यः पतिज्ञानं जगन्मायानिवर्तकम्।**
**अद्वैतवासनोपायं तमाचार्यवरं विदुः।।**

**सन्देहवनसन्दोहसमुच्छेद - कुठारिका।**
**यत्सूक्तिधारा विमला स गुरूणां शिखामणिः।।** [३]

न चैष विश्वहोमे दीक्षागुरुं पतिज्ञानप्रदमाचार्यं शिवरूपं विना प्रसिद्ध्यति। यथोक्तम्-

यद्यपि परमं महो भगवान् भास्वान् यस्मिन्नुदिते प्रायेण समेऽपि प्राणिनो जागृता इव जायन्ते तथापि गुरुपदनखज्योतिस्तु ततोऽप्यधिकतरश्लाघनीयम्, यद्भासा अनादिरूपमज्ञानतमः शिष्यस्यापनुद्यते, अवाप्यते (प्रकाश्यते) च जीवन्मुक्तिः। यथोक्तम्-

**शिववेदकरे ज्ञाने दत्ते येन सुनिर्मले।**
**जीवन्मुक्तो भवेच्छिष्यः स गुरुर्ज्ञानसागरः।।** [४]

शिवाचार्याणां तदनुकम्पया प्राप्तशिवभावानां चान्तरा भावपूजा प्रशस्यते। नासौ जागतिकं कृत्यं तृणादधिकमङ्गीकुरुते-

---

१. सि.शिखा. १४/३८.

२. उद्धृ.स्प.का., पृ० ५२.

३. सि.शिखा. १५/७,१५,१७.

४. सि.शिखा. १५-२९.

**क्रियारूपा तु या पूजा सा ज्ञेया स्वल्पसंविदाम्।**
**आन्तरा भावपूजा तु शिवस्य ज्ञानिनां मता।।**

**स्वतन्त्रः सर्वकृत्येषु स्वं परत्वेन भावितः।**
**तृणीकुर्वन् जगज्जालं वर्तते शिवयोगिराट्।।** [१]

शिवगुरोरनुग्रहाद् गुरुभावमुपगतोऽवाप्तशिवभावो निर्धूतविश्वविभ्रमो जीवन्मुक्तो जयति, न चासौ ज्ञानाभ्यासात् परं किमपि तत्त्वमभिमनुते-

**नित्ये निर्मलभावने निरुपमे निर्धूतविश्वभ्रमे**
**सत्तानन्दचिदात्मके परशिवे साम्यं गतः संयमी।**
**प्रध्वस्ताश्रमवर्णधर्मनिगलः स्वच्छन्दसञ्चारवान्**
**देहीवाद्भुतवैभवो विजयते जीवन्विमुक्तःसुधीः।।**

**शिवात्मकमिदं सर्वं शिवादन्यन्न विद्यते।**
**शिवोऽहमिति या बुद्धिस्तदेव ज्ञानमुत्तमम्।।** [२]

परब्रह्म-परशिव परात्मपर्यायभूतमेव स्वयमिति दृढ़भावमनुप्राप्य चिदात्मकं विश्वं प्रपश्यन् शिवयोगी शिवात्मतां व्रजति। ज्ञानामृतसन्तृप्तो जीवन्मुक्तो ह्यसौ सदाचारप्रियं शम्भुं प्रीणितुं लोकं सङ्ग्रहीतुं च धर्माचरणमेवानुसरन् विच्छिन्नक्लेश-कर्मविपाकाशयपाशो मुक्तबन्धनो विचरति-

**पराहन्तामनुप्राप्य पश्येद् विश्वं चिदात्मकम्।**
**सदेहोऽतिभ्रमस्तस्य निश्चिता हि शिवात्मता।।**

**सदाचारप्रियः शम्भुः सदाचारेण पूज्यते।**
**सदाचारं विना तस्य प्रसादो नैव जायते।।** [३]

**मायासिन्धोर्वडवाग्निः**

मायासिन्धुरसौ ब्रह्माण्डबुद्बुदोद्भू राजते, तदवग्रसनो गुरुकृपाकटाक्षवडवानलः साधकं शिवयति-

**ब्रह्माण्डबुद्बुदोद्भूतं मायासिन्धुं महत्तरम्।**
**गुरोः कवलयत्याशु कटाक्षवडवानलः।।** [४]

---

१. सि.शिखा. १५.४४,६५
२. सि.शिखा. १५.७१,१६.३
३. सि.शिखा. १६.५३,६६
४. सि.शिखा. १७/६९.

श्रीगुरुणा शैवागमेनोपदिष्टः प्राप्तबोधमहाफलः साधकः शिवतां प्राप्य इहैवानेनैव देहेन जीवन्नेव मोक्षलक्ष्मीमवाप्य जनानुपकुर्वन् अविशेषेण पूज्यानामपि पूज्यः सञ्जायते। यथाह भगवती श्रुतिः-

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।।इति।** [१]

गुरवोऽप्याहुः-

**मुक्तः संशयपाशतः स्थिरमना बोधे च मुक्तिप्रदे**
**मोहं देहभृतां दृशा विघटयन् मूलं महासंसृतेः।**
**सत्तानन्दचिदात्मके निरुपमे शैवे परस्मिन् पदे**
**लीनात्मा क्षपितप्रपञ्चविभवो योगी जनैःसेव्यते।।** [२]

श्रीगुरुकृपाध्वस्तध्वान्तो निरस्तजीवभावो निर्गतसकलकल्मषो विगलितभोक्तृभावो जीवेश्वरसाधारणीभूतात्मतया परिस्फुरति। न चास्य पूजाध्याननियन्त्रणात्मिका काचिद् भावनाऽपेक्ष्यते। यदाहुः-

**जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।**
**निरस्यते गुरोर्बोधाज्ज्ञानशक्तिः प्रकाशते।।**

**यथा पद्मपलाशस्य न सङ्गो वारिणा भवेत्।**
**तथा देहजुषोऽप्यस्य न शरीरेण सङ्गतिः।।**

**शून्ये चिदम्बरे स्थाने दूरे वाङ्मनसाध्वनः।**
**विलीनात्मा महायोगी केन किं वापि भावयेत्।।**

**न कर्मबन्धे न तपोविशेषे न मन्त्रयोगाभ्यसने तथैव।**
**ध्याने च बोधे च तथात्मतत्त्वे मनःप्रवृत्तिः परयोगभाजाम्।।** [३]

सर्वशक्तिसम्पन्नमवच्छेदवर्जितं स्वात्ममहेश्वरमभिज्ञायाद्वयशिवभावमापन्नो योगी योगीशादन्यन्नैव काङ्क्षति-

**देशकालाद्यवच्छेदविहीनं नित्यनिर्मलम्।**
**आनन्दं प्राप्य बोधेन नान्यत् काङ्क्षति संयमी।।** [४]

---

१. मुण्डकोप. २/२/८.

२. सि.शिखा. १७/६३.

३. सि.शिखा. १७/८६-८९.

४. सि.शिखा. १९.१०.

अवाप्तशिवतत्त्वो मायारजनीमतीत्य बोधसूर्योदये निरस्तव्यापारश्चिररात्राय मोदते-

**मायारजन्या विरमे बोधसूर्ये प्रकाशिते।**
**निरस्तसर्वव्यापारश्चित्रं स्वपिति संयमी।।**[१]

भगवती गीतापि एनमर्थं संवदति-

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।**[२]

## आत्मसंविदेव समुपास्या

घटोपाधिकाकाशवत् पिण्डस्थितः स्वात्मा स्वरूपतः परिपूर्ण एवास्ते। तत्प्राकट्यहेतवे तु परासंवित् स्वातन्त्र्यशक्तिर्भगवती परमं समुपासनीया-

**ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति।**
**एतेऽहन्तायाःकिल पर्यायाः सद्भिरुच्यन्ते।।**३

**घटोपाधिर्यथाकाशः परिपूर्णः स्वरूपतः।**
**तथा पिण्डस्थितो ह्यात्मा परिपूर्णः प्रकाशते।।**

**नित्ये निर्मलसत्त्वयोगिषु परे निर्वासने निष्कले**
**सर्वातीतपदे चराचरमये सत्तात्मनि ज्योतिषि।**
**संविद्व्योम्नि शिवे विलीनहृदयस्तद्भेदवैमुख्यतः**
**साक्षात् सर्वगतो विभाति विगलद्विश्वः स्वयं संयमी।।**[४]

बन्धनिवृत्त्याऽद्वैतभैरवः प्रतिप्रकाशते-

**अखण्डसच्चिदानन्द - परब्रह्मस्वरूपिणः।**
**जीवन्मुक्तस्य धीरस्य माया कैङ्कर्यवादिनी।।**[५]

यथा हि स्वप्ने एकाकी एव निरुपादानो जीवो दृश्यादित्रिपुटीजालं जगद् विनिर्माति, स्वेच्छयैवोद्गतं स्थापयति विलापयति च; तथैव शिवो व्यावहारिकं जगदेतत्

---

१. सि.शिखा. १९.२३.

२. श्रीमद्भगवद्गीता. २.६९.

३. विरूपा.पञ्चा. १/८.

४. सि.शिखा. १९.५२, ९७.

५. सि.शिखा. २०.१६.

सृष्ट्यादिना योजयति। तज्ज्ञः साधकः शिवयोगी त्रिपुटीमयप्रपञ्चोत्तीर्णः परावस्थामुपेतो नान्यद् विजानाति, पश्यति, शृणोति वा-

**जाग्रत्-स्वप्न-सुषुप्तिभ्यः परावस्थामुपेयुषः।**
**किंवा प्रमाणं किं ज्ञेयं किं वा ज्ञानस्य साधनम्।।** [१]

सर्वज्ञानक्रियाशक्तिः परमेश्वरः सविमर्श एव भवेत्, न तु निर्विमर्शो निर्गुणो निष्क्रियश्च स्फटिकादिजडोपमः-

**पराहन्तासमावेशपरिपूर्णविमर्शवान्।**
**सर्वज्ञः सर्वगः साक्षी सर्वकर्ता महेश्वरः।**
**विश्वाधारमहासंवित्प्रकाशपरिपूरितम्।**
**पराहन्तामयं प्राहुर्विमर्शं परमात्मनः।।** [२]

शिवशक्तिमयं विश्वं पश्यतामागमिनां पराहन्ताऽवाप्त्या चिन्मयी लोकानुग्रह-कारिणी स्थितिर्नितरामानन्ददायिनी भवति-

**अकारः शिव आख्यातो हकारः शक्तिरुच्यते।**
**शिवशक्तिमयं ब्रह्म स्थितमेकमहं भजे।।**

**अहन्तां परमां प्राप्य शिवशक्तिमयीं पराम्।**
**ब्रह्मभूयंगतो योगी विश्वात्मा प्रतिभासते।।** [३]

नेह द्वैतिनामद्वैतिनामिव वा जडं जडकल्पं वा मोक्षमभिप्रयन्त्यागमिनः, प्रत्युत सर्वाकारत्वसम्प्राप्त्या स्वमयं चिदानन्दमयं विमर्शशालिनम्। यथाहुः-

**न देवत्वं न मानुष्यं न तिर्यक्त्वं न चान्यथा।**
**सर्वाकारत्वमाख्यातं जीवन्मुक्तस्य[३] योगिनः।।**

**यस्य कार्यदशा नास्ति कारणत्वमथापि वा।**
**शेषत्वं नैव शेषित्वं स मुक्तः पर उच्यते।।** [४]

---

१. सि.शिखा. २०.२५.

२. सि.शिखा. २०.३३.

३. (क) सि.शिखा. २०.३९-४०.

(ख) इतिवा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः ।। स्प.प्र.का.३०.

४. सि.शिखा.२०.४७-४८.

**ग्रन्थसम्पूर्तिः -** ईश्वराद्वैतवादस्य साम्राज्यमत्र विलसति। न ह्यत्र कस्यचन त्यागोऽपेक्ष्यते परिग्रहो वा। संविन्मयी परा भगवती शिवा नित्यमाश्लिष्यति भगवन्तं परमेश्वरमनुत्तरशिवम्। स्वभावादेव देवदेवः स्वातन्त्र्येणोपेयरूपेण प्रतिभासमानो विमर्शमयीं संवित्तिमालिङ्गते, यथोक्तम्-

**न तया रहितो देवो देवी तद्रहिता नहि।**
**इच्छाशक्तिं महेशानीं सर्वसम्पत्प्रदायिनीम्।**
**अनुरक्तां सतीं हित्वा नोपैत्यन्यां महेश्वरः।।** [१]

निराशंसो निजानन्दः स्वात्ममहेश्वरः स्वाभिन्नया शक्तिमहेश्वर्य्या विश्वोत्तीर्णतया विश्वरूपतया च क्रीडनात्मा विमोहनो लीनातनुर्नृत्यति-

**यत्कटाक्षविलासेन शिवतामेति वै शिवः।**
**नौमि तां परमामाद्यां सतःशक्तिं शिवात्मिकाम्।।**

**स्वरूपमनुगामिन्या विलसद्विश्वरूपया।**
**शिवोऽपि समतामेति पशुतां वा ययेच्छया।।** [२]

शिववपुर्गुरुः शिष्याय गुरुत्वं वितरति। शिवशक्तेरपि गरीयसी गुरुशक्तिः शिष्याय स्वस्वरूपं प्रकटीकुर्वन्ती शिवशक्तिं पराजयते स्वरूपगोपनव्यग्राम्-

**गुरुशक्तिर्जयत्येका मद्रूपप्रविकासिका।**
**स्वरूपगोपनव्यग्रा शिवशक्तिर्जिता यया।।** [३]

श्रीगुरोरङ्घ्रिद्युतिः सर्वोत्कर्षेण विराजते, येयं शिवैक्याख्यातिरूपां संसारावस्थामपि शिवयति, विवस्वतः शक्तिमप्यसौ न्यक्करोति, यदसौ ऐकान्तिकमात्यन्तिकं जन्मजन्मान्तरीयं मलमन्धन्तमोऽपसार्य चिदानन्दमय-महेश्वरस्वरूपमुल्लासयति-

**नौमि तां जयतात् सैव यया साक्षात्कृता मया।**
**शिवैक्याख्यातिसंसारावस्थापीयं शिवात्मिका।।**

**अस्त्यस्मिन् महसां महानिधिरसौ देवो विवस्वान् महान्**
**यस्मिञ् जाग्रति जाग्रतीव रजनीसुप्ता इमे जन्मिनः।**
**किन्त्वेका महती ततो विजयते श्रीदैशिकाङ्घ्रिद्युति-**
**र्यद्भासाच्छुरितं चिरन्तनतमो हित्वैव जागर्त्ति सत्।।** [४]

---

१. पू.प्र.का. १.४०५.

२. पू.प्र.का. १.३-४.

३. पू.प्र.का. १.९.

४. (क) यत्परापरभूस्पर्शि यत्संकल्पलयोदयौ ।
स्पन्दरूपं ज्ञरूपं तच्छक्तीशं स्वबलं नुमः ॥ स्प.का. ६.

भोगानपि मोक्षयन्ती सेयं प्रत्यभिज्ञा धन्या, या स्वसंवेदनरूपपराहम्परामर्शमयी आगमेषु, स्पन्दस्वरूपा वसुगुप्तकृतौ, लब्धजीवना उत्पलदेवकृतौ, प्रसृता श्रीमदभिनवगुप्तपादकृतौ पूर्णतां गता शिवयोगिनमाचार्यवरं श्रीरामेश्वरं सम्प्राप्य। यदुक्तम्-

**संवित्स्वभावः किल शैव आगमः**
**स्पन्दत्वमाप्तो वसुगुप्तमागतः।**
**सा प्रत्यभिज्ञाभिनवार्चितौत्पली**
**पूर्णत्वमाप्ता समुपेत्य मामपि।।** [१]

स्वेच्छया ह्यसौ स्वां शक्तिमवष्टभ्य पुंस्त्वस्त्रीत्वविकल्पनादिना भोक्तापि भोग्यात्मतां व्रजन् विश्वविभवोऽपि विश्वोत्तीर्णः प्रतिभासते-

**वक्तव्यं किमु तत्र यत्र भगवान् वेत्तैव वेद्यो भवञ्**
**शक्तिं स्वामहमात्मिकां भगवतीं पश्यन् स्वयं मुह्यति।**
**पुंस्त्वस्त्रीत्वविकल्पनां सुघटयन् भोक्तैव भोग्योऽपि स-**
**न्नच्छन्नोऽपि विभाति विश्वविभवः स्वच्छन्दया स्वेच्छया।।** [२]

अनुत्तराख्य एष शिवो महामन्त्रमय्या शक्त्या नित्यसृष्टियुक्तो विराजते-

**परवाङ्मयमन्त्रात्मवीर्यसर्गमयः शिवः।**
**स्ववीर्यघनतारूपेदन्तास्फुरणरूपया।।**
**युज्यते सततं सृष्ट्या स्वीयशक्तिविसृष्टया।**
**अदेशकालकलितस्पन्दात्मानुत्तराभिधः।।** [३]

भावाभावात्मकस्य विश्वप्रपञ्चस्य प्रकाशाभिधः शिव एव स्वभावः सारं च। यथोक्तं श्रीमदुच्छुष्मभैरवे स्पन्दकारिकायां च-

**''यावन्न वेदका एते तावद् वेद्याः कथं प्रिये।।''इति,**

**''भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः।।''इति च।** [४]

---

(ख) भावग्रहाद्यचरमदशाद्वयोल्लासिनिर्वृतिसुपूर्णः ।
जगदानन्दमयोऽसौ सामान्यस्पन्द इत्युक्तः ।। मा.वि.वा. २.२०.

(ग) ततः स्वातन्त्र्यनिर्मेये विचित्रार्थक्रियाकृति ।
विमर्शनं विशेषाख्यः स्पन्द औन्मुख्यसंज्ञितः ।। श्रीत.आ. ५/८१.

१. पू.प्र.का. १.१५.

२. पू.प्र.का. १.१९.

३. पू.प्र.का. १.१७-१८.

४. पू.प्र.का. १.२७-२८.

प्रकाशरूपः शिव एव संविदिति संवित्तिरिति स्वसंवेदनमिति वा शास्त्रेषु प्रोच्यते। न चैषा संवित् प्रमाणाधीनप्रकाशा, न वाऽस्या विश्वरूपाया देशकालाकारादिना नियन्त्रणम्। यथाहुराचार्यवर्य्याः-

**प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।**
**किं प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति।।**

**सर्वावभासकस्यास्य परापेक्षा न विद्यते।**
**निरपेक्षोऽस्त्यतःपूर्णः स्वतन्त्रःसर्वभासकः।।**

**न नियताकृतिस्तस्य देशो न नियतः प्रभोः।**
**यतो हि विश्वरूपत्वे नैयत्यं प्रतिबन्धकम्।।** [१]

उपदेश्यं प्रति कीदृगेष सहजोपदेशो यच्छिवादव्यतिरिक्तः सविमर्शोऽसौ विश्वरूपो योयमुपदेश्यः साधको जिज्ञासुः।

**यस्य संविदि सर्वोऽयं भाववर्गोऽवभासते।**
**प्रतिबिम्बतया सोऽपि शिवः सर्वेश्वरो भवान्।।** [२]

त एवोपासकाः शिवतत्वं प्रपश्यन्ति, ये तावदात्मतत्त्वं साधु प्रपद्यन्ते। यथा च प्रभा भास्वतो न भिद्यते, शर्करा वा माधुर्यान्न भिद्यतेः तथैव शक्तिरपि शक्तिमतो न भिद्यते, गुरोर्वा शिष्यः। सर्वलक्षणलक्षितः सद्गुरुः स्वात्ममहेश्वरः परापरमयो ज्ञानक्रियायुतो ह्यानन्दमयः सदा जयति शिवोऽनुग्रहमूर्तिः। यथाहुः-

**स ह्यखण्डितसद्भावं शिवतत्त्वं प्रपश्यति।**
**यो ह्यखण्डितसद्भावमात्मतत्त्वं प्रपद्यते।।**

**न ह्यस्य गुरुणा शक्यं स्वं ज्ञानं शब्द एव वा।**
**धियि रोपयितुं तेन स्वप्रबोधक्रमो ध्रुवम्।।** [३]

**गुरुशिष्यस्वरूपेण दृश्यते यद्यपि द्विधा।**
**तथापि गुरुरेवैकः सर्वलक्षणलक्षितः।।** [४]

---

१. पू.प्र.का. १.३८-४०.

२. पू.प्र.का. १.२७०.

३. श्रीत.आ. ४.२७५,१०१.

४. पू.प्र.का २.५९८.

**यत्संविच्छविभिन्नभेदतिमिरा एतादृशाः स्मो वयं।**
**तं नित्यं स्वगुरुं परापरमयं ह्यानन्दरूपं नुमः।।** [१]

आचार्यमभिनवगुरुं शरणीकरवाणि-

**केतकीकुसुमसौरभे भृशं भृङ्ग एव रसिको न मक्षिका।**
**भैरवीयपरमाद्वयार्चने कोऽपि रज्यति न भेदमोहितः।।** [२]

तदेवं महाप्रभावैषा काचिद् **आगमसंविद्** - भट्टारिका

सदानुध्येया महार्था। धन्यामेनां नमामि;

**अनन्तजन्मार्जितपुण्यराशेः फलं त्वदीयस्मृतिगोचरत्वम्।**
**लब्धस्य मे देव सदैव चेतो विलोकितुं वाञ्छति तेङ्घ्रिपद्मम्।।** [३]

**का न शोभा न को ह्लादः का समृद्धिर्न वा परा।**
**को वा न मोक्षः कोऽप्येष महादेवो यदर्च्यते।।** [४]

**त्वं पूर्णरूपोऽसि विभासि पूर्णः सर्वञ्च पूर्णेऽथ समत्र पूर्णम्।**
**अतः स्फुटं मे स्तुतिवागपीयं व्यक्तिं दधात्येव हि पूर्णतायाः।।** [५]

समाप्तोयम् महामहोपाध्यायानामाचार्यरामेश्वरझामहाशयानां कृपाभाजनेन डॉ. कमलेशझा-शर्मणा विरचितः श्रीप्रत्यभिज्ञामोदः इतिनामधेयः चतुर्थो विमर्शः।

**।।समाप्तश्चायमागमसंविदभिधानो ग्रन्थः।।**



---

१. पू.प्र.का २.५९८.

२. पू.प्र.का २.६२२.

२. श्रीत.आ. ४.२७६.

३. श्रीगु. स्तु. - पृ. १७.

४. शि.स्तो. १७.२५

५. पू. प्र. का. १.२०३



## डॉ. कमलेश झा

जन्म-तिथि- ०४-०६-१९६०

पितृ-नाम- पं. श्रीभवनाथझा

योग्यता- आचार्यः, पी-एच.डी.

पदम्- अध्यक्षः -
धर्मागम-विभागः, संस्कृतविद्याधर्मविज्ञान-संकायः,
बनारसहिन्दू-यूनिवर्सिटी, वाराणसी-५

लेखनम्- म० म० आचार्य - रामेश्वरझा
- रचित - ग्रन्थ - रत्नस्य

१- पूर्णताप्रत्यभिज्ञायाः
२- संवित्स्वातन्त्र्यस्य
३- अहमर्थसंज्ञकस्य
४- श्रीगुरुस्तुतेः - अनुवादः।

शोध-निबन्धाः - १५

शोधपर्यवेक्षणम् - १५ शोध-प्रबन्धानाम्।

अनुग्रहभाजनम्- श्रीगुरूणाम्, विदुषां,
धर्माचार्याणाञ्च।

प्रियः- छात्राणाम्।

भक्तः- स्वात्म-गुरु-परमेश्वराणाम्।

दासः- अन्नपूर्णा-विश्वेश्वरयोः।



# ।। आगम-संविद् ।।

प्रभुणा भवता यस्य जातं हृदयमेलनम्।
प्राभवीणां विभूतीनां परमेकः स भाजनम्।।

आगमाः किल पारमेश्वर्यो वाचः साधनाव्यक्तीः राद्धान्तांश्च दार्शनिकानात्मसात्कुर्वन्ति। तत्र यद्यपि द्वैत-द्वैताद्वैत-अद्वैत-शक्तिविशिष्टाद्वैत-शिवाद्वैतसिद्धान्ताः भक्तिप्रवणाः साधनासंवलिताः सन्ति विकीर्णाः घने वने औषधय इव तथापि चायं चायं तैस्तैर्मनीषिभिरागमतन्त्रग्रन्थेभ्यः सूत्राद्यात्मका ग्रन्था विरचितास्ते ते वादाश्च प्रवर्तिताः। तेषु अङ्गाङ्गिरूपतां गतेषु अद्वयस्य प्राधान्यमाविरकारि समन्वयविधौ नैपुणीमाकलयद्भिर्विद्भिर्महद्भिः। तद्वत् परमेश्वरनिःश्वासात्मके वैदिके युक्तितर्कानुभवप्रवणे अवैदिके च वाङ्मये प्रथितेषु द्वैताद्वैतादिनानासिद्धान्तेषुअद्वयस्यैव प्राधान्यम् आयतौ स्वीक्रियमाणमाभाति। आगमसंविदः सम्यगवबोधाय यावधारणा ईश्वराद्वयवादस्य, सौक्ष्म्येण तद्रहस्यमाकलयितुं सौगतसिद्धान्तसिद्धस्य विज्ञप्त्यद्वैतस्य, शून्याद्वैतस्य च याथातथ्येनावगतिर्यथा नूनमपरिहार्या तथैव वैदिकदर्शनसिद्धान्तचूडामणेर्ब्रह्माद्वयस्यापीति नैव तिरोहितं सारासार-विवेकबुद्धिशालिनां भक्तिज्ञानतपोमयजीवनानां बुधानामिति ग्रन्थोऽयं योगाचारसम्मतं विज्ञप्त्यद्वैतम्, माध्यमिकसम्मतं शून्याद्वैतम्, वेदान्तिविकल्पितम् ब्रह्माद्वैतं, प्रत्यभिज्ञाविजृम्भितमीश्वराद्वैतं च चारु वादकथाशैल्या सुविशदं निरूप्य संविदो विकस्वरानामोदानाकलयन् विजयते।

इति यज्ज्ञेयसतत्त्वं दर्श्यते तच्छिवाज्ञया।
मया स्वसंवित्सत्तर्क-पतिशास्त्रत्रिकक्रमात्।।
मङ्गलाय पवित्राय निधये भूषणात्मने।
प्रियाय परमार्थाय सर्वोत्कृष्टाय ते नमः।।

Rs. 325